अत्रेदं कौतुकाद्विमृश्यते—अनुपदनिर्दिष्टं 'किं निश्शङ्कं' इत्यादिपद्यं दीक्षितेन्द्रीयमित्यत्र किमपि प्रमाणं नोपलभामहे। न दृश्यते च क्वापि तदीयेषु प्रबन्धेषु। प्रत्युत पण्डितराजजगन्नाथप्रणीत एव भामिनीविलासाख्यग्रन्थे तुरीयशान्तविलासप्रकरणान्ते पद्यमिदमुपलभ्यते। दीक्षितेन्द्रीयमेवैतत्पद्यं जगन्नाथेन तत्रोपात्तमिति तु न वक्तुं शक्यम्। यतस्तद्ग्रन्थान्ते तेनैव जगन्नाथेन—

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया।
मदीयपद्यरत्नानां मञ्जूषैषा कृता मया॥

इत्यनेन तत्र स्वग्रन्थे स्वीयपद्यसंग्रहस्यैव सुस्पष्टमेवाभिधानात्। इत्थमेवान्यत्रापि स्वग्रन्थे परकीयपद्यानुदाहरणमेव प्रतिजानानेन तेनैव जगन्नाथेन—

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयाऽत्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसाऽपि गन्धः
कस्तूरिकाजननशक्तिमता मृगेण॥

इति रसगङ्गाधरे सप्रौढप्रकाशनमभ्यधायि। तथा च 'किं निश्शङ्कं' इत्यादिपद्यस्याप्पय्यदीक्षितेन्द्रीयत्वकथनं निर्मूलमेवेति तद्बलाज्जगन्नाथस्य दीक्षितेन्द्रकालिकत्वकथनमनादरणीयम्॥

अत्रायमप्यपरोऽन्यैरङ्गीकृतो जगन्नाथस्य दीक्षितेन्द्रकालिकत्वसमर्थनप्रकारः। यथा—पुरा किल शेषकृष्णाह्वयसुधीमणेस्सकाशादधिगतव्याकरणशास्त्रो वैयाकरणसिद्धान्तकौमुदी-शब्दकौस्तुभ-प्रौढमनोरमादिव्याकरणप्रबन्धप्रणेता भट्टोजिदीक्षितनामा आन्ध्रगाहस्सुधीमणिरस्माद्दीक्षितेन्द्रादधिगताद्वैतवेदान्तः काश्यां निवसति स्म। तदात्व एव व्याकरणालङ्कारादिशास्त्रपारदृश्वा जगन्नाथाह्वयः पण्डितवरो यवनप्रभुणा डिल्लीश्वरेण पण्डितराजबिरुदसंमानितस्तत्सभायां पण्डितप्रकाण्डो बभूव। स चायं जगन्नाथः कदाचिद्राजसभायां समागतां कांचन यवनकन्यकामुपवर्णयेति राज्ञा समादिष्टः—

इयं सुस्तनी मस्तकन्यस्तकुम्भा
कुसुम्भारुणं चारुचेलं वसाना।
समस्तस्य लोकस्य चेतःप्रवृत्तिं
गृहीत्वा घटे न्यस्य यान्तीव याति॥

इत्युपवर्णयामास। तदिदं चारुतरोल्लेखपरिकर्मितं पद्यमाकर्ण्य परितुष्टेन

तदभिलषितपरिपूरणोत्सुकचेतसा तेन राज्ञा स्वाभिलषितं परिपृष्टोऽयं जगन्नाथसुधीः—

न याचे गजालिं न वा वाजिराजिं
न वित्तेषु चित्तं मदीयं कदाचित्।
इयं सुस्तनी मस्तकन्यस्तकुम्भा
लवङ्गी कुरङ्गीदृगङ्गीकरोतु॥

इति पद्येनात्मनोऽभिलाषातिशयं प्रकाशयामास। तदानीं च स यवनप्रभुः अयि भोः पण्डितराज जगन्नाथ, किमेतदधिगतसकलशास्त्रो भवान् विप्रवर्यो नाकलोकार्गलां यवनकुमारीं कामयत इत्यनुयुक्तो जगन्नाथसुधीः पुनरपि—

यवनी नवनीतकोमलाङ्गी
शयनीयं यदि नीयते कदाचित्।
अवनीतलमेव साधु मन्ये
न वनी माघवनी विनोदहेतुः॥

इति श्लोकेनैवात्मनो मनोरथभूमानमाविश्चकार। ततः परितुष्टस्स राजा तदीयेच्छामनुरुध्यैव तं जगन्नाथं तयैव यवनकन्ययोद्वाहयामास। अस्मान्निमित्ताद्भट्टोजिदीक्षितसुधीर्बहुभिः पण्डितमणिभिस्सहितस्तं जगन्नाथं सुबहु विनिन्दन् विप्रमण्डलाद्बहिश्चकार। ततोऽयं जगन्नाथसुधीरस्मिन् भट्टोजिदीक्षिते एतदनुपङ्गादेतद्गुरावस्मिन्नप्पय्यदीक्षितेन्द्रे चामर्षभारं वहन् भट्टोजिदीक्षितप्रणीतां प्रौढमनोरमां मनोरमाकुचमर्दिनीनाम्ना स्वग्रन्थेन निराचकार। तथा दीक्षितेन्द्रीयाचित्रमिमांसाकुवलयानन्दौ च चित्रमीमांसाखण्डनरसगङ्गाधराह्वयाभ्यां ग्रन्थाभ्यां खण्डयामास। अतोऽयं जगन्नाथसुधीरप्पय्यदीक्षितेन्द्रकालिक इति॥

इदमपि विमर्शकानामादरणसरणिं कथमधिरोहेदिति वयं संचिन्तयामः। तथा हि—स्वप्रणीतानां मुक्तकपद्यानामपि परापहारशङ्कया कुत्रापि स्वग्रन्थे संयोजयितुकामस्य जगन्नाथसुधीन्द्रस्य प्रबन्धेषु कुत्राप्यनुपदनिर्दिष्टेषु पद्येषु कस्यचिदप्यनुपलम्भादश्रद्धेयमेतदित्येव मन्यामहे। जगन्नाथेन भट्टोजिदीक्षिताप्पय्यदीक्षितेन्द्रग्रन्थखण्डने च तत्प्रद्वेष एव निमित्तं, न त्वेतदीयप्रज्ञाप्रकर्ष इति, तथा दीक्षितेन्द्रकाल एव तदीयग्रन्थखण्डनं कृतमित्याद्युक्तौ च प्रमाणमन्वेष्टव्यम्। किंच भामिनीविलासान्त एव—

'शास्त्राण्याकलितानि नित्यविधयस्सर्वेऽपि संभाविताः'

इत्यादिना आत्मनः परिचितसकलशास्त्रत्वं संभावितसदाचारत्वं चोत्कीर्तयतो जगन्नाथसुधीन्द्रस्यात्यन्ताननुगुणे यवनीपरिणये मतिर्वा कथं स्यादित्येतस्य यवनकुमारीपरिणयनं न वयं संमन्यामहे। परं त्वयं पण्डितराजो जगन्नाथः षाजहान्-असफ्खान्-दाराशाहादियवनप्रभुभिस्संमानितस्तत्सभायां पण्डितोत्तमपदवीमलंचकारेत्यत्र न कस्यापि संशयलेशः। अत एव दिल्लीश्वरप्रदत्ताभिलषितपरितुष्टान्तरङ्ग एव जगन्नाथसुधीः—

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः।
अन्यैर्नृपालैः परिदीयमानं शाकाय वा स्याल्लवणाय वा स्यात्॥

इत्यादिना दिल्लेश्वरौदार्यमुपवर्णयन्नात्मनः कृतज्ञतामाविश्चकारेति प्रवादः जगदाभरणासफविलासादिषु एतत्प्रणीतमासफ्खान्दाराशाहादियवनप्रभुवर्णनादिकं चोपपद्यते। न तावता दीक्षितेन्द्रकालिकत्वं त्वस्य वक्तुं शक्यते। यतोऽनेन हि जगन्नाथेनात्मनो नूत्नं वयो दिल्लीवल्लभसामीप्येऽतिवाहितमिति भामिनीविलासान्ते—

‘ दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः ’

इत्युक्तम्। अत्र निर्दिष्टो दिल्लीवल्लभो बाबर्संततिजातः षाजहानाह्वयः। बाबर् समयस्तु A. D. 1530 तमक्रैस्ताब्दपर्यन्तः। बाबर्सुतस्य हुमायूनाह्वयस्य समयः A. D. 1555 तमक्रैस्ताब्दपर्यन्तः। हुमायून्सुतस्याक्बराह्वयस्य समयः A. D. 1605 तमक्रैस्ताब्दपर्यन्तः। अक्बर्सुतस्य सेलिमापराह्वयस्य जिहांघीरस्समयः A. D. 1627 तमक्रैस्ताब्दपर्यन्तः। जिहांघीराह्वयस्य महिषी नूर्जिहानाख्या, तस्याश्च भ्राता आसफ्खानाह्वयः। स च राजवाल्लभ्यात्सुप्रतीत आसीत्। अत एव तमधिकृत्य पण्डितराजेन जगन्नाथेन आसफ्विलासाख्यो ग्रन्थः प्रणीतः। जिहांघीरात्मजष्षाजहानाह्वयो यवनप्रभुः पण्डितराजजगन्नाथस्य प्रधानाश्रयभूतः। षाजहानाह्वयस्य तस्य यवनप्रभोः दाराशाहः—षूजः—औरंगजेब्—मुराद्श्चेति पुत्राश्चत्वार आसन्। एतेष्वग्रिमस्य दाराशाहस्य संस्कृतपाण्डित्यमासीदिति किंवदन्ती। जगन्नाथाश्रयभूतानां षाजहानासफ्खान्दाराशाहादीनां समयः (A. D. 1628-1658) अष्टाविंशत्यधिकषोडशशततमक्रैस्ताब्दप्रभृत्यष्टपञ्चाशदधिकषोडशशततमक्रैस्ताब्दपर्यन्त इत्यैतिहासिकास्संगिरन्ते। ततश्च षाजहान्सभायामात्मनः शैशवातिवाहनोक्त्या जगन्नाथसुधीन्द्रजन्मसमयः (A. D. 1630) त्रिंशदधिकषोडशशततमक्रैस्ताब्दसंनिहितः स्यादित्यभ्यूह्यते। दीक्षितेन्द्राणां निर्याणसमयस्तु (A. D. 1626) षड्विंशत्यधिकषोडशशततमः क्रैस्ताब्द इति वक्ष्यते। इत्थं च

दीक्षितेन्द्रनिर्याणानन्तरकालिक एव जगन्नाथसुधीरिति तस्य दीक्षितेन्द्रकालिकत्ववचनं दुर्निर्वहमेव ॥

किं च दीक्षितेन्द्रजीवनसमय एव तदीयग्रन्थखण्डनं जगन्नाथेन कृतं चेत्तदा आलंकारिकमूर्धन्येन सकलदर्शननिष्णातेन च दीक्षितेन्द्रेण तत्खण्डनमपरिशीलयता स्वग्रन्थदूषणं चाभ्युपगच्छता तूष्णींभाव एवाश्रित इति निगदितुं कस्य वा सचेतनस्य विपश्चितो रसना प्रवर्तेत। तस्मान्न दीक्षितेन्द्रकालिकता पण्डितराजस्य जगन्नाथसुधीन्द्रस्येति युक्तमुत्पश्याम इत्यलं प्रसक्तानुप्रसक्तयेति विरम्यते ॥

## अप्पय्यदीक्षितेन्द्रविरचितप्रबन्धसंग्रहः.

इत्थमसाधारणनानादर्शनदीक्षणनिजशेमुषीप्रकर्षपरिमण्डितेनानेन दीक्षितेन्द्रेण श्रीवरदराजस्तव-श्रीकृष्णध्यानपद्धत्यादयः श्रीविष्णुस्तुतिग्रन्थाः, श्रीवेदान्ताचार्यप्रणीतयादवाभ्युदयकाव्यव्याख्या, कुवलयानन्द-चित्रमीमांसा-वृत्तिवार्तिकादयोऽलंकारशास्त्रप्रबन्धाः, नक्षत्रवादावल्यादयो व्याकरणशास्त्रग्रन्थाः, विधिरसायनोपक्रमपराक्रमवादनक्षत्रावल्यादयः पूर्वमीमांसाशास्त्रग्रन्थाः, विशिष्टाद्वैतवेदान्तद्वैतसिद्धान्तानुरोधिनौ नयमयूखमालिका-न्यायमुक्तावल्याख्यौ निबन्धौ, वेदान्तवादन - त्रावली-सिद्धान्तलेशसंग्रह-कल्पतरुपरिमल–न्यायरक्षामण्यादयोऽद्वैतसिद्धान्तग्रन्थाः, शिवार्कमणिदीपिकादयः शैवसिद्धान्तग्रन्थाः, शिखरिणीमाला-ब्रह्मतर्कस्तव-शिवकर्णामृतादयः शिवोत्कर्षस्थापकसगुणशिवस्तुति पूजाविध्यादिप्रकारप्रपञ्चनपराश्च बहवः प्रबन्धाः प्राबन्धिषत ॥

## अप्पय्यदीक्षितेन्द्रपुत्राः.

सोऽयं दीक्षितेन्द्रो निजोदीरितवाणीसत्यापनाय स्वाभ्यर्चितदेवीप्रदत्तगगनोत्क्षिप्तताटङ्करत्नप्रभोद्भावितसंपूर्णचन्द्रिकाप्रसारणात् कुहूमपि पौर्णमासीकरणेन परितुष्टाच्चन्द्रशेखराह्वयभूपालादवाप्तरत्नमयखेटाभरणवत्तया रत्नखेटदीक्षित इति सुप्रतीतस्य तूणपुल्ग्रामाभिजनस्य श्रीनिवासाध्वरिणः कुमारीं मङ्गलनायिकामुद्वाह्य तस्यां शङ्कराद्यानेकादश पुत्रान् लेभ इति शिवानन्दप्रणीताप्पय्यदीक्षितचरितचम्पूप्रबन्धादवसीयते। तेऽप्येतत्पुत्राः स्वपितृवद्विद्यापारंगता विनयान्विताः कवितावैभवसमन्विताश्चासन्निति विज्ञायते। श्रूयते किल तत्रेयं काचन

किंवदन्ती । यथा —कदाचिदेतद्दीक्षितेन्द्रस्य तनयेष्वेकेन कांचिदङ्गनां रहसि मनसि कलयता—

अकृशं कुचयोः कृशं विलग्ने
विपुलं वक्षसि विस्तृतं नितम्बे ।
अधरेऽरुणमाविरस्तु चित्ते

इति पद्यलेखनसमये तत्तुर्यपादलेखनसमयात्पूर्वमतर्कितोपनते सत्यस्मिन् दीक्षितेन्द्रे तेन पुत्रेणैतस्य सर्वस्य भवानीवर्णनपरताप्रकाशनाय झटिति 'करुणाशालिकपालिभागधेयम्' इति तत्तुर्यपादलेखनेन तत्पद्यमापूरितमिति। तदिदं पद्यं दीक्षितेन्द्रैरेव स्वीये कुवलयानन्दे उदाहृतं चोपलभ्यते ॥

## अप्पय्यदीक्षितेन्द्रनिर्याणकालः.

एवमयं दीक्षितेन्द्रो निरुपमप्रतिभाप्रकर्षपरिमण्डितः परश्शतप्रबन्धनिर्माणेन चतुरधिकशतप्रबन्धनिर्वाहकाचार्येत्यादिविरुदपरिकर्मितोऽन्यूनां द्वासप्ततिं वत्सरान् महीमण्डलमेतन्मण्डयामासेति—

द्वासप्ततिं प्राप्य समाः प्रबन्धान् शतं व्यधादप्पयदीक्षितेन्द्रः ।

इत्येतद्दीक्षितेन्द्रावरजचारुदीक्षितपौत्रनीलकण्ठदीक्षितप्रणीतशिवलीलार्णवोक्त्या,

नीत्वा द्विसप्तत्यधिकास्समाश्च कैलासयात्रां स चिकीर्षुरन्ते ।

इति शिवानन्दीयपरिदृश्यमानोक्त्या चावसीयते ॥

तथा दीक्षितेन्द्रस्यास्य निर्याणसमये एतदाशयं विज्ञातुकामैरेतदात्मजैः प्रार्थितेनानेन दीक्षितेन्द्रेण—

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः ।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किंचिदहमर्थये शिवपदं दिदृक्षे परम् ॥

इत्युदीरणसमनन्तरं —

आभाति हाटकसभानटपादपद्म-
ज्योतिर्मयो मनसि नस्तरुणारुणोऽयम् ।

इति तादात्विकस्वान्तरङ्गभासमाननटराजमनुसंदधतैव निर्याणे सति तदा तदात्मजैः—

नूनं जरामरणघोरपिशाचकीर्णा
संसारमोहजननी विरतिं प्रयाता ॥

इति तदुत्तरार्धमापूरितमिति शिवानन्दीयग्रन्थान्तेऽभिहितं दृश्यते। ततश्च श्रीमदप्पय्यदीक्षितेन्द्रस्य जननकालः (A. D. 1553) त्रिपञ्चाशदधिकपञ्चशततमः क्रैस्ताब्द इति पूर्वमेवोक्तया ततोऽतीते द्वासप्ततितमे वत्सरे एतन्निर्याणोक्तिपरिशीलनाच्च (A. D. 1626) षड्विंशत्यधिकषोडशशततमे क्रैस्ताब्दे श्रीमदप्पय्यदीक्षितेन्द्रनिर्याणं स्यादिति निर्धार्यते।

## प्राकृतमणिदीपग्रन्थप्रणयननिदानं, तत्र दिङ्मात्रसूचनं च.

श्रीमदप्पय्यदीक्षितेन्द्रेण प्राकृतमणिदीपनाम्नीयं वाल्मीकीयप्राकृतव्याकरणसूत्रवृत्तिः त्रिविक्रमदेव-हेमचन्द्र-लक्ष्मीधर-भोजदेव-पुष्पवननाथवररुच्यादिप्रणीतप्राकृतव्याकरणशास्त्रग्रन्थानामतीव विस्तृतत्वाद्बुभुत्सुसौकर्यार्थं संगृह्य प्रणीतेति—

ये त्रिविक्रमदेवेन हेमचन्द्रेण चेरिताः।
लक्ष्मीधरेण च ग्रन्था भोजेन च महीक्षिता।
ये पुष्पवननाथेन ये वा वाररुचा अपि।
वार्तिकार्णवभाष्याद्या अप्पयज्वकृताश्च ये।
ते विस्तृतत्वात्प्रायेण संक्षेपरुचिभिर्जनैः।
अगृहीता विलम्बन्ते संध्यार्ककिरणा इव।
अतः प्राकृतशब्दानामन्धे तमसि मज्जताम्।
प्रकाशनाय क्रियते संक्षिप्ता मणिदीपिका॥

इत्येतद्वृत्तिग्रन्थोपोद्घात एवोक्तया ज्ञायते। अत एवात्र सुप्रसिद्धप्रचुरप्रयोगदृश्यमानलक्ष्यव्युत्पादनैदंपर्यतात्पर्येण न सर्वेषां सूत्राणां वृत्तिर्दृश्यते। अतोऽत्र वृत्तावा प्रथमाध्यायान्तं वृत्तिकृदुपादानक्रमेण सूत्रसंख्याऽस्माभिर्निरदेशि। उपोद्घातान्त एव 'पाकृतरत्नदीपं, इत्युक्तया तत्तत्प्रकरणान्तेषु सर्वत्र 'प्राकृतमणिदीपे इत्युक्त्या चास्य ग्रन्थस्य प्राकृतमणिदीप इति व्यपदेश इति ज्ञायते। अर्थैक्याच्च प्राकृतमणिदीपिकेत्युपोद्घाते व्यवहारश्च कृतो दृश्यते॥

अत्र क्वचित्क्वचिल्लेखकप्रमादश्च परिदृश्यते। यथा एकादशे पृष्ठे 'निर्दुरि वा' इति सूत्रे 'णिस्सहं' इत्युदाहरणलेखनं दृश्यते। तत्र सकारद्वयघटितरूपस्य साधुतायामनुग्राहकादर्शनाद्वृत्तिकाराद्यननुमतत्वाच्च तल्लेखकप्रमादोपनतं स्यादिति संभावयामः। तथा क्वचित्क्वचित् लक्ष्मीधरत्रिविक्रमदेवाद्यननुमतमनुक्तं सूत्रेषु पाठभेदादिकं च दृश्यते। तदेत-

त्सर्वमस्माभिः प्रणीतायामेतट्टिप्पण्यां तत्र तत्रैव विवेचितं द्रष्टव्यमित्यत्र विस्तरभीत्या विरम्यते ॥

## प्राकृतभाषाशब्दविषये किंचिद्वचनम्.

इदमत्र दिङ्मात्रं कतिचित्प्राकृतभाषाशब्दविषये प्रसङ्गात्किंचिदुच्यते। यथा प्राकृतभाषायामसाधारण्येन प्रयोक्ष्यतया 'रिञ्छोळीधोरण्यौ पङ्क्तौ' इत्यादिभिरनुशिष्टाः रिञ्छोळीधोरणीझालादयश्शब्दाः संस्कृतभाषायामपि प्रयुज्यमाना उपलभ्यन्ते। तथाऽत्र ब्रह्ममध्याह्नवह्निजह्नुचिह्नपूर्वाह्णकह्लारादिशब्देषु दृश्यमानानां संयुक्तानां ह्मह्नह्णह्लानां श्मष्मस्मह्मामस्मररश्मौ म्हः, (प्रा. सू. १-४-६७) 'श्नष्णस्नह्नह्णक्ष्णां ण्हः, (प्रा. सू. १-४-६९) 'ह्लो ल्हः' (प्रा. सू. १-४-६६) इति सूत्रैः म्हण्हल्हादेशा विधीयन्ते। तेन च प्राकृते ब्रम्ह-मज्झण्ह-वण्हि-चिण्ह-पुव्वण्ह-कल्हार इति प्रकृतिरूपाणि भवन्ति। संस्कृते तु लेखनदशायां परमेषु ब्रह्मादिशब्देषु वर्गीयानुनासिकलकारेभ्यः पूर्वमेव हकारदर्शनेऽपि तेषामुच्चारणकाले तेषु शब्देषु वर्गीयानुनासिकलकारेभ्यः परं हकारोच्चारणमिवानुभूयमानं प्राकृतभाषाशब्दव्यवहारसंस्कारसमायातं स्यादिति संभाव्यते। तथा आर्द्रार्थक ओद्दशब्दः, श्मशानार्थको मसाणशब्दः, कार्यार्थकः कज्जशब्दः, काव्यार्थकः कव्वशब्दः, कञ्चुकार्थकः कुप्पिसशब्दः, मृषार्थको मोसशब्दः, इत्यादयः कर्णाटभाषायां, वज्राद्यर्थकवइरशब्दादयो द्राविडभाषायां, गृहाद्यर्थका घरादिशब्दा यवनभाषायां च प्राकृतशब्दानुकारिणो बहवो दृश्यन्ते। तथा 'कगटडतदपःकःपशोरुपर्यद्रे' (प्रा. सू. १-४-७७) इति युक्तदुग्धादिशब्देषूपरिस्थितानां कगादिवर्णानां, तथा 'लवरामधश्च' (प्रा. सू. १-४-७८) इति श्लक्ष्णादिशब्देष्वधःस्थितानां लकारादीनां च लुगर्थमारब्धे सूत्रद्वये दृश्यमानमुपर्यधश्शब्दग्रहणं ऊर्ध्वाधोभावेन संयुक्तस्थले लेखनसंप्रदायस्य प्रायशो देवनागरलिपिलेखनेऽदर्शनेन ग्रन्थ कर्णाटान्ध्रादिलिपिलेखनसंप्रदाये बाहुल्येन दर्शनाच्च तदनुरोधेन कृतं स्यादित्युन्नीयते। देवनागरलिपिलेखनसंप्रदाये तु तत्सूत्रद्वयगतोपर्यधश्शब्दयोः प्रथमोत्तरोच्चार्यमाणार्थकत्वमभ्युपेयमिति ॥

## प्राकृतमणिदीपदीधित्याख्यटिप्पणीप्रवृत्तिनिदानम्.

श्रीमदप्पय्यदीक्षितेन्द्रप्रणीतेऽस्मिन् प्राकृतमणिदीपाह्वये प्रबन्धेऽतिसंग्रहेण तत्तल्लक्ष्येषु कार्यविशेषमात्रसूचनात्तदितरतत्तल्लक्ष्यव्युत्पादक-

कार्यान्तराप्रदर्शनात्प्राकृतशब्दव्युत्पित्सूनामयं प्रबन्धः सकलतत्त्वप्रक्रिया-प्रकाशनपरां टिप्पणीं विना नात्यन्तोपकृतये प्रकल्पेतेत्येतत्प्राच्यविद्या-संशोधनसंस्थाध्यक्षाणामाशयमनुरुध्य वाल्मीकीयं कात्यायनीयं च प्राकृतशब्दानुशासनसूत्रजालं त्रैविक्रमीं भामहीयां च तत्तद्वृत्तिं हेमचन्द्रीयं प्राकृतशब्दानुशासनं प्राकृतविशदसंग्रहषड्भाषाचन्द्रिकादिप्राकृतव्या-करणशास्त्रव्याख्याग्रन्थांश्च तत्र तत्र यथामति परिशील्य तत्तल्लक्ष्य-व्युत्पादकसकलप्रक्रियां प्रकाश्य मूलानुक्तान् कांश्चन विशेषांश्च संगृह्य प्रकरणविभागकल्पनादिना परिष्कृत्य चास्माभिः प्रणीतया नातिविस्तृतया नातिसंगृहीतया च प्राकृतमणिदीपदीधित्याख्यया टिप्पण्या प्राकृतमणि-दीपाह्वयोऽयं प्रबन्धस्समयोजि ॥

## उपसंहारः.

श्रीवाल्मीकीयप्राकृतशब्दानुशासनव्याख्यात्मकोऽयं प्राकृतमणि-दीपनामा प्रबन्धो नैतदवधि कुत्रापि मुद्रणपथं नीत इति समनुचिन्त्य अमुद्रितप्राक्तनग्रन्थप्रचिकटयिषया स्थापितायामस्यां महीशूरविश्वविद्या-लयसंबन्धिन्यां महीशूरराजकीयप्राच्यविद्यासंशोधनसंस्थायां समुप-लब्धद्वित्रमातृकावलम्बेन प्राकृतभाषायां सुबन्तान्तोऽयमस्य प्रथमो भाग-स्संशोध्य प्रकरणविभागकल्पनादिना परिष्कृत्य संयोज्य चास्माकीनया प्राकृतमणिदीपदीधित्याख्यया टिप्पण्या, तथैतदनुबन्धितया सवार्तिकेन प्राकृतसूत्रपाठेन गणपाठेन अकारादिवर्णक्रमानुरोधिनीभिः प्राकृतसूत्र-सूचनी-गणसूत्रसूचनी गणनामसूचनी-संस्कृतच्छायासहितप्राकृतपदसूच-नीभिस्तथैवान्ते अकाराद्यन्तानां प्राकृतसामान्यविशेषशब्दानां लिङ्गत्रये सप्तसु विभक्तिषु चैतत्प्राकृतमणिदीपग्रन्थानुरोधिना सुबन्तशब्दरूप-संग्रहेण तथा टिप्पण्युपात्तप्राकृतशब्दानां सूचन्या च साकं परिष्कृत्य संमुद्र्य प्राकाशि ॥

एतद्ग्रन्थसंशोधनाय महीशूरराजकीयसरस्वतीभाण्डागाराधिका-रिभिः, तथाऽनन्तपुराङ्ग्लकलाशालाध्यापकैः M.A.L.T. इत्युपाधि-धारिभिः श्रीमद्भिः सि. नारायणराव् महाशयैश्चादर्शदानेनोपकृतमिति तेभ्यः कृतज्ञतामर्पयामः ॥

## एतद्ग्रन्थसंशोधनार्थमवलम्बिता आदर्शकोशाः.

(१) एतत्प्राच्यविद्यासंशोधनसंस्थागतः ३२८४ तमसंख्याङ्कितस्ता-लपत्रात्मको नातिशुद्ध एकः।

(२) महीशूरराजकीयसरस्वतीभाण्डागारीयः १०२५ तमसंख्याङ्कितस्तालपत्रात्मको नातिशुद्धोऽन्यः ।

(३) अनन्तपुराङ्ग्लकलाशालाध्यापकैः सि. नारायणराव् महाशयैः प्रेषितः काकलपत्रात्मको नात्यशुद्धोऽपरः ॥

इत्थमेतत्कोशत्रयमवलम्ब्य संशोधितेऽस्मिन् ग्रन्थे, प्राकृतभाषाप्रचारवैरल्याद्यथामति प्राकृतग्रन्थपरिशीलनपूर्वकमस्माभिः प्रणीतायां टिप्पण्यां च मानुषशेमुषीसुलभेनानवधानेन सीसकाक्षरयोजकाद्यनवधानेन च संभावितान् प्रमादान् क्षमन्तां, संमोदन्तां च गुणैकग्राहिणः प्राकृतभाषाविचक्षणा विपश्चिदपश्चिमास्सहृदया इति सप्रश्रयमभ्यर्थये ॥

ये चक्रुस्सूत्रजालं बुधजनमहिताः प्राकृतव्याक्रियार्थं
ये वा तस्य प्रणिन्युर्निरुपमधिषणा वृत्तिमव्याहतार्थाम् ।
ये च व्याख्यां न्यबध्नन् सकलविधगिरां यश्च देवो हयास्यः
सर्वेऽमी साहसं मे निरवधिकरुणानिघ्नचित्ताः क्षमन्ताम् ॥

जयतु निखिलवाणीमातृका देववाणी
जयतु च तदुदीता प्राकृती मञ्जुवाणी ।
जयतु कृतिगणस्तद्व्याक्रियायां प्रवीणः
जयतु च बुधसंघस्तद्विमर्शे प्रवीणः ॥

महीशूरनगरी
श्रीमद्विजयसंवत्सर-वृषभवैशाख-शुद्ध-
तृतीया-मृगशीर्षाञ्चितो भृगुवासरः
ता १५-५-१९५३

इति सविनयं विज्ञापयिता,
सहृदयविपश्चिद्वशंवदः
तिरु. तिरु. श्रीनिवासगोपालाचार्यः,
महीशूरराजकीयप्राच्यविद्यासंशोधनसंस्था-
प्रधानपण्डितः.

# प्राकृतमणिदीपविषयसूचनी

# अशुद्धसंशोधनम्

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| xiii | २६ | देश | देशी |
| xix | २६ | सय | सन |
| xxi | २८ | ख्यतृ | ख्यातृ |
| xxiv | १२ | शन | शमन |
| xxv | ६ | लम्भ | लम्ब |
| xxiii | २२ | न्द्रणां | न्द्राणां |
| xxxiv | ३१ | भ्यूह्य | भ्युह्य |
| xxxvi | १९ | वान्दी | वानन्दी |
| xxxvii | ३ | पञ्चश | पञ्चदशश |
| xxxviii | १० | ह्रो न्हः | ह्लो ल्हः |
| xl | १ | ररा | ररा |
| xl | २ | ास्मन् | स्मिन् |
| ७ | २४ | जाउँण्डा | चाउँण्डा |
| ९ | २१ | ञ्यापो | ङ्थापो |
| ९ | २४ | शब्दज्ञ्य | शब्दस्य |
| २३ | २ | मांसं | मासं |
| २५ | २१ | कारदेशः | कारादेशः |
| २८ | १९ | हरण च | हरणं च |
| २८ | २५ | विकार | वकार |
| २८ | २९ | लिखि ो | लिखितो |
| ३२ | ७ | दत्वस्य | दत्तस्य |
| ३२ | ९ | परकीयं | परकीयः |
| ३५ | २० | स्तुवओ | थुवओ |
| ३८ | २५ | त्युदा | इत्युदा |
| ३८ | २७ | वाऽऽर्द्रे | वाऽऽर्द्रे |
| ३९ | १० | विघाना | विधाना |
| ३९ | २४ | इनि | इति |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३९ | २४ | उच्चितम् । एवमेव चन्द्रि- | उच्चितमिति प्रतीयते। वस्तुतस्तु ‘ष्पस्पोः फः’ इत्येतद्बाधकस्य ‘शोर्लुक्खोः’ इत्यादिना विहितस्य सकारलुक एव प्रवृत्त्या शिष्टस्य पकारस्य द्वित्वे च परोप्परमित्येव साध्विति प्रतिभाति । अत एव चन्द्रि- |
| ४५ | १ | विह्नू वेह्नू | विण्हू वेण्हू |
| ५४ | २० | भिङ्गारू | भिङ्गारो |
| ५७ | २२ | त्रिघिक्र | त्रिविक्र |
| ६१ | १२ | अणं | उणं |
| ६१ | १२ | इसी | उसी |
| ६१ | १५ | ऋतोऽत् (प्रा. सू. १-२-७४). | (त्याज्यमिदं) |
| ६१ | १६ | इति सूत्रैः अत्वेत्वोत्वानि बोध्यानि. | इति सूत्राभ्यामित्वोत्वे बोध्ये |
| ६१ | २१ | नेन चविडा | नेन किलित्तो चविडा |
| ६१ | २२ | पवट्टो | पओट्टो |
| ६१ | २२ | आवज्जं | आओज्जं |
| ६१ | २४ | चकेटा | चपेटा |
| ६२ | २४ | ‘इत्यादीति’ इति प्रतीकतद्व्याख्याग्रन्थौ. | ६३ पुटे टिप्पण्यादौ पाठ्यौ |
| ६३ | ८ | १ ‘दइत्तो’ इति प्रतीकतद्व्याख्याग्रन्थौ. | ६२ पुटे टिप्पण्यन्ते पाठ्यौ |
| ६६ | ६ | ऐपूर्क | एपूर्कं |
| ७२ | १५ | केडओ | केढओ |
| ७४ | ५ | दसइ | डसइ |
| ७४ | ६ | गदर्भे | गर्दभ |
| ७४ | २१ | कअणं | कदणं |
| ७५ | २० | इत्यत्या | इत्यत्रत्या |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८१ | ११ | पूर्वी | पूर्वीं |
| ८५ | ८, १३ | इण्हि | एण्हि |
| ८७ | १९ | क्षेटक | क्ष्वेटकः |
| ८७ | १९ | सूत्रे | सूत्रात् |
| ९२ | २२ | छुरो | छुरो छुअं |
| ९२ | २३ | उच्छू छोरं | इच्छू छीरं |
| ९४ | २ | वार्तासं | धूर्तसं |
| ९४ | १२ | वार्तेत्यादि | धूर्तेत्यादि |
| १०० | २१ | स्मम्हा | स्मह्मा |
| १०२ | १६ | सत्वा | सत्त्वा |
| १०२ | १९ | ब्राह्य | ब्राह्म |
| १०२ | १९ | ५८ | ५९ |
| १०६ | २२ | तव्र | तत्र |
| १०८ | ७ | स्तो | स्तोः |
| १०८ | ८ | स्यादिः | स्यादि- |
| ११० | २० | इत्यानु | इत्यनु |
| ११२ | १७ | दय्य | द्यय्य |
| ११७ | १५ | सूत्रस्य | सूत्राद्वापदस्य |
| ११९ | ३१ | ऌकाराभावान्न रत्वमपीति | ऋकाराभावान्नौत्वं नापि तत्सं-नियोगशिष्टं रत्वमिति. |
| १२९ | ११ | र्थामिति | र्थमिति |
| १४० | १–२ | पङ्क्तिद्वयं | (१४०) तस्मिन्नेव पुटे टिप्प-ण्यादौ पाठ्यं. |
| १४२ | ११ | करणे | करणे च |
| १४५ | १३ | सार्थ्या | सामर्थ्या |
| १४९ | १ | बिन्दौ | १ बिन्दौ |
| १४९ | ३ | १ स्पष्टम् | स्पष्टम् |
| १५७ | २६ | धाआरो | धाआरा |
| १५८ | १६ | पिओ | पिअओ |
| १५८ | २१ | इत्युस्त्व | इत्युत्व |
| १७६ | १७ | दात्मादि | त्मादि |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७६ | २० | बन्धिबो | बन्धिनो |
| १७९ | १३ | णो इत्यादेशे अना | णा इत्यादेशे परतः अना |
| १७९ | १८ | राइणो इति | राइणा इति |
| १७९ | २० | वैंक | वैंक |
| १ ४ | २० | अप्पा | अप्पो |
| १९८ | २१ | श्रधणा | श्रवणा |
| २०० | २२ | इसि | इति |
| २०२ | १४ | तुम्हे | तुय्हे |
| २०६ | २० | इस्यादि | इत्यादि |
| २०६ | २२ | तत्रव्य | तत्रत्य |
| २०६ | २६ | शङ्क | शङ्का |
| २२० | ८ | विथान | विधान |
| २२१ | ३ | तेहिं | तीहिं |
| २३३ | १४ | पवर्तते | प्रवर्तते |
| २३६ | ७ | उप | उव |
| २३४ | ११ | खु । हरो | खु हरो |
| २४१ | ५ | त्यव्यद्ध | त्यव्ययद्ध |
| २४८ | ७ | ज्योर्धे | ज्योर्दे |
| २७० | १६ | ३० | ३३ |
| ३१२ | ८ | चैत्यः | चैत्यः |
| ३१२ | २७ | जन्हुः | जह्नुः |
| ३२० | १४ | मर्स्यः | मर्त्यः |

॥ श्रीः ॥

॥ श्रीमते हयग्रीवाय नमः ॥

श्रीमदप्पयदीक्षितप्रणीतः

# प्राकृतमणिदीपः



पाणिग्रहे पाण्ड्यकुमारिकायाः
पायात्समीकं परमेश्वरेण ।
अन्योन्यलाभाच्छिवयोर्विचित्रं
यस्मिन् जयोऽभूदुभयोस्समानः ॥ १ ॥

अश्रान्तकलितोन्मेषमनञ्जनकृतव्यथम् ।
अनाविलमिदं चक्षुः साहित्यं ब्रह्म पश्यताम् ॥ २ ॥

सूक्ष्मार्थं ग्राहयितुं मन्दानपि नाटकं मृदूपायः ।
तस्यापि जीवितमिदं प्राकृतमप्राकृतेन यन्मिश्रम् ॥ ३ ॥

ये त्रिविक्रमदेवेन हेमचन्द्रेण चेरिताः ।
लक्ष्मीधरेण च ग्रन्था भोजेन च महीक्षिता ॥ ४ ॥

ये पुष्पवननाथेन ये वा वाररुचा अपि ।
वार्तिकार्णवभाष्याद्या अप्पयज्वकृताश्च ये ॥ ५ ॥

ते विस्तृतत्वात्प्रायेण संक्षेपरुचिभिर्जनैः ।
अगृहीता विलम्बन्ते संध्यार्ककिरणा इव ॥ ६ ॥

अतः प्राकृतशब्दानामन्धे तमसि मज्जताम् ।
प्रकाशनाय क्रियते संक्षिप्ता मणिदीपिका ॥ ७ ॥

प्राकृतरूपमशेषं पश्यत मणिदीपिकां करे धृत्वा ।
स्वल्पेति को विचारो जठरे खलु माति जगदिदं विष्णोः ॥ ८ ॥

दृष्टाऽपि रञ्जयेदेषा दोषज्ञानां मनांसि मे ।
सकृन्निगदनग्राह्यसर्वभावा सरस्वती ॥ ९ ॥
महाह्रदानां तोयस्य महतामाशयस्य च ।
कालुष्यं कारणापेक्षं प्रसादस्तु स्वभावतः ॥ १० ॥
अनुग्रहाद्ब्राह्मणपुङ्गवानामवाप्तविद्यश्चिनबोम्मभूपः ।
[1] करोत्यमुं प्राकृतरत्नदीपं मन्दानिलस्पन्दनिभैर्वचोभिः ॥ ११ ॥

## सिद्धिर्लोकाच्च ॥ १–१–१ ॥

[2] प्राकृतशब्दानां मध्ये एते प्रयोज्या एते न प्रयोज्या इति व्यवस्थायाः सिद्धिः निश्चयो न केवलं वक्ष्यमाणसूत्रेभ्य एव, किंतु काव्यज्ञलोकव्यवहारादपि स्यात् । तेनात्र शास्त्रे सूत्राननुशिष्टोऽपि काव्याभियुक्तव्यवहारस्थो ह्रस्व एङ् साधुरिति सिद्धम् ॥ तेन—नीडं नेड्डं—दैवादित्वात् डस्य द्वित्वे 'त्वेदितः' (प्रा.सू. १-२-४१) इत्येत्वम् । 'संयोगे' (प्रा.सू. १-२-४०) इति ह्रस्वः । पुस्तकं पोत्थअं 'स्तौ' (प्रा.सू. १-२-६६) इत्योत्वम् । 'स्तः' (प्रा.सू. १-४-४०) इति थत्वम् । ह्रस्वः प्राग्वत् । 'प्रायो लुक्' (प्रा.सू. १-३-८) इत्यादिना कलोपः । व्यवहाराभावात्तु कृष्टिघृष्टिविद्धद्वाक्यवाचस्पतिविष्टरश्रवःप्रचेतःप्रोक्तादीनां क्विवादिप्रत्ययान्तानां अग्निचित्सोमसुत्प्रभृतीनां निहतसमासानां 'सुग्लु' 'सुम्लु' इत्यादीनां च न प्रयोगार्हत्वं तत्सिद्धम् ॥

---

# प्राकृतमणिदीपटिप्पणी दीधित्यभिख्या

---

यदुपज्ञमेव सकलं वाङ्मयमिन्धे समस्तविबुधेड्यम् ।
परमं महस्तदाद्यं जयतु श्रीमद्धयाननामिख्यम् ॥
श्रीमन्तौ पदपद्मौ मूर्ध्ना संनम्य देशिकेन्द्राणाम् ।
प्राकृतमणिदीपकृतेः दीधितिनाम्नीं करोमि लघुटीकाम् ॥

[1] करोतीति ॥ अत्रत्यनत्तत्प्रकरणान्तपरिदृश्यमानप्रशस्तिपङ्क्तिपरिशीलनेनात्र करोतिरन्तर्भावितण्यर्थक इति भाति ॥

[2] प्राकृतशब्दानामिति॥ प्राकृते ऋऌवर्णयोः प्राय ऐकारौकारयोः शकारषकारयोः असंयुक्तङञकारयोः द्विवचनसंज्ञकप्रत्ययानां चाप्रयोगो लोकसिद्धो वक्ष्यमाणसूत्र-

प्राञ्चस्तु—ऋकारऌकारयोरैदौतोः शषयोः द्विवचनचतुर्थ्यादीनामप्रयोगो लोकव्यवहारगम्य इत्याहुः। तच्चिन्त्यम्—'ऋतोऽत्' (प्रा. सू. १-२-७४) 'क्लृप्त इलिः' (प्रा. सू. १-२-९३) 'ऐच एङ्' (प्रा. सू. १-२-१०२) 'शोस्सल्' (प्रा. सू. १-३-८७) 'द्विवचनस्य बहुवचनम्' (प्रा. सू. २-३-३४) 'ङसो ङम्' (प्रा सू २-३-३५)इत्यादिसूत्रैरेवावगम्यमानत्वात् ॥

---

विशेषज्ञापकसिद्धश्चेति वृत्तिकारत्रिविक्रमदेवेनोक्तम्। तथा लक्ष्मीधरविदुषा चन्द्रिकायामपि—प्राकृते क्वचित्क्वचिल्लिङ्गवैपरीत्यं, हलन्तपदाभावः, धातुभ्य आत्मनेपदपरस्मैपदनियमाभावः, शबादिविकरणप्रत्ययाभावः, वधशब्दोत्तरचतुर्थ्येकवचनतादर्थ्यचतुर्थ्येकवचनव्यतिरिक्तचतुर्थीविभक्त्यभावः, क्वचित्सप्तमीद्वितीयाविभक्त्योश्चाप्रयोग इत्यादि सौत्रलिङ्गादवसीयत इत्युक्तम् ॥

अत्र चायं सौत्रलिङ्गोपपादनक्रमसंग्रहः:—

'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यादिसूत्रैरनेकेषामादेशानां विधानात् 'क्लृप्त इलिः' (प्रा. सू. १-२-९३) इत्यनेन ऌकारस्याप्यादेशविधानात् ऋकारऌकारयोः, 'अइ ऐ' (प्रा. सू. २-१-७४) इत्यनेन क्वचिदैकारविधानेऽपि 'ऐच एङ्' (प्रा. सू.१-३-१०२) इति सूत्रेण सामान्यत एङ्विधानादैकारौकारयोः, 'शोस्सल्' (प्रा- सू. १-३-८७) इत्यनेन सकारादेशविधानात् शकारषकारयोः, 'शुल्के ङ्गः' (प्रा- सू. १-४-३) 'श्वेवृश्चिके ञ्चुर्वा' (प्रा. सू. १-४-१८) इति सूत्राभ्यां ङाक्रान्तगकारञाक्रान्तचकारविधानात् असंयुक्तङञकारयोः, 'द्विवचनस्य बहुवचनम्' (प्रा. सू. २-३-३४) इत्यनेन द्विवचनस्थाने बहुवचनविधानाद्द्विवचनस्य, 'क्लीबे गुणगाः' (प्रा. सू. १-१-५२) इत्यादिना क्लीबत्वविधानात् नित्यपुंलिङ्गानां गुणादिशब्दानां, 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यादिभिर्लोपागमादिविधानाद्धलन्तानां, 'लटस्तिप्ताविजेच्' (प्रा. सू २-४-१) इत्यादिना सामान्यतस्तिबादीनामिजादिविधानादात्मनेपदपरस्मैपदनियमस्य, 'न शपाम्' (प्रा. सू.) इत्यनेन निषेधाद्विकरणप्रत्ययानां, 'वधाड्डाइ च' (प्रा. सू २-३-३७) 'तादर्थ्ये ङेस्तु' (प्रा. सू. २-३-३६) इति सूत्राभ्यां तत्र चतुर्थ्येकवचनविधानेऽपि अन्यत्र 'ङेसो ङम्' (प्रा. २-३-३५) इति चतुर्थ्याः षष्ठीविधानाच्चतुर्थ्याः, 'ङिपोऽस्' (प्रा. सू. २-३-४१) 'क्वचिदसादेः' (प्रा. सू. २-३-३८) इति सूत्राभ्यां विद्युद्द्योते स्मरति माधवं वन्दे इत्यत्र द्वितीयाषष्ठ्योः विज्जुज्जोअं माहवस्स इति प्रयोगार्थं विधानात्तत्र यथाक्रमं सप्तमीद्वितीयाविभक्त्योश्चादर्शनमिति ॥

## [1] अनुक्तमन्यशब्दानुशासनवत् ॥ १-१-२ ॥

स्पष्टम्। तेन अचः स्वराः, हल् व्यञ्जनमित्यादि सिद्धम् ॥

## [2] सुप्स्वादिरन्त्यहला ॥ १-१-३ ॥

स्वादिविभक्तिषु [3]आदिर्वर्णो वचनं [4] वा अनिताऽप्यन्त्यव्यञ्जनेन सह गृह्यमाणो मध्यगानां स्वस्य च संज्ञा स्यात्। तेन सुस् इति प्रथमा, अस्

---

[1] अनुक्तमित्यादि॥ ननु-अत्रानुक्तस्य व्याकरणान्तरोक्तस्याभ्यनुज्ञाने तृणमित्यादौ 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यनेनात्र शास्त्रे ऋकारस्याकारविधानात् पाणिनीयव्याकरणे ऋकारस्थानिकाकारस्य 'उरण्रपरः' (पा. सू. १-१-५१) इत्यनेन रेफपरावयवकत्वेन विधानात्तथा प्रवृत्तौ तर्णमिति स्यात्, इष्यते त्वत्र तणमिति चेत् परिहृतमेतत् चन्द्रिकायां—अत्रत्यस्य सप्तदशस्य 'बहुलं' (प्रा. सू. १-१-१७) इति सूत्रस्याशास्त्रपरिसमाप्त्यनुवर्तनात् प्रयोगानुरोधेन युक्तान्येव शास्त्रान्तरीयकार्याणि प्रवर्तन्त इत्यभ्युपगमात् तणमित्येव प्रयोगदर्शनान्नात्रोरण्रपर इति शास्त्रान्तरीयस्यावकाश इति। एवमन्यत्राप्यूह्यम् ॥

[2] एतत्सूत्रात्पूर्वं 'संज्ञा प्रत्याहारमयी वा' (प्रा. सू १-१-३) इति सूत्रं त्रिविक्रमवृत्तौ चन्द्रिकायां चोपलभ्यते। तस्य चेयं वृत्तिरपि दृश्यते—" इह प्राकृतव्याकरणे संज्ञा प्रत्याहारस्वरूपा व्यवह्रियते, वाग्रहणाद्वक्ष्यमाणा च। पुनः प्रत्याहारग्रहणं भूयोव्यवहारस्य दर्शनार्थम्। यथा—स्वरोऽच्, एओ एङ्, ऐऔ ऐच्, व्यञ्जनं हल्, स्वादिस्सुप्, त्यादिस्तिङ्, इत्यादि " इति ॥

[3] आदिर्वर्ण इति॥ सूत्रे आदिपदेन अविशेषाद्वर्णो वचनं वा सूत्रकृद्व्यवहारात् गृह्यत इत्याशयः। तेन सुस् इति प्रथमाविभक्तिबोधकप्रत्याहारे वचनं, अस् इति द्वितीयाविभक्तिबोधकप्रत्याहारे वर्णः, इत्यादि बोध्यम्। यद्यपि षष्ठीविभक्तिबोधकप्रत्याहारे ङम् इत्यत्र आदिर्ङो न वर्णः, नापि वचनरूपः, तथाऽपिस्वरविशिष्टव्यञ्जनस्य वर्णत्वाभिप्रायेणेदं स्यात्। अथवा वचनमित्युपलक्षकं वचनावयववर्णसंघातस्यापीत्याशयः स्यात् ॥

[4] अत्र शास्त्रे अनुक्तशास्त्रान्तरीयप्रक्रियादरणस्य 'अनुक्तमन्य-' (प्रा. सू. १-१-२) इत्यादिसूत्रेण बोधनात् 'न विभक्तौ' (पा. सू. १-३-४) इत्यादिपाणिनीयसूत्रेण विभक्त्यन्त्यवृत्तिसकारादीनामित्संज्ञाभावात् पाणिनीये अन्त्येत्संज्ञकस्य प्रत्याहारोपयोगित्वेऽप्यत्र शास्त्रे न तदपेक्षणमित्याशयेन अनिताऽप्यन्त्यव्यञ्जनेनेत्यत्रोक्तमित्यनुसंधेयम् ॥

इति द्वितीया, टास् इति तृतीया, ङ्स् इति चतुर्थी, ङसिस् इति पञ्चमी, अत्र षष्ठ्येकवचनं वेति संदेहनिरासाय ङ्स् इत्यनुक्त्वा ङसिस् इत्युक्तम्, ङम् इति षष्ठी, ङिप् इति सप्तमी ॥

[1] हो ह्रस्वः ॥ १-१-४ ॥

ह्रस्वस्य ह इति संज्ञा । एवं—

* दि दीर्घः ॥ १-१-५ ॥

[2] शषसाः शुः ॥ १-१-६ ॥

* सः समासः ॥ १-१-७ ॥

[3] आदिः खुः ॥ १-१-८ ॥

एतानि सूत्राणि स्पष्टानि ॥

---

[1] *हो ह्रस्व इत्यादि ॥ अत्र शास्त्रे ह्रस्वो ह इति, दीर्घो दि इति, समासः स इति सङ्केतितो ज्ञेय इति 'हो ह्रस्वः' 'दि दीर्घः' 'सस्समासः' इति सूत्रत्रयस्यार्थः । एतत्संज्ञाफलं तु 'दिहौ मिथस्से' (प्रा. सू. १-१-१८) इत्यादिसूत्रेषु दिहौ इति पदेन दीर्घह्रस्वौ स इत्यनेन समास इति चार्थो बुध्यते । ततश्चोक्तसूत्रस्य 'समासे दीर्घह्रस्वावन्योन्यं भवतः, ह्रस्वस्य धीर्घः दीर्घस्य ह्रस्वश्च भवति' इत्यर्थसंपत्त्या वेणुवणं इत्यादिसमासस्थले पूर्वपदान्त्यस्य ह्रस्वोकारस्य दीर्घे, णईसोत्तं इत्यादिसमासस्थले पूर्वपदान्त्यस्य दीर्घेकारस्य ह्रस्वे च वेणूवणं णइसोत्तं इत्यादिरूपसिद्धिर्भवतीति । 'दिर्दीर्घः' इत्यन्यत्र सूत्रपाठो दृश्यते ॥

[2] शषसाः शुरिति ॥ शकारषकारसकाराः शुरिति संकेतिता इति 'शषसाः शुः' इति सूत्रस्यार्थः । तेन 'शोस्सल्' (प्रा. सू. १-१-८७) इत्यादिविधिसूत्रेषु शोः शकारषकारसकाराणां 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इति सूत्रबलात् सल् नित्यं सकारो भवतीत्यर्थसंपत्त्या यशः वेषः इत्यदौ जसो वेसो इत्यादिरूपसिद्धिर्भवति ॥

[3] आदिः खुरित्यादि ॥ आदिः खुरिति, संयुक्तः स्तुरिति संकेतित इति 'आदिः खुः' 'संयुक्तः स्तुः' इति सूत्रद्वयस्यार्थः । तेन 'शोर्लुक् खोः स्तम्बसमस्तनिस्पृहपरस्परश्मशानश्मश्रुणि' (प्रा. सू. १.४.७५) इत्यादिविधिसूत्रेषु स्तोरित्यनुवृत्त्या च

[1] गो गणपरः ॥ १-१-९ ॥

गशब्दो गणवाचकादिशब्दस्थाने प्रयुज्यते ॥

[2] द्वितीयः फुः ॥ १-१-१० ॥

स्पष्टम् ॥

संयुक्तः स्तुः ॥ १-१-११ ॥

स्तुः संयुक्तस्य संज्ञा स्यात् ॥

[3] तु विकल्पे ॥ १-१-१२ ॥

स्पष्टम् ॥

इति संज्ञाप्रकरणम्.

---

स्तम्बादिषु स्तोः—संयुक्तसंबन्धिनः स्तोः आदिवर्णस्य लुग्भवतीत्यर्थसंपत्त्या स्तम्बादिशब्दे 'स्तः' इति संयुक्तसंबन्धिन आदिवर्णस्य सकारस्य लोपे तंबो इति रूपसिद्धिर्भवति ॥

[1] गो गणपर इति ॥ गशब्दो गणरूपार्थपरो द्रष्टव्य इति 'गो गणपरः' इति सूत्रस्यार्थः । तेन 'क्लीबे गुणगाः' (प्रा.सू. १.१.५२) इति सूत्रे गुणगा इत्यस्य गुणादिगणपठिता इत्यर्थसंपत्त्या तेषां क्लीबत्वबोधनेन गुणं देवं मण्डलग्गं इत्यादिरूपसिद्धिः फलम् ॥

[2] द्वितीय इति ॥ 'द्वितीयः फुः' इति सूत्रस्य द्वितीयः फुसंज्ञित इत्यर्थात् 'सप्तपर्णे फोः' (प्रा. सू. १.१.१३) इति विधिसूत्रगतफुपदस्य द्वितीयार्थकतया सप्तपर्णशब्दे द्वितीयाकारस्येकारो भवतीति सूत्रार्थसंपत्त्या सप्तपर्णशब्दे द्वितीयाकारस्येत्वे छत्तिवण्णो इत्यादिरूपं सिध्यति ॥

[3] तु विकल्प इत्यादि ॥ विकल्पेऽर्थे तुशब्दः संकेतित इति 'तु विकल्पे' (प्रा.सू. १-१-१५) इति सूत्रस्य, तथा शिति परे पूर्वस्य दीर्घो भवतीति 'शिति दीर्घः' इति सूत्रस्य चार्थात् 'शिश्लुङ् नपुनरि तु' (प्रा.सू. १.१.२८) इत्यादिविधिसूत्रेषु तुशब्दस्य वेत्यर्थकतया नपुनर्शब्दे अन्त्यहलः शानुबन्धौ इकारलुकौ वा भवत इत्यर्थसंपत्त्या नपुनर्शब्दस्य णउणर् इत्यवस्थायामन्त्यस्य हलो रेफस्यानेन इकारादेशेऽस्य शित्त्वात् 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति प्रदर्शितसूत्रबलात् पूर्वाकारस्य दीर्घे णउणाइ इति, श्यादेशस्यास्य वैकल्पिकतया एतदभावपक्षे लुकि तस्यापि शित्त्वात् स्थान्यपेक्षया पूर्वस्य दीर्घे णउणा इति, श्लुकोऽप्यस्य वैकल्पिकतया रेफस्य विसर्गोत्वादौ णउणो इति च रूपसिद्धिर्भवति ॥

इति संज्ञाप्रकरणम्.

# अथ परिभाषाप्रकरणम्

[1] प्रायो लिति न विकल्पः ॥ १-१-१३ ॥

[2] ल इत्यस्य तस्मिन् कार्ये प्रायो न विकल्पः ॥

शिति दीर्घः ॥ १-१-१४ ॥

स्पष्टम् ॥

[3] सानुनासिकोच्चारं ङित् ॥ १-१-१५ ॥

स्पष्टम् ॥

बहुलम् ॥ १-१-१६ ॥

अधिकारोऽयमा शास्त्रसमाप्तेः । तेन—

[4] क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । तच्च यथास्थानं वयमेव दर्शयिष्यामः ॥

द्विहौ मिथः से ॥ १-१-१७ ॥

समासे ह्रस्वस्य दीर्घः दीर्घस्य ह्रस्वश्च स्यात् । वेणुवनं—

---

अथ परिभाषाप्रकरणम्.

[1] प्राय इत्यादि ॥ लकारेत्संज्ञकविधेयविषये विकल्पो नास्तीति 'प्रायो लिति न विकल्पः' इति सूत्रार्थात् 'शोस्सल्' (प्रा. सू. १-१-८७) इत्यादौ सल्शब्देन नित्यं सकार इति बोधनेन यशो वेष इत्यादौ शकारषकारयोर्नित्यं सकारे जसो वेसो इत्यादिरूपसिद्धिर्भवति ॥

[2] 'ल् इत् यस्य तस्मिन् कार्ये' इति शुद्धपाठेनात्र भाव्यम् ॥

[3] सानुनासिकेत्यादि ॥ ङकारेत्कं कार्यमनुनासिकोच्चारणप्रयोजकं भवतीति 'सानुनासिकोच्चारं ङित्' इति सूत्रस्यार्थः । तेन 'कामुकयमुनाचामुण्डातिमुक्तके मो ङ्लुक्' (प्रा. सू. १-३-११) इत्यत्र विधीयमानस्य मवर्णलुको ङित्त्वेन लुकि सति शिष्टस्य उकाररूपस्वरस्य अनेन अनुनासिकत्वे कामुकादिशब्दानां काउँओ जउँणा जाउँण्डा अणिउँतअं इति रूपाणि सिध्यन्ति ॥

[4] क्वचित्प्रवृत्तिरित्यादि ॥ 'विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति' इत्येतदुत्तरार्धं बोध्यम् ॥

[1] वेणूवणं, वेणुवणम्। दीर्घस्य ह्रस्वः—नदीस्रोतः—णइसोत्तं, णईसोत्तम्। विस्तरभयादग्रे स्फुटत्वाच्च प्रक्रिया नोच्यते ॥

इति परिभाषाप्रकरणम्.

---

# अथ संधिप्रकरणम्.

## सन्धिस्त्वपदे ॥ १-१-१८ ॥

गुणसवर्णदीर्घादिसन्धिर्विकल्पेन स्यात्। सोऽप्येकपदमध्ये नैव स्यात्। वधूपगूढः—वहूवगूढो वहूउवगूढो। कवीश्वरः—कईसरो कइईसरो। एकपदे तु—मुणइ़ज्जइ–ज्ञायते ॥

## [2] करिष्यतेर्वा ॥ १-१-१९ ॥

काही, काहिइ ॥

## न यण् ॥ १-१-२० ॥

'इको यणचि' (पा. सू. ६-१-७७) इति विहितो [3] यण्सन्धिर्न स्यात्। दध्यत्र—दहि ऍत्थ। मध्वत्र—महु ऍत्थ ॥

## एङः ॥ १-१-२१ ॥

सन्धिर्न। देव्या आसनं—देवीए आसणम्। वत्सोऽभिनन्दितः—

---

[1] वेणूवणमिति ॥ बहुलाधिकारादत्र विभाषा दीर्घह्रस्वाविति भावः ॥

इति परिभाषाप्रकरणम्.

---

अथ संधिप्रकरणम्.

[2] करिष्यतेर्वेति ॥ इदं सूत्रं त्रिविक्रमवृत्तौ चन्द्रिकायां च न दृश्यते। एतत्साध्यं करिष्यतीत्यस्य काही काहिइ इति एकपदमध्येऽपि सन्धेर्वैकल्पिकत्वं तु बहुलाधिकाराद्भवतीति त्रिविक्रमवृत्तौ साधितम्। चन्द्रिकायां तु न दृश्यते ॥

[3] यणिति ॥ यणित्यनेन यवरलानां ग्रहणेऽपि प्राकृतेऽस्मिन् ऋकारऌकारयोरप्रयोगात् यकारवकाररूप एवात्र यण्सन्धिर्निषिध्यत इति तदभिप्रायेणैवात्र दहि ऍत्थ महु ऍत्थ इति इकारोकारघटितलक्ष्यद्वयं प्रदर्शितमिति बोध्यम्। दधि मधु इत्यत्र खघथधभाम् (प्रा. सू. १-३-२०) इति धकारस्य हकारे दहि महु इति भवति ॥

वच्छो अहिणंदिओ । अहो आश्चर्यं—अहो अच्चेरं इत्यादि [1]संस्कृतवदेव ॥

## शेषेऽच्यचः ॥ १-१-२२ ॥

युक्तस्य हलो लोपे योऽवशिष्यते स शेषः । तस्मिन् परेऽचः सन्धिर्न स्यात् । न पुनः—[2]ण उण । अत्र च—एत्थ अ । भोगचिह्नं—भोगइन्हम् । यत्तु—उदकं–उअअं इत्यादि, [3]तदपद इत्यपि सिद्धम् ॥

## (वा) [4]चक्रवाकशातवाहनयोः सन्धिर्वाच्यः ॥

चक्काओ । साळाहणो ॥

## (वा) सुपुरुषकुम्भकारद्वितीया(दी)नां वा वचनम् ॥

---

[1] संस्कृतवदेवेति ॥ संस्कृते 'ओत्' (पा. सू. १-१-१५). इति पाणिनीयसूत्रेण ओदन्तनिपातस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यं' (पा. सू- ६-१-१२५) इति पाणिनीयसूत्रेण प्रकृतिभावविधानात्तद्वदत्रापि संध्यभाव इति भावः ॥

[2] णउणेत्यादि॥ पुनर् चिन्हं इत्यत्र 'प्रायो लुक्कगचजतदपयवाम्' (प्रा. सू. १-३-८) इति सूत्रेण पकारचकारयोर्लोप इति भावः ॥

[3] तदपद इति ॥ 'सन्धिस्त्वपदे' (प्रा. सू. १-१-१८) इति सूत्रेणैवेत्यर्थः ॥

[4] चक्रवाकेत्यादि ॥ चन्द्रिकायामिदं वार्तिकद्वयं न दृश्यते । त्रिविक्रमवृत्तौ तु बहुलाधिकारात्सिध्यतीत्यभिप्रायेण 'क्वचित्सन्धिरेव, शालवाहनः—सालाहणो, चक्रवाकः—चक्काओ' इत्युदाहृतम् । चन्द्रिकायामपि बहुलाधिकाराद्वार्तिकद्वयाभिमतरूपाणि साधितानि दृश्यन्ते । तथा तत्रैव 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यत्र प्रायग्रहणाद्वकारलोपाभावपक्षे सालवाहणो चक्कवाओ इति रूपद्वयमित्युक्तम् । सालाहणो इत्यस्य संस्कृते शातवाहनशब्दः शालावाहनशब्दो वा प्रकृतिः, न तु लोकप्रसिद्धः शालिवाहनशब्द इत्युक्तम् शातवाहनशब्दस्य प्रकृतित्वे 'दोहदप्रदीपशातवाहनातस्याम्' (प्रा. सू. १-३-४१) इति तकारस्य लत्वम्, शालावाहनशब्दस्य प्रकृतित्वे तु 'ङ्यापोस्संज्ञाच्छन्दसोर्बहुलम्' (पा. सू ६-३-६३) इति पाणिनीयसूत्रेणापो ह्रस्व इति बोध्यम् ॥

[1] सुउरिसो—सूरिसो । कुम्भआरो—कुम्भारो । विईओ—वीओ ॥

## तिङः ॥ १-१-२३ ॥

तिङ्सम्बन्ध्य[2]चः अचि न सन्धिः । भवतीह—[3]होइ इह । पिबोदकं—पिज्ज [4]उअअम् ।

## लोपः ॥ १-१-२४ ॥

अचोऽचि बहुलं लोपस्स्यात् । निश्श्वासोच्छ्वासौ—णीसासूसासा । त्रिदशेशः—[5]तिअसेसो ॥

इति संधिप्रकरणम्.

---

[1] सुउरिसो इत्यादि ॥ सुपुरुष इत्येतद्विकृतिभूते सुउरिसो इत्यत्र 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यनेन पलोपे 'रोर्भुकुटीपुरुषयोरित' (प्रा. सू. १-२-६०) इति सूत्रेण रेफात्परस्योकारस्येत्वं, कुम्भकारविकृतौ कुम्भआरो इत्यत्र 'प्रायो लुक्' (प्रा. सू. १.३-८) इत्यादिना कलोप इति बोध्यम् ॥

[2] अच्च इत्यादि ॥ अच्यचः इति पूर्वसूत्रादनुवर्तत इत्याशयः ॥

[3] होइ इत्यादि ॥ भूधातोर्लटि तिपि 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तलोपे 'होहुवहवा भुवेस्तु' (प्रा. सू. ३-१-१) इत्यनेन धातोः हो इत्यादेशे 'न शपाम्' इति विकरणाभावे होइ इति रूपम् । पिबतेस्तु 'पट्टघोट्टडल्लपिज्जाः पिबेः' (प्रा. सू. ३-१-१६) इति पिज्जादेशः ॥

[4] उअअं इति ॥ उअअं इत्यत्र 'लोपः' (प्रा. सू. १-१-२४) इति वक्ष्यमाण-सूत्रेण यद्यप्यचो लोपः प्राप्तः, तथाऽप्यस्य लोपस्य सन्धिकार्यत्वात् 'सन्धिस्त्व-पदे' (प्रा. सू. १-१-१८) इत्यनेन सन्धिकार्यस्य एकपदे निषेधान्न प्रवर्तत इति बोध्यम् ॥

[5] तिअसेसो इति ॥ निअसेसो इत्यपपाठः । तिअसीसो इत्येवोदाहरणं न्याय्यम् । अन्यथाऽत्राचो लोपस्यैवादर्शनादेतत्सूत्रानुदाहरणत्वापातात् । तथैव क. ख.—कोशयोः पाठ उपलभ्यते च ॥

इति संधिप्रकरणम्.

# [1] अथान्त्यहल्विकारप्रकरणम्.

## अन्त्यहलोऽश्रदुदी [2] ॥ १–१–२५ ॥

[3] शब्दानामन्त्यहलो लोपः स्यात्। यशः—[4] जसो। तमः—तमो। इत्यादि। अश्रदुदीति किम्? श्रद्धा—सद्धा। उद्गतः—उग्गओ।

## निर्दुरि वा ॥ १–१–२६ ॥

निर् दुर् अनयोरन्त्यलोपो वा स्यात्। लोपाभावे लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुक्। [5] तदा द्वित्वं न। 'शोर्लुग्मयवर-

---

अथान्त्यहल्विकारप्रकरणम्.

[1] अथान्त्यहल्विकारेति ॥ अन्त्यहल्पदसम्बद्धसूत्रविहितविकारा अन्त्यहल्विकारा इत्यभिप्रायेण 'लोपः' (प्रा. सू. १-१-२४) इति पूर्वसूत्रस्यास्मिन्नन्त्यहल्विकारप्रकरणे अघटनमिति भावः ॥

[2] अश्रदुदी इति ॥ 'अश्रदुदि' इति क. ख.—पुस्तकयोः त्रिविक्रमवृत्तौ चन्द्रिकायां च ह्रस्वान्तपाठ एव सूत्रे दृश्यते। तत्र श्रच्च उच्च अनयोस्समाहारः श्रदुत्, न श्रदुत् अश्रदुत्, तस्मिन् इति विग्रहः, ततश्च श्रदुद्भिन्नवृत्त्यन्त्यहलो लोप इति सूत्रार्थः। एतद्ग्रन्थकारस्यापि ह्रस्वान्तपाठ एवाभिमत इति ज्ञायते, उत्तरत्र अश्रदुदीति किम् इति प्रत्युदाहरणप्रश्नपरवाक्यदर्शनात्। तस्मात्सूत्रेऽत्र अश्रदुदी इति दीर्घान्तपाठो लेखकप्रमादायात इति भाति ॥

[3] शब्दानामिति ॥ समासे तु पूर्वखण्डस्यापि पदत्वमिति विवक्षायामन्त्यलोपः, समुदायस्यैव पदत्वमिति विवक्षायामनन्त्यत्वान्न पूर्वखण्डान्त्यलोप इति विवक्षाभेदेन सद्भिक्षुः सज्जनः तद्गुणाः, इत्यादिसमासस्थले पूर्वखण्डान्त्यलोपालोपयोः सभिक्खू सब्भिक्खू, सजणो सज्जणो, तगुणा तग्गुणा, इति प्रत्येकं रूपद्वयमपीति वृत्तिकारत्रिविक्रमदेवाभिमतं ज्ञायते ॥

[4] जसो इति ॥ यशश्शब्दे 'आदेर्जः' (प्रा. सू. १-३-७४) इत्यादेर्यकारस्य जकारे जसो इति रूपसिद्धिर्बोध्या ॥

[5] तदेति ॥ दीर्घे सति 'दीर्घान्न' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधादित्याशयः ॥

**शोर्दिः ' (प्रा. सू. १-२-८) इति दीर्घः । णिसहं, [1] णिस्सहं णीसहं । दुर्भगः—दुहओ, पक्षे—दूहवो । 'दुरो रलुकि तु' (प्रा. सू. १-२-६३) इत्यूत्वम् । ' ऊत्वे सुभगदुर्भग ' (प्रा. सू. १-३-१८) इति वत्वम् ॥**

---

[1] **णिस्सहमिति** ॥ इदमत्रोदाहृतं णिस्सहं इति द्वित्वघटितं रूपं कथमुपपद्यत इति विमृश्यते । तथाहि—' निर्दुरि वा ' (प्रा. सू. १-१-२६) इत्यत्र स्तोरित्याद्यसम्बन्धात् अस्य संयुक्तविषयकत्वनियमाभावात् ' शेषादेशस्याह्रोऽचोऽखोः (प्रा. सू. १-४-८६) इति द्वित्वविधेश्च संयुक्तपदसम्बद्धसूत्रचोदितलोपस्थलप्रवृत्तिकतया तस्य निर्दुरि वा ' (प्रा. सू. १-१-२६) इत्येतत्सूत्रविहितलोपविषयेऽप्रवृत्तेः ।

यदि ' निर्दुरि वा ' इत्यस्य वैकल्पिकत्वादेतदभावात् ' लवरामधश्च ' (प्रा. सू. १-४-७८) इत्यस्य स्तोरित्यधिकारप्रविष्टतया संयुक्तविषयकत्वनैयत्यात् तेन रेफस्य लुकि 'शेषादेशस्याह्रोऽचोऽखोः ' (प्रा. सू. १-४-८६) इति द्वित्वमुपपद्यत इत्युच्येत, तदाऽपि शोर्लुसयवरशोर्दिः ' (प्रा. सू. १-२-८) इति दीर्घविधेर्जागरूकतया तस्य नित्यत्वाच्च ' दीर्घान्न ' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधस्य दुर्निवारत्वात् ।

यदि च संयुक्तपदसंबद्धसूत्रविहितलोपस्थल इव यथाकथंचित्संयुक्तस्थलप्रवृत्तिमत्सूत्रविहितलोपविषयेऽप्यविशेषात् ' शेषादेशस्याह्रोऽचोऽखोः ' (प्रा. सू. १-४-८६) इति द्वित्वप्रवृत्तिरिष्येत, तर्हि सर्वाभ्युपगतस्य द्वित्वाघटितस्य णिसहं इत्यस्य कथं साधुता स्यात् ।

यदि वा निसा सान्तेन सहितस्य द्वित्वघटितं रूपं साध्वित्युच्येत तदाऽप्यस्य ' निर्दुरि वा ' इत्युदाहरणपरतया प्रदर्शनं कथमुपपन्नं स्यात् ।

वस्तुतः सान्तोपसृष्टेऽपि ' कगटडतदप×क×पशोरुपर्यद्रे ' (प्रा. सू. १-४-७७) इत्यनेन सलोपस्य ' शोर्लुसयवरशोर्दिः ' (प्रा. सू. १-२-८) इति दीर्घस्य च दुर्वारतया ' दीर्घान्न ' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधस्य जागरूकतया च णिस्सहं इति द्वित्वघटितं नोपपद्यत इति ॥

तस्मात् अत्रत्यं मुद्रितचन्द्रिकागतं च णिस्सहं इति रूपान्तरलेखनं लेखकप्रमादपरिपतितमिति विभाव्यते । अत एव वृत्तिकारत्रिविक्रमदेवेनाप्यत्र णिसहो णीसहो इति रूपद्वयमेवोदाहृतं दृश्यते ॥

किंचैतत्कोशागारीये ३३३तमाङ्कयुते चन्द्रिकातालकोशेपि णिस्सहं इति द्वित्वघटितं रूपं नोदाहृतं दृश्यते । तस्माद्यत्रकुत्रचित् णिस्सहं इति द्वित्वघटितप्रयोगोपलम्भे तत्साधकं प्रमाणं गवेषणीयमिति ॥

## अन्तरि च नाचि ॥ १-१-२७ ॥

अन्तर्शब्दे नान्त्यलोपोऽचि। चान्निर्दुरोश्च। अन्तरङ्गम्। णिरन्त. रम्। दुरुत्तरम्॥

## (वा) [1] अन्तर उपरौ डात्वं वाच्यम् ॥

अंता उवरि ॥

## शिश्लुङ्नपुनरि तु [2] ॥ १-१-२८ ॥

नपुनर्शब्देऽन्त्यहलश्शिताविकारलुकौ वा स्तः। [3] णउणाइ ण- उणा। पक्षे— [4] णउण। [5] सिद्धावस्थायां 'अतो डो विसर्गः' (प्रा. सू- २-२-१२) इति डोत्वे तु णउणो॥

## (वा) [6] पुनरि शिर्वा(वा)च्यः ॥

पुणाइ। शित्त्वाद्दीर्घः। अत्र शस्य [7] प्रत्ययादित्वाभावेऽपि 'सिद्धि-

---

[1] अन्तर उपरीति॥ इदं वार्तिकं त्रिविक्रमवृत्तौ चन्द्रिकायां च 'क्वचिदन्ता उवरि इति च वर्तते' इति वाक्येन संगृहीतं दृश्यते॥

[2] शिश्लुगिति॥ 'शिश्लुङ्नपुनरि वा' इति त्रिविक्रमदेवानुमतस्सूत्रपाठः॥

[3] णउणाइ इति॥ यद्यप्यत्र पुनर्शब्दे पकारस्य पदादित्वात् 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिसूत्रे अखोरित्यनुवृत्त्या तस्य चानादेरित्यर्थकतया लुकः प्राप्तिर्नास्ति, तथाऽपि बहुलाधिकारात्, नपुनरित्यस्य समुदितस्यैव निपातत्वमित्यभिप्रायाद्वा पकारलोपोऽव्याहत इति बोध्यम्॥

[4] णउण इति॥ नपुनर्शब्दे प्रकृतसूत्रविहितयोः शिश्लुकोरुभयोरपि विकल्पतया तदुभयाभावपक्षे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यनेन रेफस्य लोपे पकारस्यापि पूर्ववल्लुकि 'आदेस्नु' (प्रा. सू. १-३-५३) इति नकारस्य णत्वे च णउण इति रूपम्॥

[5] सिद्धावस्थायामिति॥ नपुनः इति विसर्गान्तस्य प्रकृतित्वाभिप्रायकमिदम्॥

[6] पुनरि शिर्वेति॥ वार्तिकमिदं त्रिविक्रमवृत्तौ 'पुनर्शब्देऽपि पुणाइ इति दृश्यते' इति वृत्तिकारवाक्यात्मना दृश्यते॥

[7] प्रत्ययादित्वाभावेऽपीति॥ 'अनुक्तमन्यशब्दानुशासनवत्' (प्रा. सू. १-१-२) इत्यनेनात्र प्राकृतव्याकरणेऽनुक्तस्य व्याकरणान्तरीयक्रमस्यादरणबोधनेन

**लोंकात् (१-१-१) इत्युक्तेरित्त्वम् । एवं ङित्त्वम् । एतादृशस्थले ङित्त्व-सामर्थ्यादभस्यापि (टिलोपः) तत्कृतष्टिलोपः । तादृशस्थले टिभसंज्ञा च संपादनीया ॥**

## अविद्युति स्त्रियामाल् ॥ १-१-२९ ॥

**स्त्रीलिङ्गशब्दानामन्त्यहल आत्वं स्यात् । लित्त्वान्नित्यम् । सरित्—सरिआ । संपत्—संपआ । अविद्युति किम् ? [1] विज्जू । [2] अत्रात्वस्येष-त्स्पृष्टयकारप्रश्लेषेणोच्चारणं कार्यम् ॥**

## रो रा ॥ १-१-३० ॥

**स्त्रियामन्त्यहलो रस्य रा स्यात् । गीः—गिरा । धूः—धुरा । पूः—पुरा । [3] स्त्रियामात्वबाधनार्थमिदं सूत्रम् ॥**

---

लशक्वतद्धिते' (प्रा. सू १-३-८) इति पाणिनीयसूत्रे 'षः प्रत्ययस्य' (प्रा. सू. १-३-६) इत्यतः प्रत्ययस्येत्यनुवृत्त्या प्रकृतसूत्रविहितस्य शेरादेशरूपतया प्रत्ययत्वा-भावेन तदवयवशकारस्य प्रत्ययादित्वाभावात्तस्येत्संज्ञा न प्राप्नोतीति शङ्कितुरभि-प्रायः॥

[1] **विज्जू इति** ॥ विद्युच्छब्दे 'द्यय्ययां जः' (प्रा. सू. १-३-१०) इत्यनेन संयुक्तस्य द्य् इत्यस्य जादेशे 'शेषादेशस्याह्रोऽचोऽखोः' (प्रा. सू. १-४-२६) इत्यनेन तस्य द्वित्वेऽन्त्यहलो लोपे सोः शिलुकि शित्त्वाद्दीर्घे विज्जू इति रूपम् । लो वा विद्यु-त्पत्रपीतान्धात्' (प्रा. सू. २-१-२६) इत्यनेन पाक्षिके लप्रत्यये विज्जुला इत्यन्य-दप्यस्य रूपं बोध्यम् ॥

[2] **अत्रात्वस्येति** ॥ 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिसूत्रेण कादे-र्लुक्यवशिष्टस्यैवाकारस्य 'यश्रुतिरः (प्रा. सू. १-३-१०) इत्यनेनास्पष्टश्रुतियकारस्य विधानादत्र तेन लुगभावेऽपि प्रकृतसूत्रविहितस्याकारस्यापि बहुलाधिकारादस्पष्टयकार-श्रुतिरिति त्रिविक्रमदेवेनोक्तं दृश्यते ॥

[3] **आत्वबाधनार्थमिति**—प्रकृतसूत्राभावे पूर्वसूत्रेणात्वे रेफश्रवणं न स्यादिति भावः ॥

## हः क्षुत्ककुभि ॥ १-१-३१ ॥

**अनयोरन्त्यहलो हः स्यात्। 'अजाद्यतः' (पा. सू. ४-१-४) इति टाप्। [1] छुहा। कउहा ॥**

## धनुषि वा ॥ १-१-३२ ॥

**धणुहं। [2] सान्तत्वाभावात्क्लीबमेव। पक्षे धणू ॥**

---

[1] **छुहा कउहा इति**—क्षुच्छब्दे 'स्पृहादौ' (प्रा. सू. १-४-२२) इत्यनेन स्पृहादित्वात्संयुक्तस्य क्ष इत्यस्य छत्वम्। ककुप्शब्दे द्वितीयककारस्य 'प्रायोलुक्कगचजतदपयवाम्' (प्रा. सू. १-३-८) इत्यनेन लुगिति बोध्यम् ॥

[2] **सान्तत्वाभावादिति**॥ सकारान्तं नकारान्तं च दामशिरोनभश्शब्दभिन्नं शब्दस्वरूपं पुंलिङ्गे प्रयोज्यमित्यर्थकेन 'स्नमदामशिरोनभो नरि' (प्रा. सू. १-१-४९) इत्यनेन दामादिभिन्नसकारनकारान्तानामेव पुंलिङ्गतया धनुश्शब्दान्त्यसकारस्य प्रकृतसूत्रेण हकारादेशे सान्तत्वाभावात् पुंलिङ्गविधेरप्रवृत्त्या नपुंसकत्वात् धणुहं इत्येकं रूपम्, हकारादेशस्य वैकल्पिकत्वात्तदभावे सकारान्ततया 'स्नमदाम' (प्रा. सू. १-१-४९) इति सूत्रप्रवृत्त्या पुंलिङ्गतया 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति लोपे णत्वे सोः शिलुकि शित्वाद्दीर्घे धणू इत्यन्यदपि रूपमित्याशयः। एवमेव वृत्तिकारत्रिविक्रमदेवेनापि धणुहं धणू इत्येवोदाहृतं दृश्यते ॥

चन्द्रिकायां तु धणुहो धणू इति द्वयमपि पुंलिङ्ग एवोदाहृतं दृश्यते। हादेशेऽपि धनुश्शब्दप्रकृतेः सान्ततया 'स्नमदाम' (प्रा. सू. १-१-४९) इति पुंस्त्वविधेरक्षतत्वादित्याशयः प्रतिभाति। प्राकृतमणिदीपकृदप्युत्तरत्र 'स आयुरप्सरसोः' (प्रा. सू. १-१-३४) इति सूत्रे 'प्राक्सान्तत्वादपि पुंस्त्वं' इति वक्ष्यति। युक्तं चैतत्—अन्यथा हकारादेशाभावपक्षेऽपि 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यनेन हलो लोपस्य सर्वैरभ्युपगततया लोपे सति हादेश इव सान्तत्वाभावात्पुंलिङ्गविधेरप्रवृत्त्यापातात् धणू इति सर्वाभ्युपगतरूपासिद्ध्यापत्तेः। तथा चन्द्रिकायामेव 'धनुर्मनसोर्नपुंसकत्वमिति केचित्' इति पक्षान्तरप्रदर्शनपूर्वकं हादेशे तदभावे च धणुहं धणु इति रूपद्वयमपि प्रदर्शितं दृश्यते। एवं च धणुहो धणू धणुहं धणु इति रूपचतुष्टयमपि साध्विति प्रतिभाति ॥

## सशाशिषि ॥ १-१-३३ ॥

आशिषः सश्वा स्यात् । आसीसा । [1] सान्तत्वाभावात् स्त्रियामेव । [2] पक्षे—आसी ॥

## स आयुरप्सरसोः ॥ १-१-३४ ॥

अनयोरन्त्यहलः सो वा स्यात् । [3] आयू आयुसो । प्राक्सान्तत्वादपि-

---

[1] सान्तत्वाभावादिति ॥ 'स्नमदाम' (प्रा. सू. १-१-४९) इत्यादिसूत्रगत-स्नम्पदस्य प्रकृतिगतसान्तत्वाभिप्रायकताया अवश्यवक्तव्यत्वस्य पूर्वं धनुश्शब्दप्रक्रिया-स्थले प्रदर्शितत्वात् यद्यप्यत्राशीश्शब्दे सशादेशात्पूर्वं सान्तत्वमस्त्येवेति 'स्नमदाम' (प्रा. सू. १-१-४९) इत्यादिना पुंस्त्वं प्राप्नोति, तथाऽपि तत्र 'अदामशिरोनभः' इत्यस्य पर्युदासतया तद्बलेन लक्ष्यानुरोधमाश्रित्य 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिः' (परि—७५) इति व्याकरणान्तरस्थपरिभाषाबलेन क्लीबतया सादृश्य-मुपादाय दामादिभिन्नतत्सदृशक्लीबसान्तनान्तानामेव पुंस्त्वमिति 'स्नमदाम' (प्रा. सू. १-१-४९) इत्यादिसूत्रार्थसंपत्त्या आशीश्शब्दस्य सान्तत्वेऽपि नपुंसकत्वाभावात्पुंस्त्व-विधेरप्रवृत्त्या स्त्रीत्वमेवोचितमिति युक्तमत्र वक्तुम् ॥

[2] पक्षे आसी इति ॥ सशादेशस्यास्य वैकल्पिकत्वेऽप्येतदभावपक्षे 'अविद्युति स्त्रियामाल्' (प्रा. सू. १-१-२९) इत्यनेनात्वस्य दुर्वारतया तस्य नित्यत्वाच्च आसिआ इत्येव पक्षे रूपमिति वक्तुमुचितम् । अत एव चन्द्रिकायां लक्ष्मीधरोऽपि आसीसा आसिआ इत्येव रूपद्वयमुदाजहार ॥

मुद्रितत्रिविक्रमवृत्तौ त्वत्र 'आसीसा आसी, पक्षे आत्वं आसीआ' इति दृश्यते' तत्रापीदं परिचिन्तनीयम्—पूर्वोक्तरीत्या पक्षे आत्वस्य दुर्वारतया आसी इति रूपान्तरानुपपत्तिः, पक्षे सत्यप्यात्वे तस्य शित्त्वाभावात्पूर्वस्य इकारस्य दीर्घानुपपत्त्या आसीआ इति रूपं कथं संगच्छेतेति । तस्मान्मुद्रितत्रिविक्रमवृत्तौ दृश्यमानं मातृका-दोषसमुपनतमित्युररीकरणीयम् । अत एवैतत्कोशागारीयलिखितत्रिविक्रमवृत्तितालको-शयोः (नं. ११७५, ३६८५) आसीसा आसिआ इत्येव रूपद्वयमुदाहृतमुपलभ्यते चेति॥

[3] आयू आयुसो इति ॥ अत्र 'प्रायो लुक्कगचजतदपयवाम्' (प्रा. सू. १-३-८) इत्यनेन यलोपस्य प्रवृत्त्यौचित्यात् आऊ आउसो इति निर्यकारोदाहरणं युक्तम् । त्रिविक्रमवृत्तावपि निर्यकारोदाहरणमेव दृश्यते ॥

पुंस्त्वम् । [1] अच्छरा अच्छरसो । चन्द्रिकायां अच्छरआ इत्यपि । अप्सरस एकवचनान्तत्वमपीष्यते ॥

## दिक्प्रावृषि ॥ १-१-३५ ॥

अनयोः सः स्यात् । [2] पृथग्योगान्नित्यम् । [3] दिसो [4] पाउसो ।

## [5] शरदामत् ॥ १-१-३६ ॥

---

[1] **अच्छरा इति** ॥ सादेशस्य वैकल्पिकतया तदभावपक्षे 'अविद्युति स्त्रियामाल्' (प्रा. सू. १-१-२९) इत्यात्वस्यौचित्यात् सत्यात्वे 'सन्धिस्त्वपदे' (प्रा. सू. १-१-१९) इत्येकपदमध्ये सन्धिनिषेधात् अच्छरआ इत्येवात्र पाक्षिकं रूपमुदाहर्तुमुचितम् । एवमेव त्रिविक्रमवृत्तौ चन्द्रिकायां च दृश्यते । अस्मिन्नप्सरश्शब्दे प्सस्य 'थ्यश्चत्सप्सामनिश्चले' (प्रा. सू. १-४-२३) इति छादेशो द्वित्वं च ज्ञेयम् ॥

[2] **पृथग्योगान्नित्यमिति** ॥ यद्ययं 'दिक्प्रावृषि' (प्रा. सू. १-१-३५) इति सूत्रविहितस्सादेशो विकल्पः स्यात्तर्हि पूर्वसूत्र एव दिक्प्रावृट्शब्दावपि पठित्वा 'स आयुरप्सरोदिक्प्रावृषाम्' इत्येकसूत्रकरणेनैव सिद्धे तद्विहाय पृथक्सूत्रकरणं नित्यत्वग्राहकमिति भावः ॥

[3] **दिसो इति** ॥ अत्र दिसो इति लेखकप्रमादायत्तः पाठः । सादेशस्यादन्ततया दिक्शब्दस्य स्त्रीलिङ्गतया च टापि दिसा इत्येवात्रोदाहरणं न्याय्यम् । एवमेव त्रिविक्रमवृत्तौ चन्द्रिकायां च दृश्यते ॥

[4] **पाउसो इति** ॥ प्रावृट्शब्दस्य स्त्रीलिङ्गत्वेऽपि 'शरत्प्रावृट्' (प्रा. सू. १-१-५०) इत्यनेन पुंस्त्वविधानात् पुंलिङ्गता । 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि 'ऋतुगे' (प्रा. सू. १-२-८१) इत्यनेन ऋत्वादित्वादत्रत्यऋकारस्योत्वे प्रकृतसूत्रेण अन्त्यषकारस्यादन्तसादेशे च रामशब्दवत् पाउसो इति रूपम् ॥

[5] **शरदामदिति** ॥ इदं सूत्रं चन्द्रिकायां लक्ष्मीधरेण 'शरदामल्' इति पठित्वा लिखान्नित्यमिति विवृतम् । त्रिविक्रमवृत्तावत्र च 'शरदामत्' इति सूत्रपाठ उपात्तो दृश्यते ॥

[1] शरत्प्रकाराणामन्त्यस्यात् स्यात् । शरत्—[2] सरओ । भिषक्—भिसओ । आपः—[3]आआ ॥

## तु सक्खिणभवंतजंमणमहंताः ॥ १-१-३७ ॥

एते निपात्यन्ते । साक्षी—सक्खिणो । पक्षे—[4]सक्खी । एवं भवान्—भवंतो । पक्षे—भवं । भवताम् (प्रा. सू. ३-२-२३) इति शौरसेनीयो मः, तद्व्यत्ययश्चेतीह कृतः । जन्मन्—[5]जंमणो जम्मो । महान्—महंतो । पक्षे—महम् । भवताम् (प्रा. सू. ३-२-२३) इति मः ॥

## यत्तत्सम्यग्विष्वक्पृथको मल् ॥ १-१-३८ ॥

एतेषामन्त्यस्य मल् स्यात् । लित्त्वान्नित्यम् । यत्—[6]जं । तत्—

---

[1] शरत्प्रकाराणामिति ॥ सूत्रे शरदामिति बहुवचनमाद्यर्थकम् । तेन च शरदादिगणलाभः । गणे च परस्परसदृशानां पाठ इति शरत्प्रकाराणामित्यर्थलाभ इति भावः ॥

[2] सरओ इत्यादि ॥ 'शरत्प्रावृट्' (प्रा. सू. १-१-५०) इत्यनेन शरच्छब्दस्य पुंस्त्वम् । शरद्भिषक्शब्दगतयोः शषकारयोः 'शोः सल्' (प्रा. सू. १-३-८७) इति सूत्रेण सकारादेशः ॥

[3] आआ इति ॥ अप्शब्दे 'अप्तृन्' (पा. सू. ६-४-११) इत्यादिपाणिनीयसूत्रेणोपधादीर्घे अविद्युति स्त्रियामाल्' (प्रा. सू. १-१-२९) इत्यनेनान्त्यस्यात्वमिति बोध्यम् ॥

[4] सक्खी इति ॥ साक्षिशब्दे सक्खिणादेशस्य विकल्पतया तदभावपक्षे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यनेन अन्त्यस्य नकारस्य लोपे 'संयोगे' (प्रा. सू. १-२-४०) इति संयुक्तात्पूर्वस्य ह्रस्वे ततः 'क्षः' (प्रा. सू. १-४-८) इत्यनेन क्षस्य खत्वे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे च सक्खी इति रूपम् ॥

[5] जंमणो जंमो इति ॥ जन्मन्शब्दस्य क्लीबत्वेऽपि 'स्नमदामशिरोनभोनरि' (प्रा. सू. १-१-४९) इति सूत्रात्पुंस्त्वं बोध्यम् ॥

[6] जं इति ॥ यच्छब्दे 'आदेर्जः' (प्रा. सू. १-३-७४) इति यकारस्य जकारो बोध्यः ॥

तं । यत्तदो[1]रव्यययोरेव । सम्यक्—[2]सम्मं । [3]विष्वक्—[4]विस्सं । पृथक्—पिहं ॥

## मोऽचि वा ॥ १-१-३९ ॥

---

[1] अव्यययोरेवेति ॥ 'अनुक्तमन्यशब्दानुशासनवत्' (प्रा. सू. १-१-२) इत्यनेनानुक्तातिदेशस्य सूत्रबोधिततया पाणिनीयव्याकरणप्रसिद्धायाः सहचरितपरिभाषायाः (परि ११२) अत्राश्रयणेन पृथक्प्रभृतिसाहचर्याद्यत्तदोरप्यव्यययोरेव ग्रहणम् । अनव्यययोरप्यत्र यत्तदोर्ग्रहणे तु प्रकृतसूत्रेणान्त्यहलो मकारादेशे 'मङ्लुगसंबद्धेः' (प्रा. सू. २-२-३०) इति सोर्मादेशे च 'जम्म्' इत्याद्यनिष्टं रूपं स्यादिति भावः ॥

[2] सम्ममिति ॥ सम्यक्शब्दे यकारस्य 'मनयाम्' (प्रा. सू. १-४-७९) इति लुकि शिष्टस्य मस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे प्रकृतसूत्रेण अन्त्यहलो मलादेशे च सम्ममिति रूपम् ॥

[3] विस्समिति ॥ विष्वक्शब्दे संयुक्तसंबन्धिनो वस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि षस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे प्रकृतसूत्रेणान्त्यहलो मलादेशे च विस्समिति रूपमिति भावः । इदमत्रावधेयम्—विष्वक्शब्दे द्वितीयवकारोत्तराकारस्य 'उल् ध्वनिगवयविष्वचि वः' (प्रा. सू. १-२-१६) इत्युत्वस्य, संयुक्तावयवस्य वस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुगनन्तरं 'शोर्लुप्त' (प्रा. १-२-८) इत्यादिना इकारदीर्घस्य च दुर्वारतया ततो 'दीर्घान्न' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधस्यापि जागरूकतया च वीसुमित्येव रूपं सुसंगतम् । अत एव त्रिविक्रमवृत्तावपि वीसुमित्येवोदाहृतं दृश्यते चेति ॥

[4] पिहमिति ॥ पृथक्शब्दे 'ढः पृथकि तु' (१-३-२१) इति विहितढादेशस्य वैकल्पिकतया तदभावपक्षे 'खघथधभाम्' (प्रा. सू. १-३-२०) इति थस्य हत्वे 'वृष्टिपृथङ्मृदङ्गनप्तृकपृष्ठे' (प्रा.सू. १-२-८४) इत्यत्रत्यऋकारस्येत्वोत्वयोर्विधानादित्वपक्षे प्रकृतसूत्रेणान्त्यहलो मलादेशे च पिहमिति रूपम् । अत्रैव ऋत उत्वपक्षे तु पुहमिति रूपम् । थस्य पूर्वप्रदर्शितेन 'ढः पृथकि तु' (प्रा. सू. १-३-२१) इति सूत्रेण ढादेशपक्षे तु पिढं पुढमिति रूपद्वयमन्यदपि बोध्यम् ॥

अन्त्यहलो [1] मस्य मो वा स्यादचि । वृषभमजयं—[2] उसहमजअं [3] उसहं अजयं ॥

इति अन्त्यहल्विकारप्रकरणम्.

---

# अथ बिन्दुप्रकरणम्.

## बिन्दुल् ॥ १-१-४० ॥

अन्त्यहलो मस्य बिन्दुः स्यात् । [4] लित्त्वान्नित्यम् । फलं—फलं ॥

## हलि ङञणनानाम् ॥ १-१-४१ ॥

बिन्दुः स्यात् । ङ, अङ्को—अंको । ञ, काञ्चणं—कंचणं । ण, कण्ठो—कंठो । न, विन्ध्यो [5] विंधो । झत्वे विंझो ॥

---

[1] मस्य मो वेति ॥ मकारस्य मकारविधानं लोपव्यावृत्त्यर्थमिति बोध्यम् ॥

[2] उसहमिति ॥ वृषभशब्दे 'खघथधभाम्' (प्रा.सू. १-३-२०) इति भस्य हत्वे 'उद्वृषभे वुः' (प्रा. सू. १-२-७९) इति वृशब्दस्योत्वे 'शोस्सल्' (प्रा.सू. १-३-८७) इति षस्य सत्वे चेदं रूपम् ॥

[3] उसहं इति ॥ प्रकृतमकारादेशस्य विकल्पतया तदभावपक्षे अन्त्यहल्लोपं बाधित्वा 'बिन्दुल्' (प्रा. सू. १-१-४०) इति वक्ष्यमाणसूत्रेण बिन्दुरिति भावः ॥

इति अन्त्यहल्विकारप्रकरणम्.

---

अथ बिन्दुप्रकरणम्.

[4] लित्वान्नित्यमिति ॥ 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इत्यत्र परिभाषासूत्रदर्शनादिति भावः ॥

[5] विंधो इति ॥ 'ध्यह्योर्झल्' (प्रा. सू. १-४-२६) इति झलादेशस्य लित्त्वान्नित्यतया झकारादेशे द्वित्वादावनुस्वारे च विंझो इति रूपस्यैवोचितत्वात्त्रिविक्रमवृत्तावपि तथैवोदाहरणाच्च कथमिदं रूपं साधु स्यादिति परिचिन्तनीयम् ॥

## स्वरेभ्यो वक्रादौ ॥ १-१-४२ ॥

बिन्दुः स्यात्—वक्रं—वंकं ॥

[1] वक्रकुद्मलबुद्धाश्वपुच्छकार्कोटवृश्चिकाः ।
गुच्छदर्शनमूर्धानः परशुत्र्यश्रगृष्टयः ।
स्पर्शनश्मश्रुमार्जाराः प्रथमाद्बिन्दुशालिनः ॥
छन्दःपूर्तौ देवनागे मनस्विन्यां प्रतिश्रुति ।
मनश्शिलायां [2]पार्श्वास्थि फोर्वयस्यमनस्विनोः ।
तृतीयात्तु स्वराद्बिन्दुः स्यादुपर्यतिमुक्तयोः ॥

देवनागसुवक्त्रं—देवंणाअसुवत्तं । वाक्ये तु देवणाअं पश्य ॥

---

[1] वक्रकुद्मलेत्यादि ॥ अत्र चन्द्रिकायां वक्रादिगणः मनस्विन्यादिगणः उपर्यादिगणश्चेति गणत्रयं निर्दिश्य वक्र-कुद्मल-गुच्छ-पुच्छ-बुध्न-सृष्टि-कर्कोटक-दर्शन-पशु-स्पर्श-अस्थि-अश्रु-त्र्यश्र-मार्जार-वृश्चिकमूर्ध्नां प्रथमात्स्वरात्परो बिन्दुः, मनस्विनी-प्रतिश्रुन्मनश्शिलावयस्यानां द्वितीयात्स्वरात्परो बिन्दुः, उपर्यतिमुक्तामुक्तेत्यादीनां तृतीयात्स्वरात्परो बिन्दुरित्युक्तम् ॥

त्रिविक्रमवृत्तौ तु—'वंकं कुंपलं बुंधं पुंछो गुंछो गिंठी कंकोडो दंसणं फंसो अंसू मंसू तंसं मंजारो विंचुओ मुंधा मणंसी मणंसिणी पडिंसुआ मणंसिला वअंसो उअरिं अणिउंतअं' इति रूपाण्युदाहृत्य 'वक्र-कुद्मल-बुद्ध-पुच्छ-गुच्छ-गृष्टि-कर्कोट-दर्शन-स्पर्श-अश्रु-श्मश्रु-त्र्यश्र-मार्जार-वृश्चिक-मूर्ध-मनस्वि-मनस्विनी-प्रतिश्रुत्-मनश्शिला-वयस्य-उपरि-अतिमुक्तक' इति वक्रादिगणः परिगणितो दृश्यते । तथा गृष्टिमार्जारमनश्शिला-शब्दानां गिट्ठी मजारो मणसिला (मणोसिला) इति रूपान्तरमपि क्वचिद्दृश्यत इत्युक्तं च । अत्र च वृश्चिकशब्दस्य विंचुओ इत्युदाहरणं कथं संगतं स्यादिति चिन्तनीयम्—यतस्तत्र 'श्चेर्वृश्चिके ञ्चुर्वा' (प्रा.सू. १-४-१८) इति ञ्चुआदेशस्य वैकल्पिकतया विधानादादेशपक्षे विञ्चुओ इति रूपस्य, आदेशाभावपक्षे च 'थ्यश्चत्सप्सामनिश्चले' (प्रा. सू. १-४-२३) इति श्चस्य छादेशे 'इल् कृपगे' (प्रा. सू. १-२-७६) इति ऋकारस्येत्वे प्रकृतसूत्रेण बिन्दौ च विंछिओ इत्यस्यैव रूपस्योचितत्वादिति ॥

[2] फोरित्यादि ॥ फोरितीदं द्वितीयादित्यर्थकम्, 'द्वितीयः फुः' (प्रा. सू. १-१-११) इत्यत्रत्यसंज्ञासूत्रदर्शनादिति ज्ञेयम् । सूत्रान्तरतद्वृत्त्यादिषु वक्रादौ वयस्य-शब्दपाठादर्शनेन तन्मतानुरोधेन वयस्सो इत्यपि रूपं साध्विति केचिन्मन्यन्ते ॥

(वा) गृष्टिमार्जारमनश्शिलानां वावचनम् ॥

[1]गिट्ठी गिंठी इत्यादि ॥

## क्त्वासुपोस्तु सुणात् ॥ १-१-४३ ॥

क्त्वाप्रत्ययस्य सुपश्च संबन्धिनः [2]सुकाराण्णकाराच्च परो बिन्दुः [3]स्यात्। काऊण काऊणं—कृत्वा। [4]वच्छेण वच्छेणं—वृक्षेण। [5]सुपि-वच्छेसु वच्छेसुं—वृक्षेषु ॥

---

[1]गिट्ठी गिंठी इति ॥ गृष्टिशब्दे ' इत् कृपगे ' (प्रा. सू. १-२-७६) इति ऋकारस्येत्वे ' ष्टः ' (प्रा. सू. १-४-१४) इति ष्टस्य ठादेशे तस्य ' शेषादेशस्य ' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य ' पूर्वमुपरि ' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे प्रकृतवचनेन बिन्दोर्वैकल्पिकतया विधानाद्बिन्दुपक्षे गिंठी इति, तदभावपक्षे च गिट्ठी इति रूपम् ॥

[2] सुकारादिति ॥ ' उच्चैस्तरां वा वषट्कारः ' (पा. सू. १-२-३५) इत्यत्र वषट्कार इति निर्देशेन क्वचिद्वर्णसमुदायादपि कारप्रत्ययस्य अभ्यनुज्ञानात्सुकाराण्णकारादित्यत्रोक्तम्। क्त्वाप्रत्यये सुकारासंभवेन सुकारादिति सुप्येवान्वेति। णकारादिति तु ' तुमत्तुआणतूणाः क्त्वः ' (प्रा. सू. २-१-२९) इति क्त्वाप्रत्ययस्यादेशविधानात् तृतीयैकवचने सुपि दर्शनाच्च क्त्वासुपोरुभयोरप्यन्वेतीति बोध्यम्। तेन क्त्वाप्रत्ययसंबन्धिनो णकारात् सुप्संबन्धिनः सुकाराण्णकाराच्च परो बिन्दुर्भवतीति प्रकृतसूत्रार्थः ॥

[3] स्यादिति ॥ वा स्यादित्युचितम्। सूत्रेऽस्मिन् विकल्पार्थकतुशब्दसत्त्वात्। अग्रे तथैवोदाहरणाच्च ॥

[4] वच्छेणेत्यादि ॥ वृक्षशब्दे ' ऋतोऽत् ' (प्रा. सू. १-२-७४) इत्यनेन ऋकारस्याकारादेशे संयुक्तस्य क्षस्य ' स्पृहादौ ' (प्रा. सू. १-४-२२) इत्यनेन छकारादेशे तस्य ' शेषादेशस्य ' (प्रा. सू १-४-८६) इत्यादिना द्वित्वे पूर्वस्य ' पूर्वमुपरि ' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे तृतीयैकवचनगतणकारात्परं बिन्दुपक्षे वच्छेणं इति, तदभावपक्षे वच्छेण इति रूपम्। तथा ' वुश्च रुर्वृक्षे ' (प्रा. सू. १-४-७) इत्यनेन क्षस्य खत्वे तस्य द्वित्वे पूर्ववर्णादेशे वृशब्दस्य र्वादेशे बिन्दुविकल्पे च रुक्खेणं रुक्खेण इत्यन्यदपि रूपद्वयं बोध्यम् ॥

[5] सुपीति ॥ सौत्रक्रमानुरोधात् वच्छेणेत्यतः पूर्वमिदमुदाहर्तुमुचितम् ॥

## लुग्वा मांसादौ ॥ १-१-४४ ॥

मांसादौ [1]बिन्दोर्लुग्वा स्यात् । मासं । पक्षे मंसं—मांसं ।
[2]मांसादिस्तु तदानीं कथमेवं किं करोमि नूनमिदानीम् ।
कांस्यं मांसलसंमुखपांसुलपांसव इतीरितो हि गणः ॥

## संस्कृतसंस्कारे ॥ १-१-४५ ॥

बिन्दो[3]र्लुक्स्यात् । [4]सक्कओ सक्कारो ॥

## विंशतिषु त्या श्लोपल् ॥ १-२-४६ ॥

[5]विंशतिप्रकारेषु ति इत्यवयवेन सह बिन्दोर्लोपः स्यात् । लित्वान्नित्यम् । शित्वाद्दीर्घः । विंशतिः—वीसा । त्रिंशत्—[6]तीसा ।

---

[1] बिन्दोर्लुग्वेति ॥ पूर्वसूत्राद्वार्थकतुशब्दानुवृत्त्या तदनुरोधादनुवृत्तबिन्दुल्पदस्य षष्ठ्यन्ततया विपरिणामाच्चायमर्थो लब्धः ॥

[2] मांसादिरिति ॥ त्रिविक्रमवृत्तौ तु तदानींकरोमिपांसुलशब्दा नात्र कण्ठतः पठिताः । कथम्—कह कहं । एवं—एव्व एव्वं । किम्—कि किं । नूनं—णूण णूणं । इदानीम्—इआणि इआणिं । कांस्यम्—कासं कंसं । मांसलं—मासलं मंसलं । संमुखम्—समुहं संमुहं । पांसुः—पासू पंसू, इति मांसादीनां रूपाणि ॥

[3] लुक्स्यादिति ॥ पृथक्सूत्रकरणान्नित्यं लुगित्यर्थः ॥

[4] सक्कओ इति ॥ संस्कृतशब्दे प्रकृतसूत्रेण बिन्दोर्लुकि 'ऋतोऽत्' (प्रा. सू. १-२-७४) इति ऋकारस्यात्वे 'कगटड' (प्रा. सू. १-४-७७). इत्यादिना संयुक्तोपरिस्थसकारस्य लुकि ककारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारस्य लोपे च सक्कओ इति रूपम् ॥ एवं संस्कारशब्देऽपि तकाराभावात्तलुग्वर्जं प्रक्रिया बोध्या ॥

[5] विंशतिप्रकारेष्विति ॥ सूत्रेऽस्मिन् विंशतिष्विति बहुवचनमाद्यर्थकम् । सदृशानामेव गणे संनिवेश इति विंशतिप्रकारेष्विति लभ्यत इति भावः । सूत्रे त्या इति संभवाभिप्रायम् । तेन विंशत्यादिषु तिशब्दसत्त्वे तस्य लोप इति सिध्यति । तिशब्दघटिता एव विंशत्यादय इति नार्थः । तथा सति त्रिंशत्—तीसा इत्यादिरूपासिद्धिप्रसङ्गात् ॥

[6] तीसेति ॥ त्रिंशच्छब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि शकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वे 'अविद्युति स्त्रिया-

(वा) [1]दंष्ट्राया वाच्यः ॥

दाढा ॥

[2]सिंहे वा ॥ १-१-४७ ॥

सीहो सिंघो । [3]विंशतेः स्त्रियामेव—पप्फुळ्ळळोअणाविंसई—प्रफुल्ललोचनाविंशतिः ॥

इति बिन्दुप्रकरणम्.

---

# अथ लिङ्गव्यवस्था.

## स्नमदामाशिरोनभो नरि ॥ १-१-४८ ॥

---

माल्' (प्रा. सू. १-१-२९) इत्यन्त्यस्य तकारस्यात्वे प्रकृतसूत्रेण बिन्दोर्लोपे च तीसेति रूपम् ॥

[1] दंष्ट्राया इति ॥ 'दग्धविदग्धदंष्ट्रावृद्धे' (प्रा. सू. १-४-३५) इति संयुक्तस्य ढादेशे प्रकृतवचनात् बिन्दोः श्लोपलि शिल्वात्पूर्वस्य दीर्घे दीर्घात्परत्वात् 'दीर्घान्न' (पा. सू. १-४-८७) इति द्वित्वनिषेधाच्च दाढेति रूपम् । त्रिविक्रमवृत्तौ तु दंष्ट्राशब्दो विंशत्यादिष्वेव पठितो दृश्यते । 'विंशत्यादिषु त्या श्लोपल्' (प्रा सू. १-१-४८) इत्येतत्सूत्रात्पूर्वं किंशुकशब्दे बिन्दोर्डिदकारादेशस्य वैकल्पिकतया विधानेन केसुओ किंसुओ इति रूपसाधकं 'डे तु किंशुके' (प्रा. सू. १-१-४६) इत्येकं सूत्रं, तथा वर्गीयपूर्ववृत्तिबिन्दोः तत्तद्वर्गीयपञ्चमाक्षरादेशविधायकं 'वर्गेऽन्त्यः' (प्रा. सू. १-१-४७) इत्यन्यदपि सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[2] सिंहे वेति ॥ इदं च त्रिविक्रमवृत्तौ 'सिंघो इत्यपि दृश्यते' इति वाक्यरूपेण दृश्यते । तथा सिंहशब्दो विंशत्यादावेव तत्र पठितश्च ॥

[3] विंशतेः स्त्रियामेवेति ॥ सूत्रे विंशतिष्विति बहुवचनमर्थप्राधान्याभिप्रायम् । तेन विंशत्यर्थस्य यत्र प्राधान्यं तत्रैव विंशतिशब्दे तिइत्यवयवेन सह बिन्दोर्लोपो नित्यो भवतीत्येतत्सूत्रार्थात् प्रफुल्ललोचनविंशतिरित्यादिबहुव्रीहिस्थले विंशत्यर्थस्यान्यपदार्थे प्रत्युपसर्जनत्वान्न तत्र प्रकृतसूत्रप्रवृत्तिरिति तत्र पप्फुल्ललोअणविंसई इत्येव रूपमिति भावः ॥

इति बिन्दुप्रकरणम्.

---

सान्तं नान्तं च शब्दरूपं [1] पुंसि प्रयोज्यम् । यशस्–[2]जसो । तमस्–तमो । अदामेत्यादि किम् ? [3] दामं सिरं णहम् ॥

(वा) [4] चर्मशर्मसुमनस्सदोवयसां नेति वाच्यम् ॥

चम्मं सम्मं इत्यादि ॥

(वा)[5] धनुषस्तु हे साति न ॥

[6] धणुहं ॥

(वा) [7] से सत्यसति च नाप्सरसः ॥

अच्छरा [8] अच्छरसा ॥

---

अथ लिङ्गव्यवस्थाप्रकरणम्.

[1] पुंसीति ॥ सूत्रे नरीति पुंलिङ्ग इत्यर्थकं बोध्यम् ॥

[2] जसो इति ॥ 'आदेर्जः' (प्रा. सू. १-३-७४) इति यशश्शब्दाद्यवयवयकारस्य जकारो बोध्यः ॥

[3] दामं सिरं णहमिति ॥ दामशिरोनभश्शब्दान्त्यहलः 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यनेन लोपः । शिरश्शब्दे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शकारस्य सकारः । नभश्शब्दे 'आदेस्तु' (प्रा. सू. १-३-५३) इति नकारस्य णकारः, भकारस्य 'खघथधभाम्' (प्रा. सू. १-३-३०) इति हकारादेशश्च ॥

[4] चर्मशर्मेत्यादि ॥ एतद्वार्तिकफलं त्रिविक्रमवृत्तौ बहुलाधिकारात्साधितं दृश्यते ॥

[5] धनुषस्त्वित्यादि ॥ चन्द्रिकायामिदं न दृश्यते। हकारादेशेऽपि पुंलिङ्ग एव धणुहो इति तत्रोदाहृतं च ॥

[6] धणुहमिति ॥ 'धनुषि वा' (प्रा. सू. १-१-३२) इति धनुश्शब्दे सकारस्य हकारादेशः ॥

[7] से सतीत्यादि ॥ 'स आयुरप्सरसोः' (प्रा. सू. १-१-३४) इत्यनेन सादेशस्य वैकल्पिकतया विधानात्तत्प्रवृत्त्यप्रवृत्तिपक्षयोरुभयोरपि पुंलिङ्गता नास्तीत्यर्थः । वार्तिकमिदं त्रिविक्रमवृत्तौ चन्द्रिकायामपि नोपात्तम् । सान्तत्वात्पुंस्त्ववारणं तु पर्युदासन्यायाश्रयणात्सिध्यतीति तदाशयस्स्यादिति (१६ पृ.) पूर्वमेवोक्तम् ॥

[8] अच्छरसेति ॥ अच्छरआ इत्येवात्रोदाहर्तुमुचितम् । चन्द्रिकायामपि तथैवोदाहृतमिति च (१७ पृ.) पूर्वमेवोक्तम् ॥

## (वा) [1] शरत्प्रावृषौ पुंस्येव ॥

सरओ पाउसो ॥

## अक्ष्यर्थकुलाद्या वा ॥ १-४-४९ ॥

अक्षिपर्यायाः कुलाद्याश्च पुंसि वा स्युः । एसो [2] अच्छी, एदं अच्छि । [3] अञ्जल्यादित्वात् स्त्रियामपि । एसा अच्छी. । णअणं णअणो । कुळं कुळो ॥

विद्युच्छन्दोभाजनमहात्म्यदुःखवचनानि कुलादीनि । विज्जू । [4] पक्षे यथाप्राप्तं स्त्रीत्वमेव ॥

## क्लीबे गुणगाः ॥ १-१-५० ॥

[5] गुणादयः क्लीबे वा प्रयुज्यन्ते । गुणं । पक्षे–गुणो ॥

गुणदेवमण्डलाग्राः खड्गो बिन्दुश्च कररुहो वृक्षः । मोहश्च ।

---

[1] शरत्प्रावृषावित्यादि ॥ त्रिविक्रमवृत्ताविदं सूत्रात्मना निर्दिश्य व्याकृतमुपलभ्यते ॥

[2] अच्छी इति ॥ अक्षिशब्दे 'स्पृहादौ' (प्रा. सू. १-४-१२) इत्यनेन क्षस्य छत्वम् । ततो द्वित्वं 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना । पूर्वस्य तद्वर्गीयप्रथमवर्णादेशश्च 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना बोध्यः ॥

[3] अञ्जल्यादित्वादिति ॥ 'स्त्रियामिमाञ्जलिगाः' (प्रा. सू. १-१-४९) इति सूत्रे अञ्जल्याद्यर्थकाञ्जलिगपदसत्त्वादिति भावः ॥

[4] पक्ष इति ॥ प्रकृतसूत्रविहितपुंस्त्वस्य वैकल्पिकतया तदभावपक्षे विद्युच्छब्दस्य स्त्रीलिङ्गतया तत्र 'लो वा विद्युत्पत्रपीतान्धात्' (प्रा. सू. २-१-२६) इत्यनेन लत्वे विज्जुला इति रूपं बोध्यम् ॥

[5] गुणादय इति ॥ 'गो गणपरः' (प्रा. सू. १-१-१०) इति गणार्थे गशब्दस्य संकेतात् सूत्रस्थस्य गुणगा इत्यस्य गुणादय इत्यर्थो बोध्य इति भावः । गुणादिगणेऽस्मिन् चन्द्रिकायां कण्ठशब्दोऽधिकः पठ्यते । वृत्तावस्यां गणेऽस्मिन् पठितो मोहशब्दस्तु त्रिविक्रमवृत्तौ चन्द्रिकायां च न दृश्यते ॥

## स्त्रियामिमाञ्जलिगाः ॥ १–१–५१ ॥

इमान्ता अञ्जल्यादयः स्त्रियां वा स्युः। गरिमो गरिमा। पृथ्वादेरिमनिचः 'त्वस्य तु डिमात्तणौ'(प्रा.सू.२-१-१३) इति वक्ष्यमाणत्वादेशस्य च तन्त्रेण ग्रहणम्। तेन पटुत्वं—पडिमो पडिमा। अत्र पक्षे [1] पुंस्त्वं वाच्यम्। त्वादेशस्येमनन्तत्वाभावेनेमनिज्वत्पुंस्त्वाभावप्रसङ्गात्। सो अंजळी सा अंजळी ॥

कुक्षिबली निधिरश्मिप्रश्नाक्षिग्रन्थचौर्यविधिपृष्ठाः।
अञ्जल्यादयः। [2] पृष्ठस्य कृतेत्वस्यैव। अन्यत्र पट्ठम् ॥

इति लिङ्गव्यवस्थाप्रकरणम्.

इति दक्षिणसमुद्राधीश्वरचोक्कनाथभूपालप्रियसचिव-सज्जनावलम्ब-
ब्रह्मण्यबिरुदाङ्क-चिनबोम्मभूपालहृदयकुहरविहरमाण-
साम्बशिवप्रेरितेनाप्पयदीक्षितेन कृते
प्राकृतमणिदीपे प्रथमाध्यायस्य
प्रथमः पादः.

---

[1] पुंस्त्वं वाच्यमिति॥ अत्र त्रिविक्रमवृत्तौ चन्द्रिकायां च 'त्वादेशस्य स्त्रीत्वमेवेच्छन्त्येके' इत्युक्तम् ॥

[2] पृष्ठस्य कृतेत्वस्यैवेति॥ 'पृष्ठेऽनुत्तरपदे' (प्रा. सू. १-२-७८) इति सूत्रेण अनुत्तरपदभूतपृष्ठशब्दावयवऋकारस्य वैकल्पिकत्वेत्वविधानादित्वपक्षेऽनेन स्त्रीत्वम्' तदभावपक्षे 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यनेन अत्वे तु नपुंसकत्वमेवेति भावः। अत एव त्रिविक्रमवृत्तावपि 'पृष्ठमित्वे कृते स्त्रियामेवेत्येके' इत्युक्तम्। तथा चन्द्रिकायामपि 'इत्वं स्त्रियामेवेत्येके' इत्युक्तम्। पिट्ठी इत्यप्युदाहृतं च। तत्र स्त्रीत्वेऽपीकारान्तत्वं कथमिति परिचिन्तनीयम् ॥

इति लिङ्गव्यवस्थाप्रकरणम्.

इति महिशूरराजकीयप्राच्यकोशालयविदुषः तिरु-तिरु. श्रीनिवास-
गोपालाचार्यस्य कृतौ दीधित्यभिख्यायां प्राकृतमणि-
दीपटिप्पण्यां प्रथमाध्यायस्य
प्रथमः पादः ॥

## अथ प्रथमाध्यायस्य द्वितीयः पादः.

# स्वरविकारप्रकरणम्.

[1] आदेः ॥ १-२-१ ॥

अधिकारोऽयं 'अस्तोरखोरचः' (प्रा. सू. १-३-७) [2] इति यावत् वक्ष्यामः ॥

[3] वाऽलाब्वरण्ये ॥ १-२-२ ॥

अनयोरादेरचो लुग्वा स्यात् । [4] ळाऊ अळाऊ । रण्णं अरण्णं ।

---

अथ प्रथमाध्यायस्य द्वितीयः पादः.

स्वरविकारप्रकरणम्.

[1] आदेरिति ॥ एतत्सूत्रात्पूर्वं सूत्रपाठे 'निःप्रत्योरोत्परि माल्यस्थोर्वा' (प्रा. सू. १-२-१) इत्येकं सूत्रं पठ्यते । तस्य चायमर्थः—निर् प्रति इत्यनयोः माल्यस्थाशब्दयोः परतः यथाक्रमं ओ परि इत्यादेशौ वा भवत इति । निर्माल्यं—ओमल्लम् निम्मल्लम् । प्रतिष्ठा—परिट्ठा पइट्ठा इत्युदाहरणम् । सूत्रस्यास्य समुदायादेशविधायकतया स्वरमात्र-विकारविधायकत्वाभावात्स्वरविकार प्रकरणेऽत्र एतद्वृत्तिकृता नोल्लिखितमिति भाति ॥

[2] इति यावदिति॥ मर्यादायामयं यावच्छब्दः । तेन 'अस्तोः'(प्रा.सू. १-३-७) इत्यादिसूत्रपूर्वतनसूत्रमभिव्याप्य आदेरिति संबध्नातीति सिध्यति ॥

[3] वाऽलाब्वरण्य इति ॥ एतत्सूत्रात्पूर्वं 'लुगव्ययत्यदाद्यात्तदचः' (प्रा. सू. १-२-३) इत्येकं सूत्रं सूत्रपाठे दृश्यते । तस्य चायमर्थः—अव्ययात्त्यदाद्याच्च परयोरव्यय-त्यदाद्योरादेरचो बहुलं लुग्भवतीति । उदाहरणं च—वयमत्र-अम्हेत्थ अम्हे एत्थ । यदीमाः—जइमाः जइ इमाः' इति ॥

[4] ळाऊ इत्यादि ॥ यद्यपि अलाबूशब्दे बकारलोपविधायकसूत्रादर्शनेन बकार-घटितमेवोदाहर्तुमुचितम् । तथैव चन्द्रिकायामुदाहृतं च, तथाऽपि वबयोरभेद इति न्यायात् 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना वकारलोपविधिदर्शनात्तदभेदेन बस्यात्र लोप इत्याशयः स्यादिति भाति । वस्तुतोऽत्र 'बो वः' (प्रा. सू. १-३-६१) इत्यनेन बकारस्य वकारः कुतो न भवतीति परिचिन्तनीयम् । त्रिविक्रमवृत्तौ विकार घटितमेवेदमुदाहृतं दृश्यते । तत्र वकारविधानसामर्थ्याच्च 'प्रायो लुक्' (प्रा. सू. १-३-८) इति वकारस्य न लुगिति बोध्यम् । पैशाच्यामेव लकारस्य ळकारविधानात्प्रा-कृते ळकारघटितं कथमिति चिन्तनीयम् । अत्र तु वृत्तौ प्रायस्सर्वत्रोदाहरणेषु लकारस्थाने ळकार एव लिखितो दृश्यते ॥

## अपेः पदात् ॥ १–२–३ ॥

पदात्परस्यापेरादेर्लुक्स्यात् । [1] किं वि-किमपि । पदात्किम्? अवि णाम-अपिनाम ।

## इतेः ॥ १–२–४ ॥

इतेरादे [2] र्लुक्स्यात् । किंति–किमिति । पदादित्येव । इत्याह इअ आह । 'इतौ तः' (प्रा. सू. १-२-४५) इति द्वितीयेकारस्यात्वम् ॥

## तोऽचः ॥ १–२–५ ॥

अचः परस्येतेरादेस्तः स्यात् । तथेति–तहत्ति । झश् इति–[3] झत्ति ॥

## [4]शोर्लुप्तयवरशोर्दिः ॥ १–२–६ ॥

यैर्युक्ता यवरशषसा लुप्तास्तेभ्यः शषसेभ्य आदेः परस्याचो दीर्घः स्यात् । दिर्लुप्तयवरशौ शाविति यावत् । श, [5] कश्यपः–कासओ ।

---

[1] किं वि इति ॥ 'पो वः' (प्रा.सू. १-३-५५) इत्यपेः पकारस्य वकारादेशः । अस्य लुको वैकल्पिकत्वात्तदभावपक्षे किमवि इत्यप्युदाहरणं बोध्यम् ॥

[2] लुक्स्यादिति ॥ योगविभागान्नित्यमिदमिति बोध्यम् । अन्यथा तु 'अपीत्योः पदात्' इत्येव सूत्रितं स्यादिति ॥

[3] झत्तीति ॥ नन्वत्र पूर्वपदान्ते हलस्सत्त्वादचः परत्वाभावादितिशब्दस्य आदेः कथं प्रकृतसूत्रेण तकार उपपद्यत इति चेदित्थम्—'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यनेन अन्त्यहलो लोपानन्तरं अचः परत्वमक्षतमिति ॥

[4] शोरित्यादि ॥ यद्यपि 'शोस्सल्' (प्रा. सू. १-३-८७) इत्यनेन शषसानां सकारादेशस्य नित्यतया विधानात् 'साल्लुस' इत्यादिन्यासेऽप्यदोषः, तथाऽपि मात्रालाघवासंभवेप्यादेशपर्यन्तानिरीक्षणकृतज्ञानलाघवसंभवेन वैचित्र्यार्थं च 'शोर्लुप्त' (प्रा. सू. १-२-८) इत्यादौ शोरित्युक्तिरिति भाति ॥

ये लुप्तस्वपूर्वोत्तरान्यतरयवरशषसकाः शषसाः तेभ्य आदेरचो दीर्घ इति शोर्लुप्तेत्यादिसूत्रार्थो बोध्यः ॥

[5] कासओ इत्यादि ॥ कश्यपशब्दे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना शलोपस्य 'मनयाम्' (प्रा. सू. १-४-७९) इत्यनेन यलोपस्य च प्रसक्तौ

**विश्वासः—वीसासो । विश्रामः—वीसामो । कर्शितः—कासिओ । दुश्शासनः—दूसासणो । ष, शिष्यः—सीसो । विष्वक्—वीसुं । 'उल् ध्वनि' (प्रा. सू. १-२-१५) इत्युत्वं वक्ष्यते । कर्षकः— कासओ । स, सस्यं — सासं । पिकस्वरः—पिआसरो । उस्रः—ऊसो ॥**

**निस्सहः—[1] णीसहो ॥**

## (वा) जिह्वाया वलोपे दीर्घो वाच्यः ॥

**जिह्वा—[2] जीहा ।**

---

'अनुक्तमन्य' इत्यादिन्यायात् पाणिनीयवत् विप्रतिषेधन्यायाश्रयणात् यकारस्यैव लोपे प्रकृतसूत्रेण शात्पूर्वस्याकारस्य दीर्घे दीर्घात्परत्वात् 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिविहितद्वित्वस्य 'दीर्घान्न' (प्रा. सू. १-४-८७) इति निषेधे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सत्वे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना पलोपे च कासओ इति रूपम् । इत्थमेव विश्वासविश्रामशब्दयोरपि वकार-रेफयोः 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुग्बोध्यः । कर्शित इत्यत्र तु 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्यत्र चकारादुपरितनरेफस्यापि लुको बोधनेन रस्य लुग्बोध्यः । दुश्शासनशब्दे च 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना शकार-लोपे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सत्वे 'नः' (प्रा. सू. १-३-५२) इति नस्य णत्वं च बोध्यम् । शिष्य इत्यत्र 'मनयाम्' (प्रा. सू. १-४-७९) इति यलोपः पूर्ववत् शस्य सत्वं च । विष्वक् इत्यत्र 'यत्तत्सम्यग्विष्वक्पृथको मल्' (प्रा. सू. १-१-३८) इति ककारस्य मकारस्ततो बिन्दुश्च । कर्षक इत्यत्र 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्युपरितनरेफस्य लुक्, शस्य सत्वं च । सस्यमित्यत्र 'मनयाम्' (प्रा. सू. १-४-७९) इति यकारस्य लुक् । पिकस्वर इत्यत्र 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वस्य लुक् 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना कस्य लुक्च । उस्र इत्यत्र 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्यनेन रेफस्य लुक् । एषु सर्वेपूदाहरणेषु कश्यपशब्दवत् प्रकृतसूत्रेण शोः पूर्वस्य दीर्घो बोध्यः ॥

[1] णीसहो इति ॥ निस्सहशब्दे निसः सकारस्य 'कगटडतदप◠क◠पशोरु-पर्यद्रे' (प्रा. सू. १-४-७७) इति प्रथमस्य सस्य लोपे प्रकृतसूत्रेण पूर्वस्येकारस्य दीर्घे 'आदेस्तु' (प्रा. सू. १-३-५३) इति नस्य णत्वे च णीसहो इति रूपम् ॥

[2] जीहेति ॥ जिह्वाशब्दे वकारस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि प्रकृतसूत्रेणेकारस्य दीर्घे च जीहेति रूपम् ॥

## [1]हे दक्षिणेऽस्य ॥ १-२-७ ॥

'न वा तीर्थदुःखदक्षिणदीर्घे' (प्रा. सू. १-४-६३) इति हत्वे सति दक्षिणस्यादेरतो दीर्घः स्यात्। [2]दाहिणो। [3]अन्यत्र दक्खिणो ॥

## तु समृद्ध्यादौ ॥ १-२-८ ॥

समृद्ध्यादेरादेरतो वा दीर्घः स्यात्। [4]समिद्धी सामिद्धी ॥

[5]प्रतिषिद्धसदृक्षमनस्विनीप्रसुप्तप्रवासिचतुरन्ताः।
अभिजात्यस्पर्शप्रवचनप्रसिद्धिप्ररोहपरकीयाः।
प्रतिपत्प्रकृतप्रकटाः सह प्रतिस्पर्धिना समृद्ध्यादिः ॥

---

[1] त्रिविक्रमवृत्तिमुद्रितकोशे तु 'हि दक्षिणेऽस्य' इति सूत्रपाठो दृश्यते ॥

[2] दाहिणो इति ॥ दक्षिणशब्दे 'न वा तीर्थदुःखदक्षिणदीर्घे' (प्रा. सू. १-४-६३) इति सूत्रेण संयुक्तस्य क्षस्य हत्वे पूर्वस्य प्रकृतसूत्रेण दीर्घे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादौ अह इत्युक्त्या 'दीर्घान्न' (प्रा. सू. १-४-८७) इति निषेधाच्च न हस्य द्वित्वम् ॥

[3] अन्यत्र दक्खिणो इति ॥ 'न वा तीर्थ' (प्रा. सू. १-४-६३) इत्यादिविहित-हत्वस्य वैकल्पिकत्वात्तदभावपक्षे 'क्षः' (प्रा. सू. १-४-८) इत्यनेन क्षस्य खत्वे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे च दक्खिणो इति रूपम् ॥

[4] समिद्धी सामिद्धी इति ॥ समृद्धिशब्दे ऋकारस्य 'इल् कृपगे' (प्रा. सू. १-२-७६) इति सूत्रेण इत्वे प्रकृतसूत्रेणादेरतो दीर्घतदभावपक्षयोः समिद्धी सामिद्धी इति रूपद्वयम् ॥

[5] प्रतिषिद्धेत्यादि ॥ अत्र प्रतिषिद्धेति स्थाने प्रतिसिद्धीति त्रिविक्रमवृत्ति-चन्द्रिकयोः पठितो दृश्यते। तथा समृद्ध्यादिगणे चन्द्रिकायां प्रस्तुतशब्दोऽधिकः परि-गणितो दृश्यते। त्रिविक्रमवृत्तौ तु प्रकृतशब्दोऽत्र न कण्ठतः परिगणितः। मनस्विनी-शब्दस्थाने मनस्वीति पठितश्च। प्रतिषिद्धं—पाडिसिद्धं पडिसिद्धं। सदृक्षः—सारिच्छो सरिच्छो। मनस्विनी—माणंसिनी मणंसिणी। प्रसुप्तः—पासुत्तो पसुत्तो। प्रवासी—पावासू पवासू। चतुरन्तं—चाउरंतं चउरंतं। अभिजातिः—आहिआई अहिआई। अस्पर्शः—आफंसो अफंसो। प्रवचनम्—पावअणं पवअणं। प्रसिद्धिः—

## स्वप्नादाविल् ॥ १-२-९ ॥

स्वप्नादावादेरवर्णस्येत्वं स्यात्। लित्त्वान्नित्यम्। स्वप्नः—सिविणो। 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वलुक्। 'नात्स्वप्ने' (प्रा. सू- १-४-१०२) नात्प्रागित्वागमः। [1] पो वत्वं च ॥

[2] वेतसकृपणमृदङ्गोत्तमदत्तेषद्व्यळीकमरिचाश्च।
व्यजनम्' इति स्वप्नादिः।

(वा) [3] दत्तस्य णत्व एवेति वाच्यम् ॥

दिण्णम्। अन्यत्र दत्तं ॥

---

पासिद्धी पसिद्धी। प्ररोहः—पारोहो परोहो। परकीयं—पारकेरो परकेरो। पारक्यः- पारक्को परक्को। प्रतिपत्—पाडिवआ पडिवआ। प्रकटः—पाअडो पअडो। प्रकृतः— पाइओ पइओ। प्रतिस्पर्धी—पाडिप्पद्धी पडिप्पद्धी, इति समृद्ध्यादिपठितानां सिद्धरूपाणि बोध्यानि ॥

[1] पो वत्वं चेति ॥ यद्यपि 'पो वः' (प्रा. सू. १-३-५५) इत्यत्र असंयुक्तस्ये- त्यर्थकमस्तोरित्यधिकारप्राप्तम्, तथापि 'नात्स्वप्ने' (प्रा. सू. १-४-१०२) इत्यनेन स्वप्नशब्दे नकारात्प्रागिकारागमे असंयुक्तपकारलाभात्तस्य वकारादेशो नानुपपन्न इति भावः। तथाऽत्र नकारस्य 'नः' (प्रा. सू. १-३-५२) इति णत्वं बोध्यम् ॥

[2] वेतसेत्यादि ॥ वेतसः—वेडिसो। कृपणः—किविणो। मृदङ्गः—मुइङ्गो। उत्तमः—उत्तिमो। दत्तं—दिण्णं। ईषत्—ईसि। व्यलीकं—विलिअं। मरिचो— मिरिओ। व्यजनं—विअणं, इति स्वप्नादिगणपठितानां सिद्धरूपाणि बोध्यानि। अत्रत्य- वेतसशब्दस्य 'वेतस इति तोः' (प्रा. सू. १-३-३२) इति सूत्रे इत्वे सति तकारस्य डकारविधानाज्ज्ञापकात् स्वप्नादिपरिगणितवेतसशब्दादिमाकारस्येत्वं वैकल्पिकमिति ज्ञायते। ततश्च वेतसशब्दस्य वेअसो इत्यपरमपि रूपमित्यवसीयते। तथा दत्तशब्दे 'पञ्चदशदत्तपञ्चाशति णः' (प्रा. सू. १-४-३६) इति सूत्रविहितणत्वस्य बहुलाधिकाराद्वैकल्पिकत्वेन णत्वपक्ष एव स्वप्नादित्वादित्वमिति त्रिविक्रमवृत्तिचन्द्रिक- योरुक्तत्वाण्णत्वाभावपक्षे इत्वाभावात् दत्तमिति संस्कृतवदेव प्राकृतेऽप्यन्यद्रूपं बोध्यम् ॥

[3] दत्तस्येत्यादि ॥ त्रिविक्रमवृत्ताविदं वाक्यात्मना दृश्यते ॥

## [1] पक्काङ्गारललाटे तु ॥ १-२-१० ॥

पक्कं पिक्कं । अङ्गारो इङ्गालो । हरिद्रादित्वाल्लः । ललाटं [2] णिडालं । 'लो ललाटे च' (प्रा. सू. १-३-८०) इति [3] लस्य णत्वम् । ललाटे 'डलोः' (प्रा. सू. १-४-११४) इति डलयोः स्थितिपरिवृत्तिः ॥

## [4] सप्तपर्णे फोः ॥ १-२-११ ॥

छत्तिवंणो छत्तवंणो ॥

## [5] मध्यमकतमे च ॥ १-२-१२ ॥

मज्झिमो कइमो । पृथग्योगान्नित्यम् ॥

---

[1] पक्वाङ्गारेत्यादि ॥ अङ्गारशब्दे लत्व एवेत्वमिति त्रिविक्रमवृत्तिचन्द्रिकादौ दृश्यते । तस्मादत्र इत्वविकल्पाभिधानं लत्वे सतीत्वं, अन्यथा तु नेति व्यवस्थितविकल्पाभिप्रायकमिति बोध्यम् । अत एवात्र इत्वाभावपक्षे लकाराघटितं अंगारो इत्युदाहरणं दत्तम् । यद्यपि 'हरिद्रादौ' (प्रा. सू. १-३-७८) इति पृथग्योगकरणान्नित्यं लत्वं, तथाऽपि बहुलाधिकारात्कृतेत्वस्यैव लत्वमिति त्रिविक्रमवृत्तावेवाभिहितमिति न दोषः ॥

[2] णिडालमिति ॥ अत्रेत्वस्य वैकल्पिकत्वात्तदभावपक्षे णडालमित्यपि रूपं बोध्यम् । 'टो डः' (प्रा. सू. १-३-३१) इति ललाटशब्दे टकारस्य डकारः ॥

[3] लस्य णत्वमिति ॥ 'लो ललाटे च' (प्रा. सू. १-३-८१) इत्यत्रादेरिति सम्बन्धादाद्यलकारस्य णत्वमित्यर्थः ॥

[4] सप्तपर्णे फोरिति ॥ पूर्वसूत्रेभ्यः तु इल् अस्य इति पदत्रयमनुवर्तते । 'द्वितीयः फुः' (प्रा. सू. १-१-११) इति द्वितीयार्थे फुशब्दः 'तु विकल्पे' (प्रा. सू. १-१-१३) इति विकल्पार्थे तुशब्दश्च सङ्केतितः । तथा च सप्तपर्णशब्दे द्वितीयस्याकारस्येत्वं वा भवतीति सूत्रार्थः । सप्तपर्णशब्दे सकारस्य 'छल्षट्छमीसुधाशावसप्तपर्णे' (प्रा. सू. १-३-९०) इति सूत्रेण छकारः । 'पो वः' (प्रा. सू. १-३-५५) इति पकारस्य वकारश्च ॥

[5] मध्यमकतमे चेति ॥ पूर्वसूत्रेभ्यः अस्य इल् फोरित्यनुवृत्त्या मध्यमकतमशब्दयोर्द्वितीयस्यावर्णस्येत्वं भवतीति सूत्रार्थः । मध्यमशब्दे 'ध्यह्योर्झल्' (प्रा. सू. १-४-२६) इति ध्यस्य झत्वम् । कतमशब्दे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना कलोपश्च विशेषः ॥

## [1]हरे त्वी ॥ १-२-१३ ॥

हीरो हरो ॥

## उल् ध्वनिगवयविष्वाचि वः ॥ १-२-१४ ॥

एषु [2]वसम्बन्ध्यकारस्योत्वं स्यात्। लित्त्वान्नित्यम्। [3]झुणी। [4]गउओ। [5]वीसुं। व इत्येव, गउओ ॥

## ज्ञो णोऽभिज्ञादौ ॥ १-२-१५ ॥

'ज्ञम्नोः' (प्रा. सू. १-४-३७) इति णत्वे अभिज्ञादौ ज्ञस्य संबन्धिनो णस्य अवर्णस्योत्वं स्यात्। [6]अहिण्णू। णत्वाभावे— [7]अहिज्जो ॥

---

[1]हरे त्वीति ॥ हरशब्दाद्याकारस्य ईकारो वा स्यादिति सूत्रार्थः ॥

[2]वसंबन्धिन इति ॥ अव्यवहितोत्तरत्वं संबन्ध इति भावः। सूत्रेऽस्मिन् व इति पञ्चम्यन्तत्वाभ्युपगमेन वकारादुत्तरस्येत्यर्थवर्णनं तु सुस्पष्टमिति बोध्यम् ॥

[3]झुणी इति ॥ ध्वनिशब्दे 'त्वथ्वद्वध्वां क्वचिच्चछजझाः' (प्रा. सू. १-४-६५) इति सूत्रेण ध्वस्य झादेशः ॥

[4]गउओ इति ॥ गवयशब्दे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना वलोपः ॥

[5]वीसुमिति ॥ विष्वक्शब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वकारलोपः। 'शोर्लुस्यवरशोर्दिः' (प्रा. सू. १-२-८) इति इकारस्य दीर्घः, 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सकारः। 'यत्तत्सम्यग्विष्वक्पृथको मल्' (प्रा. सू. १-१-३८) इति ककारस्य मत्वे तस्य बिन्दुश्च ॥

[6]अहिण्णू इति ॥ अभिज्ञशब्दे 'खघथधभाम्' (प्रा. सू. १-३-२०) इति भकारस्य हकारः ॥

[7]अहिज्जो इति ॥ 'ज्ञो ञोऽविज्ञाने' (प्रा. सू. १-४-८२) इति ञकारलुको वैकल्पिकतया लुक्पक्षे ञकाराभावेन 'ज्ञम्नोः' (प्रा. सू. १-४-३७) इत्यनेन णत्वाप्रवृत्त्या णकाराभावात् 'ज्ञो णोऽभिज्ञादौ' इति प्रकृतसूत्रप्रवृत्त्यनवकाशात् 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना जकारस्य द्वित्वे इदं रूपमिति भावः। त्रिविक्रमदेवेनापीदं रूपमभिहितं दृश्यते। चन्द्रिकायां—' मनोज्ञाभिज्ञप्रज्ञासंज्ञाविज्ञा-

(वा) अभिज्ञादौ ञकारस्य लोपो वाच्यः ।

इति ञलोपः ॥

आगमसर्वात्मेङ्गितदैवाभिमनःकृता ज्ञान्ताः ।

तथा च आगमञ्ञ इत्यादिः । अन्यत्र न । [1] पण्णो–प्रज्ञः । संज्ञा–संणा ॥

[2] चण्डखण्डिते णा वा ॥ १–२–१६ ॥

अनयोरा[3]देरवर्णस्य णकारेण सह उत्वं वा स्यात् । चुडो चण्डो । खुडिओ खण्डिओ ॥

प्रथमे प्थोः ॥ १–२–१७ ॥

प्रथमे [4] पकारथकारसंबन्धिनोरवर्णयोर्युगपत्क्रमेण चोत्वं [5] स्यात् । [6] पुढुमं पुढमं पढुमं पढमं ॥

---

नेषु ज्ञस्य ण एव' इत्युक्त्वा तथैवोदाहृत्य विज्ञानशब्दे 'ज्ञो ञोऽविज्ञाने' (प्रा. सू. १-४-८२) इति ञकारलुकमनभिप्रेत्य अत्रैव 'जाणमुणौ ज्ञः' (प्रा. सू. १-४-१३०) इति ज्ञाधातोर्जाणादेशे विज्जाणमित्यप्यस्ति इत्युक्तिदर्शनात् अभिज्ञ-शब्दस्य लक्ष्मीधरसूरिः अहिज्जो इति रूपमनभ्युपगच्छन् जाणादेशेऽस्य अहिज्जाणमिति रूपान्तरमुररीकुर्वन्निव च भाति ॥

[1] पण्णो इति ॥ प्रज्ञशब्दे रेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि 'ज्ञम्नोः' (प्रा. सू. १-४-३७) इति ज्ञस्य णकारादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे चेदं रूपं बोध्यम् ॥

[2] चण्डखण्डिते इत्यादि ॥ 'णा वा चण्डखण्डिते' (प्रा. सू. १-२-१९) इति मुद्रितत्रिविक्रमवृत्तिकोशे एतत्सूत्रपाठः । एतत्सूत्रात्पूर्वं स्तावकसास्नशब्दयोः स्तुवओ सुण्हा इति रूपसाधकं 'स्तावकसास्ने' (प्रा. सू. १-२-१८) इत्येकं सूत्रं चाधिकमुपात्तं दृश्यते । सूत्रेऽस्मिन् णा इति ण् इति प्रातिपदिकात्तृतीयाविभक्तौ णकारेणेत्यर्थकः ॥

[3] आदेरिति ॥ अधिकाराल्लब्धमेतत् ॥

[4] पकारथकारसंबन्धिनोरिति ॥ 'लवरामधश्च' (प्रा. सू. १-३-७८) इति रेफस्य लुगनन्तरं तदव्यवहितोत्तरत्वसंबन्धेन अवर्णस्य पकारसंबन्धित्वमिति भावः ॥

[5] स्यादिति । वा स्यादित्युचितम् ॥ अत एवात्र पढमं इत्यप्युदाहृतं दृश्यते ॥

[6] पुढुमभित्यादि ॥ प्रथमशब्दे 'प्रथमशिथिलमेथिशिथिरनिषधेषु' (प्रा. सू. १-३४८) इति थकारस्य ढकारः ॥

## आर्यायां र्यः श्वश्र्वामूल् ॥ १-२-१८ ॥

श्वश्रूवाचिन्यार्यशब्दे र्यसंबन्ध्यत ऊ स्यात् । लित्त्वान्नित्यम् । [1] अज्जू । [2] अन्यत्र अज्जा ॥

## [3] तोऽन्तर्येल् ॥ १-२-१९ ॥

अन्तर्शब्दे तसंबन्ध्यत एत्वं लित्स्यात् । [4] अन्तेउरं ॥
(वा) [5] अन्तरङ्गादौ नेति वाच्यम् ॥

## [6] उत्करवल्लीद्वारमात्रचि ॥ १-२-२० ॥

[7] एष्वत एत्वं वा स्यात् । उक्केरं उक्करं । वेळ्ळी वळ्ळी । द्वारं- [8] वेरं वारं दुवेरं दुवारं । एतावन्मात्रं एत्तिअमेत्तं एत्तिअमत्तं ॥

---

[1] अज्जू इति ॥ आर्याशब्दे प्रकृतसूत्रेण र्यसंबन्ध्यवर्णस्य ऊत्वे र्यू इत्यस्य 'द्ययर्यां जः' (प्रा. सू. १-४-७४) इति जादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे पूर्वस्य 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे अज्जू इति रूपम् ॥

[2] अन्यत्रेति ॥ सूत्रे श्वश्र्वामित्युक्त्या श्वश्र्वतिरिक्तमात्राद्यर्थकार्याशब्दे ऊत्वा-प्रवृत्त्या अज्जेति रूपमित्यर्थः ॥

[3] तोऽन्तरिति ॥ एतत्सूत्रात्पूर्वं आसारशब्दस्य आसारो ऊसारो इति रूपद्वयसाधकं 'आसारे तु' (प्रा. सू. १-२-२२) इत्येकं सूत्रं सूत्रपाठेऽधिकं दृश्यते ॥

[4] अन्तेउरमिति ॥ अन्तःपुरशब्दे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना पलोपे प्रकृतसूत्रेण तकारोत्तराकारस्य एत्वे अन्तेउरमिति रूपम् ॥

[5] अन्तरङ्गादाविति ॥ अत्रादिपदेन अन्तर्गतान्तर्विस्रम्भादिसङ्ग्रहो बोध्यः ॥

[6] उत्करवल्लीत्यादि ॥ एतत्सूत्रात्पूर्वं पारावतशब्दस्य पारेवओ पारावओ इति रूपद्वयसाधकं 'पारावते तु फोः' (प्रा. सू. १-२-२४) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[7] अत इति ॥ आदेरिति शेषः । तेनोत्करादिशब्दे नान्त्याकारस्यैत्वमिति बोध्यम् ॥

[8] वेरमित्यादि ॥ द्वारशब्दे 'दौर्द्वारे' (प्रा. सू. १-४-८३) इत्यनेन दकार-वकारयोः पर्यायेण लुकि एत्वपक्षे देरं वेरमिति, एत्वाभावे च दारं वारमिति,

(वा) [1] मात्राशब्दे वाच्यः ॥

**भोजनमात्रं–भोअणमेत्तम् ॥**

## शय्यादौ ॥ १–२–२१ ॥

एत्वं स्यात् । [2] पृथग्योगान्नित्यम् ।

---

'वाष्छद्य' (प्रा. सू. १-४-१०९) इत्यादिना वकारात्प्रागुकारागमे पक्षे एत्व-तदभावयोः दुवेरं दुवारमिति, षड्रूपाणि बोध्यानि ॥

अत्रेदमवधेयम्—अत्र क्वचित्कोशे त्रिविक्रमवृत्तौ चन्द्रिकायां च दुआरमित्यपि रूपमुदाहृतं दृश्यते। तत्रोकारागमानन्तरं संयुक्ताभावात् कथं 'लवरामधश्च (प्रा. सू. १-४-७८) इति वकारलुकस्संयुक्ताधिकारीयस्य प्रवृत्तिस्स्यात् । यद्युकारागमात्पूर्वमेव वलुगङ्गीक्रियेत तर्हि संयुक्ताधिकारीयस्योत्वस्य कथं प्रवृत्तिः स्यात् । यदि च प्रामाणिकतत्प्रयोग उपलभ्येत, तदा 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना वकारलुका साधनीयः । एवं तत्रैव एत्वपक्षे दुएरमित्यपि सति प्रयोगे रूपान्तर-मङ्गीकरणीयं स्यादिति ॥

[1] **मात्राशब्द इति** ॥ उत्तरत्र भोअणमेत्तमित्युदाहरणदर्शनात् त्रिविक्रमवृत्त्या-दावपि तथैवोदाहरणाच्चात्र मात्रशब्द इति पाठस्साधुरिति भाति । भोजनमात्रशब्दे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना जकारस्य लुकि नकारस्य 'नः' (प्रा. सू. १-३-५२) इति णत्वे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि एत्वे प्राकृते ह्रस्वस्य एङस्सत्त्वात् 'दीर्घान्न' (प्रा. सू. १-४-८७) इति निषेधाभावेन 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तकारस्य द्वित्वे भोअणमेत्तमिति रूपं बोध्यम् ॥

[2] **पृथग्योगान्नित्यमिति** ॥ यद्येतत्सूत्रविहितमप्येत्वं वैकल्पिकं स्यात्तर्हि पूर्वसूत्रे शय्यादिपदासञ्जनेनैव इष्टलाभे तदपहाय 'शय्यादौ' इति पृथक्सूत्रकरण-मेतदेत्वस्य नित्यतायां गमकमिति भावः । एवं यदि शय्यादीनामेत्वं वैकल्पिकमिष्टं स्यात्तर्हि पूर्वसूत्रोपात्तोत्करादीनामपि शय्यादिगण एव प्रवेशनेनेष्टसिद्ध्या अतिरिच्य-मानं 'उत्करवल्ली' इत्यादिसूत्रमपि शय्यादीनामेत्वस्य नित्यतायां मानमिति बोध्यम्। यद्यपि 'तोऽन्तर्येल्' (प्रा. सू. १-२-२३) इति सूत्रानन्तरं 'शय्यादौ' (प्रा. सू. १-२-२६) इत्येतत्सूत्रपाठे पृथक्सूत्रकरणसामर्थ्यपरिचिन्तनमन्तरैव एत्वस्य नित्यत्वं सिध्यति, तथाऽप्येवं सूत्रपाठो बुद्धिकौशलोत्पादनेन वैचित्र्यार्थ इति बोध्यम् ॥

शय्या-[1] सेज्जा । अत्र -[2] एत्थ । [3] ग्राह्यं - गेज्झं । कन्तुकं-[4] गेण्डुअं । [5] प्रतिगपाठाड्डुत्वम् ॥

## [6] वाऽऽर्द्रे उदोत् ॥ १-२-२२ ॥

---

[1] सेज्जेति ॥ शय्याशब्दे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सः। 'यय्यर्यां जः' (प्रा. सू. १-४-७४) इति र्यस्य जकारः। तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वं, प्रकृतसूत्रेण शकारोत्तराकारस्य एत्वं च ॥

[2] एत्थेति ॥ अत्रेत्यत्र 'हित्थहास्त्रलः' (प्रा. सू. २-१-७) इति त्रलः थादेश इति बोध्यम् ॥

[3] ग्राह्यशब्देति ॥ 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि 'ध्यह्योर्झल्' (प्रा. सू. १-४-२६) इति ह्यस्य झत्वे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयतृतीयवर्णादेशे प्रकृतसूत्रेणैत्वे च गेज्झमिति रूपम् ॥

[4] गेण्डुअमिति ॥ यद्यपि 'गेन्दुकः कन्दुकः' इत्यमरकोशे दर्शनात्संस्कृतेऽपि गेन्दुकशब्दसत्त्वात् शय्यादिपाठमन्तरैव गेन्दुअमिति रूपं सिध्यति, तथाऽपि कन्दुकशब्दस्य प्राकृते कन्दुअमिति रूपवारणार्थं शय्यादौ कन्दुकशब्दपाठ इति भाति। 'खोः कन्दुकमरकतमदकले' (प्रा. सू. १-३-१५) इति कन्दुकशब्दे प्रथमककारस्य गकारप्रवृत्त्या 'प्रतिगेऽप्रतीपगे' (प्रा. सू. १-३-३३) इत्यनेन दकारस्य डत्वे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिनाऽन्त्यककारस्य लुकि प्रकृतसूत्रेणैत्वे गेण्डुअमिति रूपम् ॥

[5] प्रतिगपाठादिति ॥ 'प्रतिगेऽप्रतीपगे' (प्रा. सू. १-३-३३) इति सूत्रम्। अत्र गशब्दो 'गो गणपरः' (प्रा. सू. १-१-१०) इति गणार्थे संकेतितः। 'चेतस इति तोः' (प्रा. सू. १-३-३२) इत्यतः तोरिति 'टो डः' (प्रा. सू. १-३-३१) इत्यतो ड इति चानुवर्तते। ततश्च प्रत्यादिगणपठितवृत्तिप्रतीपादिभिन्नशब्दगततवर्गस्य डकारादेशो भवतीति सूत्रार्थः। त्रिविक्रमवृत्तौ तु डकारविरहितमेव गेंदुअ त्युदाहृतं दृश्यते। चन्द्रिकायां तु 'शय्यादौ' इत्येतत्सूत्रं नोपात्तम् ॥

[6] वाऽऽर्द्रेत्यादि ॥ 'स्वार्द्रे उदोत्' (प्रा. सू. १-२-२७) इति त्रिविक्रमवृत्तौ (दे.) चन्द्रिकायां च सूत्रपाठः ॥

आर्द्रे उत्वमोत्वं च वा स्यात् ।[1] अल्लं उल्लं ओल्लं । अद्दं उद्दं ओद्दं । 'लो वाऽऽर्द्रे' (प्रा. सू. १-४-५४) इति लत्वम् ॥

## स्वपि ॥ १–२–२३ ॥

स्वपिधात्ववर्णस्य [2] नित्यमुदोतौ स्तः । स्वपिति–सुवइ सोवइ ॥

## ओदाळ्यां पङ्क्तौ ॥ १–२–२४ ॥

ओळी । पङ्क्तौ किम् ? आळी—सखी ॥

## [3] फोः परस्परनमस्कारे ॥ १–२–२५ ॥

[4] परोप्परं [5] णमोक्कारो । फोरित्युक्तेरादेर्न ॥

---

[1] अळ्ळमित्यादि ॥ त्रिविक्रमवृत्तिचन्द्रिकयोस्तु अल्लं उल्लं ओल्लं इत्युदाहृतं दृश्यते । 'लो ळः' (प्रा. सू. ३-२-४८) इति पैशाच्यामेव भाषायां लकारस्य ळकारविधानादन्यत्र लकारघटितमेव साध्विति तदाशयः प्रतिभाति । एवमुत्तरत्र ळकारघटितसर्वोदाहरणेष्वपि बोध्यम् । ततश्चेयमत्र प्रक्रिया—आर्द्र इत्यत्र संयुक्तस्य 'लो वाऽऽर्द्रे' (प्रा. सू. १-४-५४) इति लकारादेशपक्षे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे प्रकृतसूत्रेणादेरुत्वौत्वयोः उल्लं ओल्लमिति, उत्वौत्वोभयोरप्यभावपक्षे 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे अल्लमिति, लत्वस्य वैकल्पिकत्वात्तदभावपक्षे 'संयोगे' (प्रा. सू. १-२-४०) इत्याकारस्य ह्रस्वे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि शिष्टस्य दस्य द्वित्वे उत्वौत्वतदभावेषु उद्दं ओद्दं अद्दं इत्यपि त्रीणि रूपाणीति बोध्यम् ॥

[2] नित्यमिति ॥ पृथक्सूत्रकरणादिति भावः ॥

[3] फोरिति ॥ 'द्वितीयः फुः' (प्रा. सू. १-१-११) इति संज्ञासूत्रबलाद्द्वितीयस्येत्यर्थः ॥

[4] परोप्परमिति ॥ यद्यपीदं पद्वयघटितं त्रिविक्रमवृत्तिकोशे मुद्रितेऽप्युदाहृतं दृश्यते, तथाऽपि 'ष्पस्पोः फः' (प्रा. सू. १-४-४४) इति सूत्रेणात्र परस्परशब्दे संयुक्तस्य फकारादेशो दुर्निवार इति परोप्फरमित्युदाहर्तुमुचितम् । एवमेव चन्द्रिकायामपि फकारघटितमेवेदमुदाहरणं दृश्यते ॥

[5] णमोक्कारो इति ॥ 'नादेस्तु' (प्रा. सू. १-३-५३) इति नकारस्य णकारे

## पद्मे मि ॥ १–२–२६ ॥

पद्म [1]ओत्वं स्यान्मि । पोम्मं । मीति किं, पदुमं । "वा छद्म ' (प्रा. सू. १-४-१०९) इत्युत्वम् ॥

## त्वर्पौ ॥ १–२–२७॥

अर्पयतेरादेरत ओत्वं वा । अर्पितं—[2] ओप्पिअं अप्पिअं ॥

## [3] इत्सदादौ ॥ १–२–२८ ॥

---

सकारस्य ' कगटड ' (प्रा. सू. १-४-७७) इत्यादिना लुकि शिष्टस्य कस्य द्वित्वे प्रकृतसूत्रे द्वितीयाकारस्य ओत्वे णमोक्कारो इति रूपम् ॥

[1] ओत्वमित्यादि ॥ आदेरित्यधिक्रियते । ' हे दक्षिणेऽस्य ' (प्रा. सू. १-२-९) इत्यतोऽस्येत्यनुवर्तते । पद्मशब्दे आदेरवर्णस्य मकारे परत ओत्वं स्यादित्यर्थः । पद्मशब्दे ' वा च्छद्म ' (प्रा. सू. १-४-१०९) इत्यादिना मकारात्पूर्वमुकारागमाभावपक्षे ' कगटड ' (प्रा. सू. १-४-७७) इत्यादिना दकारलोपे ' शेषादेशस्य ' (प्रा. सू. १-४-८६) इत्यादिना मकारस्य द्वित्वे अकारस्य मकारपरकत्वात्प्रकृतसूत्रेण ओत्वे पोम्ममिति रूपम् । ' वा च्छद्म ' (प्रा. सू. १-४-१०९) इत्यादिना मकारात्पूर्वमुकारागमपक्षे तु अकारस्य मकारपरकत्वाभावादनेन सूत्रेणौत्वाप्रवृत्त्या पदुममिति रूपं बोध्यम् । तदेतदाह—मीति किमित्यादि ॥

[2] ओप्पिअं अप्पिअमिति ॥ अर्पितशब्दे ' लवरामधश्च ' (प्रा. सू. १-४-७८) ' प्रायो लुक् ' (प्रा. सू. १-३-८) इति सूत्राभ्यां रलुक्तलुकोः प्रकृतसूत्रेणौत्वपक्षे ओप्पिअमिति, ओत्वाभावपक्षे तु ' लवरामधश्च ' (प्रा. सू. १-४-७८) इति रलुकि तकारस्य ' शेषादेशस्य ' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे अप्पिअमिति च रूपम् ॥

[3] इत्सदादाविति ॥ एतत्सूत्रात्पूर्वं खल्वाटस्त्यानशब्दयोराकारस्य ईत्वविधानेन खल्लीडो ठीणं इति रूपसाधकं ईल् ' खल्वाटस्त्यान आतः ' (प्रा. सू. १-२-३३) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते । तत्रैवेदं सूत्रं ' इत्तु सदादौ ' इति वार्थकतुशब्दघटितं पठ्यते । युक्तं चैतत्—यतोऽस्यामेव वृत्तौ वा स्यादित्युक्तिदर्शनात् ' त्वर्पौ ' इति सूत्रगततुशब्दस्य ' ईल् खल्वाट ' (प्रा. सू. १-२-३३) इत्यत्रानुवृत्त्यभावेन मण्डूकप्लुत्याश्रयणादिक्लेशसंभवाच्चेति ॥

सदादौ [1]आदेरावर्णस्य इद्वा स्यात् । [2]सदा-सआ सइ। कूर्पासः—कुप्पिसो कुप्पासो। उभयत्रापि ‘संयोगे’ (प्रा. सू. १-२-४०) इति ह्रस्वः। नात्र ह्रस्वे कृते ‘स्तौ’ (प्रा. सू. १-२-६६) इत्युत ओत्वम्। बहुलाधिकारादुतो लाक्षणिकत्वाद्वा। निशाकरः—णिसिअरो णिसाअरो। सदा निशाकरः कूर्पासः॥

## आचार्ये चो ह्श्च ॥ १–२–२९ ॥

आचार्यशब्दे चसंबन्ध्यातो [3]ह्रस्वः स्यात्। चादित्वं च तस्यैव। [4]आअरिओ आइरिओ।

---

[1]आदेरात इद्वेति ॥ आदेरित्यधिकारात्पूर्वसूत्रादात इत्यनुवृत्तेर्वार्थकतु-शब्दसत्त्वाच्चायमर्थो लभ्यत इति बोध्यम् ॥

[2]सदेत्यादि ॥ सदाशब्दे ‘प्रायो लुक्’ (प्रा. सू. १-३-८) इत्यादिना दकारस्य लुकि प्रकृतसूत्रेण इत्वतदभावपक्षयोः सइ सआ इति रूपम्। कूर्पासशब्दे ‘संयोगे’ (प्रा. सू. १-२-४०) इत्यूकारस्य ह्रस्वे ‘लवरामधश्च’ (प्रा. सू. १-४-७८) इति रलुकि प्रकृतसूत्रेणाकारस्येत्वतदभावपक्षयोः कुप्पिसो कुप्पासो इति रूपम्। निशाकरशब्दे ककारस्य पूर्ववत् ‘प्रायो लुक्’ (प्रा. सू. १-३-८) इत्यादिना लुकि ‘शोस्सल्’ (प्रा. सू. १-५-८६) इति शकारस्य सत्वे ‘आदेस्तु’ (प्रा. सू. १-३-५३) इति नकारस्य णत्वे प्रकृतसूत्रेण आकारस्येत्वतदभावपक्षयोः णिसिअरो णिसाअरो इति रूपं बोध्यम्॥

[3]ह्रस्वः स्यादिति ॥ प्राकृतव्याकरणशास्त्रेऽस्मिन् ‘हो ह्रस्वः’ (प्रा. सू. १-१-५) इति हशब्दस्य ह्रस्वार्थे सङ्केतात् सूत्रस्थहशब्दो ह्रस्वार्थक इति भावः ॥

[4]आअरिओ इत्यादि ॥ आचार्यशब्दे ‘स्याद्भव्य’ (प्रा. सू. १-४-१००) इत्यादिना संयुक्तयकारात्प्रागिकारागमे प्रकृतसूत्रेण आकारस्य चादुत्तरस्य ह्रस्वेत्व-पक्षयोः ‘प्रायो लुक्’ (प्रा. सू. १-३-८) इत्यादिना चकारयकारयोर्लुकि च आअरिओ आइरिओ इति रूपद्वयम् ॥

नन्वत्र वाग्रहणाभावादातो ह्रस्वेत्वयोर्नित्यत्वेन प्रतीयमानतया आइरिओ इत्येकमेव रूपं स्यादिति चेन्न। ह्रस्वसमनन्तरं नित्यतयेत्वप्रवृत्तौ ‘प्रक्षालनाद्धि’ इति

# [1] न वाऽव्ययोत्खातादौ ॥ १–२–३० ॥

---

न्यायेन ह्रस्वविधानस्यैव वैयर्थ्यापत्त्या तत्सामर्थ्याद्ध्रस्वेत्वयोः पर्यायतेत्यवश्य-कल्पनीयत्वात्। अत एवात्र वृत्तौ त्रिविक्रमवृत्तौ च ह्रस्वेत्वयोः पर्यायत्वाभिप्रायेण 'आअरिओ आइरिओ' इति रूपद्वयमुदाहृतं दृश्यते। चन्द्रिकायां तु पूर्वसूत्रात्तु-शब्दानुवृत्तिमभिप्रेत्य अत्र ह्रस्वेत्वयोरुभयोरपि वैकल्पिकतया एतदुभयाभावपक्षे आ-आरिओ इति तृतीयमप्येकं रूपमुदाहारि ॥

अस्माकं त्वित्थं प्रतिभाति—सूत्रशैलीपर्यालोचनयाऽत्र तुशब्दाननुवृत्ति-रेवोचिता। तथाहि—यद्यत्र तुशब्दानुवृत्तिरिष्टा स्यात् तर्ह्युत्तरत्र 'न वाऽव्ययोत्खा-तादौ' (प्रा. सू. १-२-३७) इति सूत्रे वार्थकनवाग्रहणं सूत्रकृन्न कुर्यादेव। ननु मध्ये 'श्यामाके मः' (प्रा. सू. १-२-३६) इति सूत्रे तुशब्दानुवृत्तेर्विच्छिन्नतया तत्र न वाग्रहण-मिति चेन्न। नवाग्रहणाकरणप्रयुक्तलाघवानुरोधेन 'श्यामाके मः' (प्रा. सू. १-२-३६) इत्यस्य 'घञि वा' (प्रा. सू. १-२-३८) इत्यनन्तरमपि सुपठत्वात् ॥

ननु ''श्यामाके मः' (प्रा. सू. १-२-३६) इत्यस्य 'घञि वा' (प्रा. सू. १-२-३८) इत्यनन्तरं पाठे वाग्रहणानुवृत्तिः स्यादिति चेन्न। 'न वाऽव्यय' (प्रा. सू. १-२-३७) इत्यादित एव वाग्रहणानुवृत्तेस्सिद्धतया 'घञि वा' (प्रा. सू. १-२-३८) इत्यत्र पुनर्वा-ग्रहणात्तदुत्तरत्र वाग्रहणासंबन्ध इति सूत्रकृदाशयात्। अत एव तत्र त्रिविक्रमवृत्तौ 'वाग्रहणादुत्तरत्र न विकल्पः' इत्युक्तम्। तस्मान्नवाऽव्ययेत्याद्युत्तरसूत्रे नवाग्रहणादेव 'आचार्ये' (प्रा. सू. १-२-३५) इत्यादिसूत्रे वार्थकतुशब्दस्याननुवृत्तिरित्याशय उन्नीयते। किं च 'घञि वा' (प्रा. सू. १-२-३८) इत्यनन्तरं 'श्यामाके मः' (प्रा. सू. १-२-३६) इत्यस्य पाठे पूर्वसूत्राद्वापदानुवृत्तिसन्देहः स्यादिति वार्थकशब्दा-ननुषक्तसूत्रानन्तरमेव तस्य पाठस्समुचित इति सूत्रकृत आशयोऽभ्युपेयः। तेनापि 'आचार्ये'(प्रा. सू. १-२-३५) इत्यादितत्पूर्वसूत्रे वार्थकतुशब्दाननुवृत्तिरेवेति निश्चीयते। ततश्च आचार्यशब्दे ह्रस्वेत्वयोरुभयोर्वैकल्पिकत्वाभावात्तयोरेव पर्यायेण प्रवृत्तौ आ-अरिओ आइरिओ इति रूपद्वयमेवोचितमिति त्रिविक्रमाप्पयदीक्षितयोर्वृत्तिकृतोराशय-स्सम्भाव्यत इति ॥

[1] **नवाऽव्ययेत्यादि** ॥ एतत्सूत्रात्पूर्वं श्यामाकशब्दे मकारोत्तरदीर्घस्य ह्रस्व-विधानेन सामओ इति रूपसाधकं 'श्यामाके मः' (प्रा. सू. १-२-३६) इत्येकं सूत्र-मधिकं सूत्रपाठे दृश्यते ॥

अव्यये उत्खातादौ चादेरातो ह्रस्वो [1] वा स्यात् । [2] तथा-तह तहा । यथा-जह जहा । वा-वा व इत्यादि । [3] उक्खाअं उक्खअं ।

[4] प्राकृतकुमारचामरसंस्थापितताळवृन्तनाराचाः ।
प्रस्थापितः कलादः स्थापितखादिरकहालिकबलाकाः ॥
ब्राह्मणपूर्वाह्णावप्युत्खातादिः प्रकीर्तितस्तज्ज्ञैः ॥

कलादः स्वर्णकारः ॥

## [5] घञि वा ॥ १-२-३१ ॥

घञ्निमित्तस्यातो ह्रस्वो वा स्यात् । प्रवाहः—पवहो [6] पवाहो ।

---

[1] **वा स्यादिति** ॥ सूत्रे 'न वेति विभाषा' (पा. सू. १-१-४४) इति पाणिनीयवद्वार्थको नवाशब्द इति भावः ॥

[2] **तह तहा इत्यादि** ॥ तथायथाशब्दगतथकारयोः 'खघथधभाम्' (प्रा. सू १-३ २०) इति हकारादेशो बोध्यः ॥

[3] **उक्खाअमिति** ॥ उत्खातशब्दे तकारस्य 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना खस्य द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना द्वितीयतकारस्य लुकि प्रकृतसूत्रेण आकारस्य ह्रस्वतदभावपक्षयोः उक्खअं उक्खाअमिति रूपद्वयम् ॥

[4] **प्राकृतेत्यादि** ॥ पअअं पाअअं । कुमरो कुमारो । चमरो चामरो । संठविओ संठाविओ । तलवेंटं तालवेंटं तलवोंटं तालवोंटं । नराओ नाराओ । पट्ठविओ पट्ठाविओ । कलओ कलाओ । ठविओ ठाविओ । खइरं खाइरं । हलिओ हालिओ । बलआ बलाआ । बम्हणो बाम्हणो । पुव्वण्हो पुव्वाण्हो । इति प्राकृतादिशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

[5] **घञि वेति** ॥ पूर्वसूत्रादेव नवाग्रहणानुवृत्त्या वैकल्पिकत्वे सिद्धे पुनरत्र वाग्रहणमुत्तरत्र वाग्रहणानुवृत्त्यभावसूचकमिति बोध्यम् ॥

[6] **पवहो इति** ॥ प्रवाहशब्दे प्रकृतसूत्रेण आतो ह्रस्वे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति संयुक्तरेफस्य लुकि शिष्टस्य पकारस्य आदित्वात् 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यत्र अखोरित्युक्त्या द्वित्वाभावे च पवहो इति रूपम् ॥

(वा)[1] रागभागयोर्नेति वाच्यम् । राओ भाओ ॥

## स्वरस्य बिन्द्वमि ॥ १–२–३२ ॥

अचां ह्रस्वः स्याद्बिन्दावमि च परे । मांसं-मंसं । गंगां-गंगं । नदीं-[2] णइं ॥

## संयोगे ॥ १–२–३३ ॥

[3] अचां ह्रस्वः स्यात्संयोगे । काव्यं—[4] कव्वं ॥

## त्वेदितः ॥ १–२–३४ ॥

इत [5] एद्वा स्यात्संयोगे ॥ अत्र [6] ह्रस्वैकारस्यैवोपदेश इति मतान्तरम् ॥

---

[1] रागेत्यादि ॥ त्रैविक्रम्यां वृत्तौ तु 'क्वचिन्न' रागः—राओ, भागः—भाओ इत्युक्तम् ॥

[2] णइमिति ॥ नदीशब्दे 'आदेस्तु' (प्रा. सू. १-३-५३) इति नस्य णः, दकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुक्च ॥

[3] अचामिति ॥ एज्विषयह्रस्वे तु 'एच इग्घ्रस्वादेशे' (प्रा. सू. १-१-४८) इति पाणिनीयसूत्रस्य 'अनुक्तमन्य' (प्रा. सू. १-१-२) इत्यादिनाऽत्राप्याश्रयणस्य अभ्यनुज्ञाततया एकारैकारयोरिकार ओकारौकारयोरुकारश्च प्रवर्तते । तेन नरेन्द्रः, दृष्ट्येकः, नीलोत्पलं, अधरोष्ठं, इत्यत्र एकारैकारयोरिकारस्य ओकारौकारयोरुकारस्य च प्रवृत्त्या णरिन्दो दिट्ठिक्कं णीलुप्पलं अहरुट्ठं इति प्राकृते रूपाणि निष्पद्यन्ते । क्वचिदेदैतोः प्राकृते स्वरूपेणापि ह्रस्वो भवति, इति त्रिविक्रमोक्त्या सेवास्तोकशब्दयोरेकारैकारयोः स्वरूपेणापि ह्रस्वप्रवृत्त्या सेव्वा थोक्कं इति प्राकृते रूपं सिध्यति ॥

[4] कव्वमिति ॥ काव्यशब्दे 'मनयाम्' (प्रा. सू. १-४-७९) इति यकारस्य लुकि 'शेषादेशस्य' (प्रा. सू. १-३-८६) इत्यादिना वकारस्य द्वित्वे प्रकृतसूत्रेण संयोगात्पूर्वस्य दीर्घस्य ह्रस्वे कव्वमिति रूपं बोध्यम् ॥

[5] एद्वा स्यादिति ॥ दीर्घ एकार इत्यर्थः ॥

[6] ह्रस्वैकारस्येति ॥ ह्रस्वभूतैकारस्येत्यर्थः । एदैतोः प्राकृते क्वचित्स्वरूपेणापि ह्रस्वाभ्यनुज्ञानादिति भावः ॥

विष्णुः—विह्णू [1] वेह्णू ।

[2] चिन्तायां न ॥ १–२–३५ ॥

चिन्ता ॥

[3] मूषिकविभीतकहरिद्रापाथिपृथिवीप्रतिश्रुत्यत् ॥ १–२–३६ ॥

एष्वादेरितोऽत्स्यात् ॥ [4] मूसओ [5] वहेडओ इत्यादि ॥

---

[1] वेह्णू इति ॥ विष्णुशब्दे 'त्वेदितः' (प्रा. सू. १-२-४१) इति प्रकृतसूत्रेणेकारस्य एकारे 'श्नष्णस्नत्स्नह्नह्णक्ष्णां ण्हः' (प्रा. सू. १-४-६८) इति सूत्रेण ष्ण् इत्यस्य ण्हादेशे वेण्हू इति रूपम् । अत्र एत्वस्य वैकल्पिकत्वात्तदभावपक्षे पूर्वप्रदर्शितरीत्या ण्हादेशमात्रे विण्हू इति रूपम् ॥

[2] चिन्तायां नेति ॥ सूत्रमिदं चन्द्रिकात्रिविक्रमवृत्त्योर्न दृश्यते । परं तु त्रिविक्रमवृत्तौ 'त्वेदितः' (प्रा. सू. १-२-४१) इति सूत्र एव 'क्वचिन्न भवति' इत्युक्त्वा चिन्ता इत्युदाहृतं दृश्यते ॥

[3] मूषिकेत्यादि ॥ एतत्सूत्रात्पूर्वं चन्द्रिकात्रिविक्रमवृत्त्योः मिराशब्दस्य प्राकृते मेरा इति रूपसाधकं 'मिरायां लित' (प्रा. सू. १-२-४२) इत्येकं सूत्रमुपात्तं दृश्यते। मेराशब्दस्यास्य सीमेत्यर्थो बोध्यः । अत एव कर्णाटभाषायामपि सीमार्थो मेरे इति शब्दः प्रयुज्यते । प्रायः कर्णाटभाषायां संस्कृतादिगताकारान्ताइशब्दाः एकारान्ततया प्रयुज्यन्ते। नन्वत्र सूत्रे पथिन्शब्दोपादानं किमर्थम् ? 'दृष्ट्वाऽनेन पथेन शौरिरधुना कुब्जागृहं यास्यति' इति प्रामाणिकप्राचीनप्रयोगोपलम्भेन तद्बलात्संस्कृतेऽपि पथिन्शब्दसमानार्थकपथशब्दस्याप्यभ्युपगततया तेनैव प्राकृते पहो इति रूपस्य सिद्धत्वादिति चेन्न । निरुक्तरीत्या प्राकृते पहो इति रूपस्य निर्वाहेऽपि नकारान्तं पथिन्शब्दं प्रकृतित्वेनाश्रित्य पहो इत्यपेक्षया विलक्षणं रूपान्तरं स्यादिति तद्वारणाय सूत्रेऽस्मिन् पथिशब्दस्य पाठस्समुचित इत्यवश्याभ्युपेयत्वादिति ॥

[4] मूसओ इति ॥ मूषकशब्दे षकारस्य शोस्सल् (प्रा. सू. १-३-८७) इति सकारादेशो बोध्यः । तथा ककारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुक्च॥

[5] वहेडओ इति ॥ विभीतकशब्दे भकारादुत्तरस्य ईकारस्य 'एल् पीटनीडकीदृशपीयूषविभीतकेदृशापीडे' (प्रा. सू. १-२-५७) इत्यनेन एत्वे भकारस्य 'खघथधभाम्' (प्रा. सू. १-३-२०) इत्यनेन हादेशे 'प्रतिगेऽप्रतीपगे' (प्रा. सू. १-६-६६)

## [1] इतौ तो वाक्यादौ ॥ १-२-३७ ॥

इतिशब्दे तसम्बन्धीकारस्यात्वं स्यात्। इति कथितं -इअ कहिअं। वाक्यादौ किम्? तथेति [2] तहत्ति॥

## [3] द्विनीक्षुप्रवासिषु ॥ १-२-३८ ॥

द्विशब्दे नीत्युपसर्गे इक्षुप्रवासिशब्दयोश्चादेरित उत्वं स्यात् द्विजातिः—[4] दुआई ॥

---

इत्यनेन प्रत्यादौ विभीतकशब्दपाठात् तकारस्य डकारादेशे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना ककारस्य लुकि वहेडओ इति रूपम् ॥

[1] **इतौ त इत्यादि ॥** एतत्सूत्रात्पूर्वं तित्तिरिशब्दे रेफादुत्तरस्य इकारस्य अकारविधानेन तित्तिरो इति रूपसाधकं 'रस्तित्तिरौ' (प्रा. सू. १-२-४४) इत्येकं सूत्रं सूत्रपाठे दृश्यते ॥

[2] **तहत्तीति ॥** 'तथा इति' इत्यत्रेतिशब्दस्य वाक्यादित्वाभावात्प्रकृतसूत्रेण तत्रत्येकारस्यात्वानवकाशात् 'तोऽचः' (प्रा. सू. १-२-७) इति सूत्रेण इतिशब्दाद्यवयवेकारस्य तकारादेशे 'संयोगे' (प्रा. सू. १-२-४०) इति संयुक्तात्पूर्वस्य आकारस्य ह्रस्वे 'खघथधभाम्' (प्रा. सू. १-३-२०) इति थकारस्य हकारादेशे तहत्तीति रूपम् ॥

[3] **द्विनीक्ष्वित्यादि ॥** एतत्सूत्रात्पूर्वं इङ्गुदशिथिलशब्दयोः आदेरिकारस्य अत्वविकल्पविधानेन युधिष्ठिरशब्दे उत्वविकल्पविधानेन च इंगुअं अंगुअं, सढिलं सिढिलं, जहुट्ठिलो जहिट्ठिलो इति प्रत्येकं रूपद्वयसाधकं 'वेङ्गदशिथिलयोः' (प्रा. सू. १-२-४६) 'उ युधिष्ठिरे' (प्रा. सू. १-८-४८) इति सूत्रद्वयमधिकं सूत्रपाठे दृश्यते। तथा चन्द्रिकायां निर्माणनिर्मितशब्दयोः णिम्माणं णिम्मिअं इति रूपनिपातकं 'णिम्माणं णिम्मिअं' (प्रा. सू. १-२-४७) इत्येकं सूत्रमुपात्तं दृश्यते। तत्तु त्रिविक्रमवृत्तौ णिम्माणं णिम्मिअं इति तु 'निर्माणनिर्मिताभ्यां भविष्यतः' इति स्ववाक्यात्मनोक्तं दृश्यते ॥

[4] **दुआई इति ॥** द्विजातिशब्दे आदेरिकारस्य प्रकृतसूत्रेणोत्वे वकारस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि जकारतकारयोः 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि दुआई इति रूपं बोध्यम् ॥

(वा) द्विगुणद्वितीययो[1]र्वावचनम् । दुउणो दिउणो । दुईओ दिईओ ॥
(वा) द्विजद्विरदद्विधागतनिपतितानां प्रतिषेधः । [2] दिओ इत्यादि ॥
(वा) [3] द्विवचन ओत्वं वेति वाच्यम् । दोवअणं दुवअणम् ॥

## [4] गभीरग इत् ॥ १-२-३९ ॥

[5] गभीरादौ ईत इस्त्यात् । गभीरः—[6] गहिरो ।

---

[1] वावचनमिति ॥ त्रिविक्रमवृत्तौ तु 'बहुलाधिकारात्क्वचिद्विकल्पः' इत्युक्त्वा द्विगुणशब्दे दुउणो विउणो इत्युदाहृतं दृश्यते । चन्द्रिकायां तु अत्र नित्यमुत्वमित्यभिप्रायेण दुउणो इत्येकमेव रूपमुदाहृतम् । एतद्वृत्तिप्रणेत्रा तु उत्वाभावपक्षे द्विगुणशब्दे 'कगटड' (प्रा. सू. १-३-७७) इत्यादिना दलोपस्य 'लवरामधश्च' (प्रा. सू. १-३-८) इति वकारस्य च लुकः प्रसक्तौ परविप्रतिषेधाश्रयणेन वकारस्यैव लुगित्यभिप्रायेण दिउणो इति रूपमुदाहृतम् । त्रिविक्रमदेवस्तु—'यथादर्शनं लोपः' इत्युक्त्वा विउणो इति रूपमुदाजहार । अतोऽत्र द्विगुणशब्दे दुउणो दिउणो विउणो इति रूपत्रयमपि मतभेदेन साध्विति बोध्यम् ॥

[2] इत्यादीति ॥ द्विरदद्विधागतनिपततीनां दिरओ दिहागओ णिवडइ इति रूपाणि बोध्यानि । चन्द्रिकाकृतेदमनुक्तमपि 'तु निर्झर' (प्रा. सू. १-२-५) इत्यादिसूत्रे कृञ्ग्रहणप्रत्युदाहरणावसरे दिहागओ इति प्रत्युदाहृतत्वात्तस्यापीदमनुमतमित्यवसीयते ॥

[3] द्विवचन ओत्वं वेति वाच्यमिति ॥ त्रिविक्रमवृत्तौ त्विदं 'क्वचिदोत्वमपि' इति वाक्यरूपेण दृश्यते । चन्द्रिकायां तु नेदं दोवअणमिति रूपमुदाहारि ॥

[4] गभीरग इदिति ॥ एतत्सूत्रात्पूर्वं निर्झरद्विधाकृतकाश्मीरहरीतकीशब्दानां ओज्झरो णिज्झरो, दोहाइअं दुहाइअं, कम्हारो, हरडई इति रूपसाधकं 'तु निर्झरद्विधाकृञ्योन्ना' (प्रा. सू. १-२-५०) 'ईतः काश्मीरहरीतक्योर्नालौ' (प्रा. सू. १-२-५१) इति सूत्रद्वयमधिकं सूत्रपाठे दृश्यते । निर्झरशब्दे 'दीर्घान्न' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधस्य जागरूकतया ओज्झरो इत्यादि द्वित्वघटितरूपोदाहरणं त्रिविक्रमवृत्तिमुद्रितकोशे परिदृश्यमानं कथं संगच्छेतेति चिन्तनीयम् ॥

[5] गभीरादाविति ॥ सूत्रे गभीरग इत्यत्रान्तिमगशब्दस्य 'गो गणपरः' (प्रा. सू. १-१-१०) इति संज्ञासूत्रबलात् गभीरादावित्ययमर्थो लभ्यत इति भावः ॥

[6] गहिरो इति ॥ गभीरशब्दे ईकारस्य प्रकृतसूत्रेण इत्वे भकारस्य 'खघथधभाम्' (प्रा. सू. १-३-२०) इति हकारादेशे गहिरो इति रूपं बोध्यम् ॥

[1] प्रसीदवल्मीकानीतप्रदीपितशिरीषकाः ।
गृहीत[2]जीवावसीदद्वितीयतृतीयकाः ॥
व्रीळितं च गभीरादि[3]रानीते दिरपि स्त्रियाम ॥

आणीआ आणिआ ॥

वा[4]पानीयगे ॥ १-२-४० ॥

ईत इत्वं । पाणिअं पाणीअं ।

[5] जीवंत्यळीकपानीयोपनीतेषत्करीषकाः ॥

[6] एलूपीठनीडकीदृशपीयूषविभीतकेदृशापीडे ॥ १-२-४१ ॥

---

[1] प्रसीदेत्यादि ॥ पसिअ वंमिओ आणिअं पइविअं सिरिसो गहिअं जिअउ ओसिअंतो दिइओ तइओ विलिअं इति प्रसीदादिशब्दानां प्राकृते सिद्धरूपाणि ॥

[2] जीवेत्यादि ॥ 'जीवत्ववसीदत्' इति शुद्धः पाठः ॥

[3] आनीते दिरपीत्यादि ॥ आनीते-आनीतशब्दे स्त्रियां दिरपि—दीर्घोऽपि इत्यर्थः । दृश्यत इति शेषः ।'दिर्दीर्घः' (प्रा. सू. १-१-६) इति सूत्रबलात् दिरित्यस्य दीर्घ इत्यर्थः । ततश्च स्त्रीलिङ्गे आनीताशब्दे आणीआ आणिआ इति रूपद्वयं सिद्धम् ॥

[4] पानीयग इति ॥ पूर्ववदत्रापि गशब्दस्य गणार्थकतया पानीयादावित्यर्थो लभ्यते। अत्र पानीयादिगणे द्वितीयशब्दपाठो न दृश्यते। एवमेव त्रिविक्रमवृत्तावपि । परं तूभयत्रापि गभीरादिगण एव पाठादेतन्मते नित्यतया इत्वप्रवृत्त्या विइओ इति तस्य द्वितीयशब्दस्य रूपं वृत्तिकृतोरभिमतमिति ज्ञायते । चन्द्रिकायां तु पानीयादिगण एव द्वितीयशब्दपाठात्तन्मते इत्वविकल्पात् विइओ विईओ इति रूपद्वयमिति ज्ञायते ॥

[5] ईषदिति ॥ यद्यपि चन्द्रिकात्रिविक्रमवृत्त्योः पानीयादिगणे ईषच्छब्दः कण्ठतो न परिगणितः, तथाऽप्यव्ययप्रकरणे ईषच्छब्दस्य इसि इति प्राकृतरूपोदाहरणात्तत्रापीत्वमभिमतमिति ज्ञायते। अत एव कात्यायनसूत्रस्य विशदसङ्ग्रहाख्यवृत्तिकृद्भिः कवितार्किकसिंहैः सर्वतन्त्रस्वतन्त्रैः श्रीमद्वेदान्ताचार्यैरपि 'इसि इत्यपि मतभेदात्' इत्युक्त्वा, तत्र 'इसि चुम्बिआइ भमरेहिं' इति प्राचीनप्रयोगोऽपि प्रमाणीकृतो दृश्यते॥

[6] एलू पीठेत्यादि ॥ एतत्सूत्रात्पूर्वं जीर्णशब्दे ईकारस्योत्वविधानेन तीर्थविहीनहीनशब्देषु च ऊकारविधानेन जुण्णं विहूणं हूणं इति रूपसाधकानि 'उल् जीर्णे' (प्रा. सू. १-२-५४) 'तीर्थे ह्यूल्' (प्रा. सू. १-२-५५) 'विहीनहीने वा' (प्रा. सू. १-२-५६) इति त्रीणि सूत्राण्यधिकानि सूत्रपाठे दृश्यन्ते ॥

एष्वीत एत्वं लित्स्यात् । [1] पेढं [2] नेड्डं ॥

(वा) पीठनीडयोर्वावचनम् । पीढं, नीडं । 'त्वेदितः' इति सिद्धे-[3]रतद्ग्रहणमनर्थकमिति [4] मतान्तरम् ॥

## त्वदुत उपरिगुरुके ॥ १-२-४२ ॥

अनयो[5]रुतोऽत्वं वा स्यात् । [6] अवरिं उवरिं । [7] गरुअं गुरुअं ॥

---

[1] पेढमिति ॥ पीठशब्दे ठकारस्य 'ठः' (प्रा. सू. १-३-२८) इत्यनेन ढकारादेशे प्रकृतसूत्रेण ईकारस्य एत्वे पेढमिति रूपम् ॥

[2] नेड्डमिति ॥ नीडशब्दे डकारस्य 'दैवगेऽखौ' (प्रा. सू. १-४-९२) इत्यनेन पाक्षिके द्वित्वे क्वचित्स्वरूपत एकारस्य प्राकृते ह्रस्व इत्यभिप्रायेणास्यामेव वृत्तावादौ नेड्डमित्युदाहृतत्वेनात्र 'संयोगे' (प्रा. सू. १-२-४०) इत्येकारस्य ह्रस्वैकारे नेड्डमिति रूपम् ॥

[3] सिद्धेरतद्ग्रहणमिति ॥ अत्र 'सिद्धेरेतद्ग्रहणम्' इति पाठेन भाव्यम् । एतद्ग्रहणं पीठनीडशब्दयोर्ग्रहणमित्यर्थः ॥

[4] मतान्तरमिति ॥ 'त्वेदितः' (प्रा. सू. १-२-४१) इति सूत्रे इत इति तपरकरणात्तदुत्तरसूत्रनिर्दिष्टशब्देषु आदिभूतस्य इकारस्यैव दर्शनाच्च ह्रस्वेकारस्यैव तत्र ग्रहणमित्यवश्याभ्युपगमनीयतया पीठनीडयोर्विकल्पविधानं सार्थकमेव न त्वनर्थकमित्यभिप्रायेण अरुचिसूचनार्थं मतान्तरमित्युक्तम् । त्रिविक्रमवृत्तावप्यत्र बहुलाधिकारात्पीठनीडयोर्विकल्प इत्युक्तं दृश्यते । चन्द्रिकायां त्वत्र सूत्रे पीठशब्दस्थाने पीड इति पठितं दृश्यते । सूत्रेऽस्मिन् अवशिष्टानां कीदृशपीयूषविभीतकेदृशापीडानां च केरिसो पेऊसं वहेडओ एरिसो आमेलो (आवेलो) इति प्राकृते सिद्धरूपाणि बोध्यानि ॥

[5] उतोऽत्वमित्यादि ॥ आदेरिति शेषः । अत एवात्र गुरुकादिशब्देषु द्वितीयोकारस्य नात्वं प्रवर्तते ॥

[6] अवरिमिति ॥ उपरिशब्दे 'पो वः' (प्रा. सू. १-३-५५) इति पकारस्य वकारादेशे 'स्वरेभ्यो वक्रादौ' (प्रा. सू. १-१-४२) इति वक्राद्यन्तर्गणभूतोपर्यादिगणप्रविष्टतयाऽत्र तृतीयात्स्वरात्परे बिन्दौ प्रकृतसूत्रेणोकारस्य पाक्षिकेऽकारे च अवरिमिति उत्वाभावपक्षे उवरिमिति च रूपम् ॥

[7] गरुअमिति ॥ गुरुशब्दः कप्रत्ययान्तोऽत्र सूत्रे गृहीतः । तेन केवलगुरुशब्दे नेदं सूत्रं प्रवर्तत इति त्रिविक्रमवृत्तावभिहितम् । ततश्च गुरुकशब्दे प्रकृतसूत्रेणादेरु-

## मुकुलादौ ॥ १-२-४३ ॥

उतोऽत्वं [1] नित्यम् । मुकुळं-मउळं ।
[2] मुकुळं मुकुटं मुकुरं युधिष्ठिरः सौकुमार्यं च ।
अगुरुगुळूचीगुर्व्यौ विद्रुत [3] आत्वं तु बाहुलकम् ॥
विद्रुतः-विद्दाओ ॥

## [4] र इद्भ्रुकुटीपुरुषयोः ॥ १-२-४४ ॥

अनयो[5] रसंबन्ध्युत इत्स्यात् । [6] भिउडी । पुरिसो ॥

---

कारस्यात्वे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना ककारस्य लुकि गरुअमिति रूपम् । अत्वाभावपक्षे तु गुरुअमिति रूपं बोध्यम् ॥

[1] नित्यमिति ॥ पृथक्सूत्रकरणान्नित्यमिति भावः । लक्ष्मीधरसूरिस्तु मुउलं मउलं इति रूपद्वयमुदाहरन् अत्वस्यास्य वैकल्पिकतां मन्यते । तच्चैतद्वृत्तिग्रन्थेन 'पृथग्योगान्न विकल्पः' 'मकुटं संस्कृते च, तथाऽप्ययं योगो मुकुटस्य रूपान्तरनिवृत्त्यर्थः' इति त्रिविक्रमवृत्तिग्रन्थेन च विरुध्यते । मुकुलादिगणेऽस्मिन् उकारद्वयघटितागुरुशब्दपाठदर्शनात्संस्कृते उकारद्वयघटित एवायं शब्द इति वा, प्राकृते सर्वथैवैकोकारघटित एव वाऽयं शब्दस्साधुरित्यवश्यमभ्युपगमनीयमित्याशय उन्नीयते ॥

[2] मुकुलमित्यादि ॥ 'मउलं मउडं मउरं जहुट्ठिलो सोअमल्लं अगरू गलोई गरुई विद्दाओ' इति मुकुलादिगणीयानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

[3] विद्रुत इत्यादि ॥ अत्र त्रिविक्रमवृत्तौ 'बहुलाधिकारात्क्वचिदात्वमपि विद्रुतः-विद्दाओ' इत्युक्तं दृश्यते ॥

[4] रसंबन्ध्यत इत्यादि ॥ सूत्रे र इति षष्ठ्यन्तं, 'त्वदुत उपरिगुरुके' (प्रा. सू. १-२-५८) इति सूत्रात् अत् उत् इति चानुवर्तत इति भावः ॥

[5] र इदित्यादि ॥ 'रो भ्रुकुटिपुरुष इत्' (प्रा. सू. १-२-६०) इति मुद्रितत्रिविक्रमवृत्तिकोशे एतत्सूत्रपाठो दृश्यते ॥

[6] भिउडी पुरिसो इति ॥ भ्रुकुटीशब्दे रेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुक् । पुरुषशब्दे षकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सकारादेशः ॥

## [1] दोदोऽनुत्साहोत्सन्न ऊ शसि ॥ १-२-४५ ॥

उदित्यत्र उदो दकारेण सह ऊ स्याच्छकारसकारयोः परतः। उच्छ्वासः-ऊसासो । उत्सवः-ऊसवो । अनुत्साहोत्सन्न इति किम्? [2] उच्छाहो उच्छंणो ॥

## [3] दुरो रलुकि तु ॥ १-२-४६ ॥

अलुकि सति दुर उत ऊ स्यात् । दुस्सहः-[4] दूसहो दुसहो ॥

---

[1] दोऽदोऽनुत्साह इत्यादि ॥ दो उदः अनुत्साहोत्सन्ने ऊ शसि इति पदच्छेदः। उत्साहोत्सन्नशब्दभिन्नसंबन्धिनः दकारेण सहितस्य उदः शकारसकारयोः परत ऊकारादेश इत्येतत्सूत्रार्थः। एतत्सूत्रात्पूर्वं क्षुतशब्दे उकारस्य ईत्वविधानेन छीअं इति रूपसाधकं 'क्षुत ईत' (प्रा. सू. १-२-६१) इत्येकं सूत्रं सूत्रपाठेऽधिकं दृश्यते। उच्छ्वासशब्दे उद् श्वास इति दशायां प्रकृतसूत्रेण दकारसहितस्योद ऊ इत्यादेशे वकारस्य 'लवराधश्च' (प्रा. सू. १-४-७८) इति लुकि शकारस्य 'शोस्सल' (प्रा. सू. १-३-८७) इति सकारादेशे दीर्घात्परत्वात्सस्य 'दीर्घान्न' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधे ऊसासो इति रूपम् ॥

[2] उच्छाहो उच्छंणो इति ॥ उत्साहशब्दे त्सस्य 'थ्यश्चत्सप्सामनिश्चले' (प्रा. सू. १-४-२३) इति छादेशे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे उच्छाहो इति रूपम्। उत्सन्नशब्दे नस्य 'नः' (प्रा. सू. १-३-५२) इति णत्वं बोध्यम् ॥

[3] दुर इत्यादि ॥ दुरः रलुकि इति पदच्छेदः। 'दोऽदोऽनुत्साह' (प्रा. सू. १-२-६२) इत्यादिसूत्रात् ऊ इति 'त्वदुतः' (प्रा. सू. १-२-५८) इत्यादिसूत्रादुत इति चानुवर्तते। दुरित्युपसर्गसंबन्धिनो रेफस्य लुकि सति उत ऊकारादेशो वा भवतीति सूत्रार्थः। अत्र वृत्तौ अलुकीत्यस्य स्थाने रलुकीति साधुः पाठः ॥

[4] दूसहो दुसहो इति ॥ 'निर्दुरि वा' (प्रा. सू. १-१-२६) इति सूत्रेण दुरित्यास्यान्त्यस्य लोपपक्षे पूर्वस्योकारस्य प्रकृतसूत्रेण ऊत्वे दूसहो इति, प्रकृतस्य ऊत्वस्य वैकल्पिकत्वात् तदभावपक्षे दुसहो इति, रलोपस्य वैकल्पिकत्वात्तदभावपक्षे च 'खरवसान' 'वा शरि' (पा. सू. ८-३-१५, ३६) इति रेफस्य विसर्गे दुःसहो इति च रूपत्रयं बोध्यम् ॥

## सुभगमुसले ॥ १–२–४७ ॥

उत ऊ वा स्यात्। [1] सुहवो सूहवो। मूसळं मुसळं। 'ऊत्वे सुभग' (प्रा. सू. १-३-१८) इति वत्वम् ॥

## [2] हश्चौत्कुतूहले ॥ १–२–४८ ॥

हश्चादेरुत ओत्स्यादूतो ह्रस्वश्च। कोउहळ्ळं। [3] दैवादित्वाद्द्वित्वम् ॥

## स्तौ ॥ १–२–४९ ॥

उत ओत्स्यात्सं[4]योगे। तुंडं–तोंडम् ॥

## [5] सूक्ष्मेऽद्वोतः ॥ १–२–५० ॥

सूक्ष्मं–सण्हं सुण्हम् ॥

---

[1] **सुहवो इत्यादि** ॥ सुभगशब्दे भकारस्य 'खघथधभाम्' (प्रा. सू. १-३-२०) इति हकारादेशे प्रकृतसूत्रेण उकारस्य ऊत्वविकल्पे 'ऊत्वे सुभग' (प्रा. सू. १-३-१८) इत्यादिना गस्य वत्वे च सुहवो सूहवो इति रूपम् ॥

[2] **हश्चेत्यादि** ॥ आदेरित्यधिक्रियते। 'त्वदुत' (प्रा. सू. १-२-५८) इति सूत्रादुत इति 'दुरो रलुकि तु' (प्रा. सू. १-२-६३) इत्यतो वार्थकस्तुशब्दश्चानुवर्तते। तथा च कुतूहलशब्दे आदेरुकारस्य ओकारः स्यात्। तत्संनियोगेन दीर्घस्य ह्रस्वश्च वा भवतीत्येतत्सूत्रार्थमभिप्रयन् त्रिविक्रमदेवः संनियोगशिष्टह्रस्वौत्वोभयाभावे कुऊहलमिति कुतूहलशब्दस्यापरमपि रूपमनुमनुते। अत्र तु वृत्तौ कोउहल्लमित्येकमेव रूपमुदाहृतं दृश्यते। अत्र वृत्तौ हश्चेत्यस्य स्थाने 'अत्र' इति पाठस्साधुरिति भाति। ऊत इत्यनन्तरं वा हश्चेति योजनीयः ॥

[3] **दैवादित्वादिति** ॥ 'दैवगेऽखौ' (प्रा. सू. १-४-९२) इति सूत्रेण वा द्वित्वमित्यर्थः। तेन द्वित्वाभावपक्षे कोउहलमित्यप्यन्यद्रूपं बोध्यम् ॥

[4] **संयोग इति** ॥ सूत्रे स्तुशब्दः संयुक्तसंज्ञक इति भावः। उत्तरसूत्रे वाग्रहणादत्र तुशब्दो नानुवर्तत इति भावः ॥

[5] **सूक्ष्म इत्यादि** ॥ अत्र सूत्रे 'सूक्ष्मेऽद्वोतः' (प्रा. सू. १-२-६७) इति सूत्रपाठमुररीकृत्य ऊकारस्य विकल्पेन अकारादेशमभिप्रयता त्रिविक्रमदेवेनापि

[1] इदेन्नूपुरे ॥ १–२–५१ ॥

अस्य ऊत इदेतौ स्तः । [2] णिउरं णेउरम् ॥

[3] ओल् स्थूणतूणमूल्यतूणीरकूर्परगुळूचीकूश्माण्डताम्बूलेषु ॥१–२–५२॥

एष्वूत ओकारो लित्स्यात् ॥

(वा) स्थूणतूणयोस्तु वा ।

[4] थूणं थोणं इत्यादि ॥

ऋतोऽत् ॥ १–२–५३ ॥

---

'सूक्ष्मे' (प्रा. सू. १-४-७०) इत्यनेन ण्हादेशे च सण्हं सुण्हं इत्युदाहृतं दृश्यते । चन्द्रिकायां तु 'सूक्ष्मे वोतः' (प्रा. सू. १-२-६७) इति पाठाभिप्रायेण पूर्वसूत्रादोदित्यस्यानुवृत्त्या ओत्वस्य वैकल्पिकतयाऽत्र विधानमिति पक्षान्तराभिप्रायेण सोण्हमित्युदाहृतं दृश्यते । अत्वौत्वोभयाभावपक्षे 'संयोगे' (प्रा. सू. १-२-४०) इति संयुक्तात्पूर्वस्य ह्रस्वे सुण्हमिति रूपं बोध्यम् ॥

[1] इदेदित्यादि ॥ एतत्सूत्रात्पूर्वं दुकूलोद्व्यढकण्डूयतिहनुमद्वातूलमधूकशब्दानां दुअल्लं दुऊलं, उव्वीढं उव्वूढं, कंडुअइ, हणुमन्तो, वाउलो, महुअं महूअं इति प्राकृते रूपसाधकानि 'अल् दुकूले' (प्रा. सू. १-२-६८) 'ईदुद्व्यढे' (प्रा. सू. १-२-६९) 'उल् कण्डूयहनुमद्वातूले' (प्रा. सू. १-२-७०) 'वा मधूके' (१-२-७१) इति सूत्रचतुष्टयं सूत्रपाठेऽधिकमुपात्तम् ॥

[2] णिउरमित्यादि ॥ नूपुरशब्दे नकारस्य 'आदेस्तु' (प्रा. सू. १-३-५३) इति णकारः 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना पकारस्य लुक्च विशेषः ॥

[3] ओलित्यादि ॥ अत्र सूत्रे स्थूणाशब्द आकारान्तः, ताम्बूलशब्दः तम्बूल इति च त्रिविक्रमवृत्तौ पठितो दृश्यते ॥

[4] स्थूणतूणयोस्तु वेति ॥ बहुलाधिकारादिदं सिद्धमिति त्रिविक्रमलक्ष्मीधरौ । तोणं तोणीरं मोल्लं कोप्परं गलोई कोहण्डी तांबोलम्, इत्येतत्सूत्रगततूणादिशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

घृतम्–[1]घअम् ।

[2]इल् कृपगे[3] ॥ १–२–५४ ॥

लित्वान्नित्यम् । कृपः– [4]किवो ॥
[5]कृपनृपकृपणर्द्धिकृशाः कृशानुशृङ्गारवृद्धकपिगृध्राः ।
भृङ्गारमृगसृगाला वृश्चिकदृष्टिस्पृहाहृदयतृप्राः ।
मृष्टोत्कृष्टसमृद्धिव्याहृतभृङ्गर्षिवृत्तिकृतिकृषकाः ।
कृसरकृपाणवितृष्णाः पृथ्वीभृगुकृच्छ्रधृतिकृपाकृत्याः ॥

---

[1] घअमिति ॥ घृतशब्दे तकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुग्बोध्यः ॥

[2] इल् कृपग इति ॥ एतत्सूत्रात्पूर्वं मृदुत्वमृदुककृशाशब्देषु ऋकारस्य आत्वविकल्पविधानेन माउत्तणं मउत्तणं, माउअं मउअं, कासा कसा, इति प्रत्येकं रूपद्वयसाधकं 'आद्वा मृदुत्वमृदुककृशासु' (प्रा. सू. १-२-७५) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[3] कृपग इति ॥ अत्र गशब्दस्य गणसंज्ञकत्वेन कृपग इत्यस्य कृपादावित्यर्थो बोध्यः ॥

[4] किवो इति ॥ कृपशब्दे प्रकृतसूत्रेण ऋकारस्य इत्वे पकारस्य 'पो वः' (प्रा. सू. १-३-५५) इति वकारादेशे च किवो इति रूपम् ॥

[5] कृपः–किवो । नृपः–णिवो । कृपणः–किवणो । ऋद्धिः–इद्धी । कृशः–किसो । कृशानुः–किसाणू । शृङ्गारः–सिंगारो । वृद्धकविः–विद्धकई । गृध्रः–गिद्धो । भृङ्गारः–भिङ्गारू । मृगः–मिओ । सृगालः–सिआलो । वृश्चिकः–विञ्चुओ । दृष्टिः–दिट्ठी । स्पृहा–छिहा । हृदयं–हिअअं । तृप्रं–तिप्पं । तृप्रशब्दस्यास्य मोघं दुःखं अधर्मः पापं काष्ठं आज्यं वाऽर्थ इति त्रिविक्रमवृत्तावुक्तम् । मृष्टं–मिठं । उत्कृष्टं–उक्किट्ठम् । समृद्धिः–समिद्धी । व्याहृतं–वाहित्थम् । भृङ्गः–भिङ्गो । ऋषिः–इसी । वृत्तिः–वित्ती । कृतिः–किई । कृषिकः–किसिओ । कृसरः–किसरो । कृपाणः–किवाणो । वितृष्णः–विइण्हो । पृथ्वी–पिच्छी । भृगुः–भिऊ । कृच्छ्रं–किच्छम् । धृतिः धिई । कृपा–किवा । कृत्या–किच्चा । घुसृणं–घुसिणम् । सकृत्–सइ । दृष्टं–दिट्ठम् । बृसी–बिसी । घृणा–घिणा । बृंहितं–बिंहिअम् । गृष्टिः–गिट्ठी । तृषितः–तिसिओ । वृष्टं–विट्ठम् । सृष्टिः–सिट्ठी । मृष्टं–मिट्ठम् । इति कृपादिगणपठितानां प्राकृते सिद्धरूपाणि । त्रियिक्रमवृत्तावत्र कृपादि-

घुसृणसकृद्दृष्टानि च बृसीघृणाबृंहितानि गृष्टिश्च ।
तृषितो वृष्टं * सृष्टिर्मृष्टस्य स्याद्रसार्थकस्यैव ॥

[1] **भृङ्गमृगाङ्कमृत्युधृष्टमसृणेषु वा ॥ १-२-५५ ॥**

भिंगं भंगं, इत्यादि ॥

[2] **पृष्ठेऽनुत्तरपदे ॥ १-२-५६ ॥**

पिट्ठी । अञ्जल्यादित्वात् स्त्रीत्वम् । पक्षे पट्ठम् । अनुत्तरपदे किम् ? महीपृष्ठं-महीपट्ठम् ॥

---

गणे वृषवृत्तपृष्ठशब्दा अधिकाः पठ्यन्ते । एतद्वृत्तिचन्द्रिकयोः कृपादिगणेऽस्मिन् पठिताः तृषितगृध्रमृगशब्दाश्च त्रिविक्रमवृत्तौ न कण्ठतः परिगणिताः । भृङ्गारुशब्दश्चाकारान्तश्चन्द्रिकायां परिगणितः । तथा चन्द्रिकाकोशे 'भृशहृतभृतकपितृघ्ना वृतिश्च वृत्तिश्च गृध्नुश्च' इतीमे शब्दाश्चाधिकाः पठ्यन्ते ॥

[1] **भृङ्गेत्यादि** ॥ अत्रैव वृत्तौ पूर्वं कृपादिगणे भृङ्गशब्दपाठदर्शनात् भृङ्गशब्दस्य नित्यपुंलिङ्गतया एतद्वृत्तिगतोदाहरणे 'भिंगं भंगं' इति क्लीबतयोदाहरणस्यानुपपन्नत्वात् त्रिविक्रमवृत्तिचन्द्रिकयोः 'शृङ्गमृगाङ्क' इति सूत्रपाठस्यैव दर्शनाच्च शृङ्गशब्दस्थाने भृङ्गशब्दपाठो लेखकप्रमादेनात्र पतित इति सम्भाव्यते । अत्रत्यधृष्टशब्दस्थाने चन्द्रिकायां दृष्टशब्दः पठितो दृश्यते । सिंगं संगं-शृङ्गम् । मिअंको मअंको-मृगाङ्कः । मिच्चू मच्चू-मृत्युः । धिट्ठो धट्ठो-धृष्टः । मसिणं मसणं-मसृणम् । इत्युदाहरणानि बोध्यानि ॥

**पृष्ठ इत्यादि** ॥ अनुत्तरपदभूतपृष्ठशब्दसम्बन्धिनः ऋकारस्येत्वं वा भवतीत्यर्थः । पृष्ठशब्दे अनेन ऋकारस्येकारादेशे 'क ग ट ड '(प्रा. सू. १-४-७७) इत्यादिना षकारस्य लुकि शेषस्य द्वित्वे अञ्जल्यादित्वात् स्त्रीत्वपक्षे पिट्ठी इति रूपम् । चन्द्रिकायां 'इत्वं स्त्रियामेवेत्येके' इत्युक्त्या अत्र वृत्तौ पक्षे पट्ठं इत्युदाहृतं दृश्यते । त्रिविक्रमवृत्तौ तु इत्वस्य वैकल्पिकतया तदभावपक्षे स्त्रियां पट्ठी इत्यप्युदाहृतं दृश्यते । स्त्रीत्वाभावपक्षेऽपीत्वं भवतीत्यभिप्रायेण चन्द्रिकायां पिट्ठं इत्यप्युदाहृतं दृश्यते ॥

---

* सृष्टिर्मृष्टस्येद्रसवदर्थकस्यैव—**पा.**

## [1] ऋतुगे ॥१-२-५७॥

उत्वं [2] नित्यं स्यात्। ऋतुः-उऊ।

[3] बृन्दावन[4]वृषभभृतकबृन्दऋजू च [5] प्रवृद्धऋतुवृद्धाः।
पृथिवी मृणाळनिवृतप्रावृड्वृत्तान्तसंवृतस्पृष्टाः।
निर्वृतनिर्वृतिपितृकाः संभृतविवृतौ [6] परावृत्तः।
वृद्धिनिवृत्तिप्रभृति [7] प्रवृत्तिजामातृकपरावृत्ताः।
परभृतनिभृतप्राभृतभृतिभृतऋणमातृकाश्च [8] ऋत्वादिः॥

---

[1] ऋतुग इति ॥ एतत्सूत्रात्पूर्वं वृषभशब्दस्य उसहो वसहो इति, बृन्दारकनिवृत्तशब्दयोः बुन्दारओ बन्दारओ, णिवुत्तो णिवत्तो, इति च रूपसाधकं 'उद्वृषभे वुः' (प्रा. सू. १-२-७९) 'बृन्दारकनिवृत्तयोः' (प्रा. सू. १-२-८०) इति सूत्रद्वयमधिकं दृश्यते ॥

[2] नित्यं स्यादिति ॥ यदीदं वैकल्पिकं स्यात्तर्हि बृन्दारकनिवृत्तशब्दयोरपि ऋत्वादिगण एव पाठेन सिद्धे पृथक्सूत्रारम्भसामर्थ्यादिदं नित्यमिति भावः। ऋतुशब्दे 'प्रायो लुक् (प्रा. सू. १-३-८) इत्यादिना तलोपः ॥

[3] चन्द्रिकाकोशदृश्यमानसूत्रगणपाठे तु—

'ऋतुबृन्दावनऋषभभ्रातृकबृन्दप्रवृष्टऋजुवृद्धाः' इति दृश्यते ॥

[4] वृषभेति ॥ 'उद्वृषभे वुः' (प्रा. सू. १-२-७९) इति सूत्रस्य जागरूकतयाऽत्र ऋषभशब्दपाठ एव युक्त इति भाति। एवमेव चन्द्रिकात्रिविक्रमवृत्त्योरपि दृश्यते। एवं भृतकशब्दस्थाने भ्रातृकशब्दपाठश्चोचितः ॥

[5] प्रवृद्धेति ॥ वृद्धशब्दस्यात्र परिगणितत्वेन चन्द्रिकात्रिविक्रमवृत्त्यनुरोधेन च प्रवृष्टशब्दपाठ एवात्र समुचितः ॥

[6] परावृत्त इति ॥ अत्रैवोत्तरत्र परावृत्तशब्दपाठादत्र पुनः पाटे द्विरुक्त्यापातात् 'प्र ृत्तनिर्वृत्ताः' इति चन्द्रिकानुरोध्येव पाठः समुचितः ॥

[7] प्रवृत्तीति ॥ चन्द्रिकागणपाठे निवृत्तशब्दोऽत्र दृश्यते ॥

[8] ऋत्वादिरिति ॥ गणेऽस्मिन् चन्द्रिकागणपाठे परामृष्टशब्दोऽधिकः पठ्यते। बुन्दावणं उसहो भाउओ बुन्दं उज्जू पउट्टो उऊ वुड्ढो पुढवी मुणाळं णिउअं पाउसो वुत्तन्तो संउअं पुट्ठो णिव्वुअं णिव्वुई पिउओ, संहुअं विउअं पउत्तो णिव्वुत्तो उड्ढी णिउत्ती पहुई पउ_ी जामाउओ पराउत्तो परहुओ णिहुअं पाहुडं भुई भुओ उणं माउआ इति बृन्दावनादीनां ऋत्वादिगणपठितानां प्राकृतसिद्धरूपाणि ॥

## गौणान्त्यस्य ॥ १–२–५८ ॥

उपसर्जनपदान्तस्य ऋत उत्वं स्यात् । पितृवनम्–[1] पिउवणम् ॥

## (वा) भर्तृदारिकादावित्वं वाच्यम् ।

भट्टिदारिआ ॥

## इदुन्मातुः ॥ १–२–५९ ॥

गौणस्य मातृशब्दस्येदुतौ स्तः । मातृगृहं–[2] माइघरं माउघरम् ॥

## [3] क्वचिदगौणस्यापि ॥ १–२–६० ॥

मातृणां–माईणं माऊणं ॥

## [4] पृष्टिपृथङ्मृदङ्गनप्तृकवृष्टे ॥ १–२–६१ ॥

इदुतौ स्तः । पिट्ठी पुट्ठी इत्यादि ॥

---

[1] **पिउवणमिति** ॥ पितृवनशब्दे तकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुक् ॥

[2] **माइघरमिति** ॥ मातृगृहशब्दे गृहशब्दस्य 'अपतौ घरो गृहस्य' (प्रा. सू. १-३-९६) इति गृहशब्दस्य घरादेशः ॥

[3] **क्वचिदगौणस्यापीति** ॥ इदं सूत्रं त्रिविक्रमवाक्यरूपतया तदीयवृत्तौ दृश्यते । चन्द्रिकायामपीदं सूत्रं न दृश्यते ॥

[4] **पृष्टीति** ॥ सूत्रेऽस्मिन् पृष्टीत्यस्य स्थाने वृष्टीति पाठश्चन्द्रिकात्रिविक्रमवृत्त्योर्दृश्यते। अत्रत्यानां पृथङ्मृदङ्गनप्तृकपृष्ठशब्दानां पिहं पुहं, मिइंगो मुइंगो, णत्तिओ णत्तुओ, विट्ठो वुट्ठो, इति प्राकृते प्रत्येकं रूपद्वयं बोध्यम् । यद्यपि मुद्रितचन्द्रिका-कोशे मृदङ्गशब्दस्य मिअंगो मुअंगो इति रूपद्वयमुदाहृतं दृश्यते । तथाऽपि तस्य स्वप्नादिपठितत्वेन तदीयद्वितीयाकारस्य नित्यतयेत्वस्य दुर्निवारतया मध्येकारकत्वमेवोचितम् । त्रिविक्रमवृत्तौ श्रीमद्वेदान्ताचार्यप्रणीतप्राकृतशब्दविशदसंग्रहेऽपि तथैवोदाहृतम् । चन्द्रिकायामेव 'स्वप्नादाविल्' (प्रा. सू. १-२-११) इति सूत्रे स्वेनापि तथैवोदाहृतं च । ततश्च मध्याकारकोदाहरणं लेखकयोजकादिप्रमादापतितमिति विभाव्यते ॥

## तु बृहस्पतौ ॥ १-२-६२ ॥

इदुतौ वा स्तः। [1] विहप्पई बुहप्पई। पक्षे वहप्पई। 'सो बृहस्पति' (प्रा. सू. १-४-७४) इति सत्वे तु विहस्सई बुहस्सई वहस्सई ॥

## उदूदोल्मृषि ॥ १-२-६३ ॥

मृषाशब्दे [2] लित एते स्युः। मुसा मूसा मोसा ॥

## वृंत इदे[3]ङ् ॥ १-२-६४ ॥

---

[1] विहप्पई इति ॥ अत्र आदेर्बकारस्य वकारादेशविधायकानुपलम्भेन बकार एवोचितः। बृहस्पतिशब्दस्य प्राकृतेऽष्टादश रूपाणि संभवन्ति। तानि च यथा—प्रकृतेत्वोत्वयोर्विकल्पतया इत्वपक्षे—'भ्यौ बृहस्पतौ तु बहोः' (प्रा. सू. १-३-७५) इति सूत्रेण बकारहकारयोर्यथाक्रमं भकारयकारादेशपक्षे संयुक्तस्य स्पस्य 'श्लेष्मबृहस्पतौ तु फोः' (प्रा. सू. १-४-४६) इति फत्वपक्षे भियप्फई इति, फत्वाभावपक्षे 'सो बृहस्पतिवनस्पत्योः' (प्रा. सू. १-४-७४) इति सत्वपक्षे भियस्सई इति, सत्वाभावपक्षे 'कगटड' (प्रा. सू. १-४-१७) इत्यादिना सलोपे भियप्पई इति, भकारयकारादेशाभावपक्षे बिहप्फई बिहस्सई बिहप्पई इति षड्रूपाणि ॥

एवमुत्वपक्षे पूर्वोक्तरीत्या भकारयकारादेश-तदभाव-फत्व सत्व-सलोपपक्षेषु भुयप्फई भुयस्सई भुयप्पई बुहप्फई बुहस्सई बुहप्पई इति षड्रूपाणि ॥

तथा-इत्वोत्वयोरुभयोरपि वैकल्पिकत्वात्तदुभयाभावपक्षे 'ऋतोऽत्' (प्रा. सू. १-२-७३) इत्यत्वे पूर्वप्रदर्शितरीत्यैव भकारयकारादेशतदभावपक्षयोः तत्र फत्वसत्व-सलोपपक्षेषु च भयप्फई भयस्सई भयप्पई बहप्फई बहस्सई बहप्पई इति षड्रूपाणि इत्याहत्य अष्टादश रूपाणि ॥

[2] लित इति ॥ तुशब्दानुवृत्तये सूत्रे लित्करणमिति बोध्यम्। ततश्च उकार-ऊकार-ओकारा नित्यं भवन्तीत्यर्थात् 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यकारो न प्रवर्तत इति सिध्यति। अत्र लित्करणाभावे त्रय एते वा भवन्तीत्यर्थापत्त्या एतत्त्रितया-भावपक्षे 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यत्वं दुर्निवारं स्यादिति बोध्यम्। सूत्रेऽस्मिन् 'मृषि' इत्यत्र 'मृषे' इति चन्द्रिकायां पठितं दृश्यते ॥

[3] एङिति ॥ 'एओङ्' (वर्णसमाम्नाय सूत्रं ३) इति सूत्रे एङिति प्रत्याहाराङ्गी-कारादेकारौकारौ गृह्येते। पूर्वसूत्र एव तुशब्दानुवृत्तेर्विच्छिन्नत्वान्नात्र लित्करणावश्यकतेति

[1] विंतं वेंतं वोंतं। 'टल्त्रसरवृन्त, (प्रा. सू. १-३-३७)' इति टत्वे तु विंटं वेंटं वोंटं ॥

[2] डिराहते ॥ १–२–६५ ॥

[3] आडिसो ॥

दृप्तेऽरि सा ॥ १–२–६६ ॥

दृप्ते सा सह ऋतोऽरि स्यात्। [4] दरिओ ॥

केवलस्य रिः ॥ १–२–६७ ॥

[5] व्यञ्जनासंयुक्तस्य ऋतो रिः स्यात्। ऋद्धिः-रिद्धी। व्यासऋषिः [6] वासरिसी ॥

---

बोध्यम्। चन्द्रिकायां त्वत्र इदेताविति सूत्रे पाठेन इकारैकारावेव विधीयेते इत्यभिप्रेत्य तलविंटं तलवेंटं इति रूपद्वयमुदाहृतं दृश्यते। तत्तु त्रिविक्रमवृत्तौ एङिति पाठाभिप्रायेण इकारैकारौकाराणां विधानेन विंटं वेंटं वोंटं इति रूपत्रयस्योदाहरणात्त्रिविक्रमदेवाननुमतमिति ज्ञायते ॥

[1] विंतमित्यादि ॥ इदं तु न परिनिष्ठितरूपप्रदर्शनपरम्। 'टल्त्रसरवृन्त' (प्रा. सू. १-३-३७) इत्यादिना टकारादेशस्य नित्यतयैव विधानादिति बोध्यम्। अत एव त्रिविक्रमवृत्तावपि टकारघटितमेव रूपमुदाहृतं दृश्यते ॥

[2] डिराहृत इति ॥ मुद्रितत्रिविक्रमवृत्तिकोशे 'ढिराहृते' इति सूत्रपाठो दृश्यते। कोशालयेऽस्मिन् दृश्यमानलिखितत्रिविक्रमवृत्तिकोशे तु 'ठिराहृते' इति सूत्रपाठो दृश्यते। चन्द्रिकायां त्विदं सूत्रमेव नोपात्तम् ॥

[3] आडिसो इति ॥ आहृतशब्दे तकारस्य सत्वविधायकसूत्रानुपलम्भात् तकारलुका आडि(ठि)ओ इत्येव त्रिविक्रमवृत्तावुदाहरणाच्च सकारघटितरूपं लेखकप्रमादायत्तमिति भाति। आहृतशब्दे तकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लोपे लिखितकोशेषु 'ठिराहृते' (प्रा. सू. १-२-८८) इत्येव सूत्रपाठदर्शनाद्दकारस्य ठीत्यादेशे आठिओ इत्येव रूपमुचितमिति बोध्यम् ॥

[4] दरिओ इति ॥ दृप्तशब्दे प्रकृतसूत्रेण ऋप्त् इत्यस्य अरीत्यादेशे दरिओ इति रूपम् ॥

[5] व्यञ्जनासंयुक्तस्येति ॥ अव्यवहितपूर्वव्यञ्जनासहकृतस्येत्यर्थः। तेनोत्तरादिव्यञ्जनसहकारेऽपि न क्षतिः ॥

[6] वासरिसी इति ॥ व्यासऋषिशब्दे यकारस्य 'मनयाम्' (प्रा. सू. १-४-७९) इति लुकि, षकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सकारादेशे प्रकृतसूत्रेण ऋकारस्य रीत्यादेशे वासरिसी इति रूपम् ॥

## दृश्यक्स [1]क्विनि ॥ १–२–६८ ॥

[2]'क्सश्चेति वक्तव्यं' (वा. २०३०) इति विहितो यो दृशेः क्सः, यश्च 'त्यदादिषु दृशोऽनालोचने कञ्च' (पा. सू. ३-२-६०) इति विहितः क्विन् तदुभयान्ते अदन्ते च दृशिधातौ ऋतो रिः स्यात् । क्सः, सदृक्षः–[3]सरिच्छो। क्विन्, सदृक्–सरी । क्सक्विन्भ्यां साहचर्यादकारः कञिति निश्चीयते । कञ्, सदृशः–सरिसो । कञन्तस्यैव, नेह, [4]तादृश–तादिसो । 'हलोऽक्' (प्रा. सू. २-४-६९) इत्यगागमः। तेनात्रापि रीत्यादेशं मन्यमानो [5]लक्ष्मीधरो निरस्त इति ध्येयम्। त्वादृगित्यस्य तु क्विबन्तत्वाद्-प्रयोग [6]इत्युक्तम् ॥

---

[1] क्विनीति ॥ यद्यप्यत्र मुद्रितत्रिविक्रमवृत्तिकोशे 'क्विपि' इति सूत्रपाठो दृश्यते । तथाऽप्यत्रैवोत्तरत्र 'त्यदादिसूत्रविहित' इत्युक्तिदर्शनादत्रत्यलिखितकोशान्त-रानुगुण्याच्च 'क्विनि' इत्येव सूत्रे पाठस्समुचित इति भाति । अत एवैतत्सूत्रान्ते 'क्सक्विनोस्साहचर्यात्त्यदादिष्विति विहितः कञिह गृह्यते' इत्ययमत्रत्यलिखित-त्रिविक्रमवृत्तिग्रन्थोऽप्यत्रानुकूल इति ज्ञायते। अयं च ग्रन्थो मुद्रितत्रिविक्रमवृत्तिकोशे न दृश्यते ॥

[2] क्सश्चेति॥ 'क्सोऽपि वाच्यः' (वा. २०३०) इति सवार्तिकसूत्रपाठे वार्तिकपाठो दृश्यते ॥

[3] सरिच्छो इति ॥ सदृक्षशब्दे 'प्रायो लुक्' (पा. सू. १-३-८) इत्यादिना दलोपे संयुक्तस्य क्षस्य 'स्पृहादौ' (प्रा. सू. १-४-२२) इत्यनेन छत्वे द्वित्वे पूर्वस्य 'पूर्वमुपरि (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे च सरिच्छो इति रूपम्॥

[4] तादृशेति ॥ नेदमकारान्तं संस्कृतप्रकृतिरूपम् । तथा सति तस्य कञन्ततया 'कञन्तस्यैव, नेह' इत्युक्तेरसंगत्यापत्तेः । किंतु तादृक्शब्दस्य हलन्तस्य प्राकृते 'हलोऽक्' (प्रा. सू. २-४-६९) इत्यगागमानन्तरप्रक्रियादशागतं रूपं गृहीतमिति बोध्यम्। अन्यथा तत्र प्रकृतसूत्रेण र्यादेशस्य दुर्वारत्वात् उत्तरत्र तादिसो इति प्रत्युदाहरणप्रदर्शनस्य 'हलोऽक्' (प्रा. सू. २-४-६९) इत्यगागम इत्युत्तरत्र दृश्यमान-वृत्तिग्रन्थस्य चासङ्गत्यापत्तेरिति बोध्यम् । 'तादृश–तादिसो' इत्यत्र ऋकारस्य इत्वं कथमिति तु विमर्शनीयम् ॥

[5] लक्ष्मीधरो निरस्त इति ॥ वृत्तिकृत्त्रिविक्रमदेवेनाप्यत्र सूत्रे अपदेन साहच-र्याश्रयणेन कञ एव ग्रहणमित्युक्ततया 'हलोऽक्' (प्रा. सू. २-४-६९) इत्यगागमस्य अग्रहणेन तदागमविशिष्टतादृशशब्दस्य तादिसो इति रूपस्यैवेष्टत्वाच्चेति भावः ॥

[6] इत्युक्तमिति ॥ एतद्वृत्तावेवादौ 'सिद्धिर्लोकाच्च' (प्रा. सू. १-१-१) इति

## [1] ऋतुऋजुऋणऋषिऋषभे वा ॥ १-२-६९ ॥

**रिऊ उऊ [2] इत्यादि ॥**

## [3] ऐच एङ् ॥ १-२-७० ॥

---

सूत्रे 'क्विबादिप्रत्ययान्तानां न प्रयोगार्हत्वम्' इत्युक्तमित्यर्थः। प्राकृते हलन्तशब्देषु 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२) 'हलोऽक्' (प्रा. सू. २-४-६९) इत्यादिना लोपागमादीनां विधानात्क्विबन्तानां हलन्तानां प्राकृतेऽप्रयोग इति भावः ॥

[1] **ऋतुऋज्वित्यादि ॥** नन्वेषु ऋतुऋजुऋषभशब्देषु ऋकारस्य प्रकृतसूत्रेण वैकल्पिकतया यादेशविधाने 'ऋतुगे' (प्रा. सू. १-२-८१) इति सूत्रे एतेषां ऋकारस्य नित्यतयोत्वविधानं किमर्थमिति चेत्। उत्वस्यापि वैकल्पिकत्वे एतदुभयाभावपक्षे 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यकारादेशो दुर्वारस्स्यादिति यादेशाभावपक्षे नित्यतयोत्वमेव प्रवर्तेत न त्वत्वमित्येतदर्थं नित्यतयोत्वविधानं सार्थकमिति बोध्यम् ॥

[2] **इत्यादीति ॥** रिज्जू उज्जू, रिणं अणं, रिसी इसी, रिसहो उसहो, इति प्रत्येकं ऋजुऋतुऋणऋषिऋषभशब्दानां प्रत्येकं द्वे द्वे रूपे बोध्ये। ऋजुशब्दे 'तैलादौ' (प्रा. सू. १-४-९३) इति जकारस्य द्वित्वम्। ऋणऋषिऋषभऋजुशब्देषु यादेशाभावपक्षे ऋकारस्य 'ऋतोऽत्' (प्रा. सू. १-२-७४) 'इल् कृपगे' (प्रा. सू. १-२-७६) 'ऋतुगे' (प्रा. सू. १-२-८१) इति सूत्रैः अत्वेत्वोत्वानि बोध्यानि। ऋषभशब्दे भकारस्य 'खघथधभाम्' (प्रा. सू. १-३-२०) इति हकारादेशः षकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सकारादेशश्च बोध्यः ॥

[3] **ऐच एङिति ॥** एतत्सूत्रात्पूर्वं परतश्च क्लृप्तचपेटाकेसरदेवरसैन्यवेदनासैन्धवशनैश्चरसरोरुहमनोहरप्रकोष्ठातोद्यान्योन्यकौक्षेयकगव्यस्तेनसोच्छ्वासशब्देष्वेचां इत्वादिविधानेन चविडा चवेडा, किसरं केसरं, दिअरो देअरो, सिण्णं सेण्णं, विअणा वेअणा, सिंधवं, सणिच्छरो, सररुहं सरोरुहं, मणहरं मणोहरं, पवट्ठो पबट्ठो, आवज्जं आबज्जं, अण्णण्णं अण्णोण्णं, कुच्छेअअं कोच्छेअअं, गऊ गाई, थूणो थेणो, सूसासो, इति रूपसाधकानि 'क्लृप्त इलिः' (प्रा. सू. १-२-९३) 'चपेटाकेसरदेवरसैन्यवेदनास्वेचस्त्वित्' (प्रा. सू. १-२-९४) 'सैन्धवशनैश्चरे' (प्रा. सू. १-२-९५) 'त्वत्सरोरुहमनोहरप्रकोष्ठातोद्यान्योन्ये वश्च त्वोः' (प्रा. सू. १-२-९६) 'कौक्षेयक उत्' (प्रा. सू. १-२-९७) 'गव्य उदा इत्' (प्रा. सू. १-२-९९) 'ऊ स्तेने वा' (प्रा. सू. १-२-१००) 'सोच्छ्वासे' (प्रा. सू. १-२-१०१) इत्येतानि सूत्राण्यधिकानि सूत्रपाठे दृश्यन्ते ॥

शैलः सेळो। यौवनं [1] जोव्वणम्। तैलादित्वाद्द्वित्वम्॥

## [2] शौण्डगेषु ॥ १-२-७१ ॥

एच उत्वम्। शौण्डः-सुण्डो। दौवारिकः-दुवारिओ इत्यादि॥

## अइ तु [3] वैरादौ ॥ १-२-७२ ॥

ऐचः अइ इति वा स्यात्। वैरं-वइरं वेरं। कैरवं-कइरवं केरवं इत्यादि॥

## [4] दैत्यगेषु ॥ १-२-७३ ॥

ऐच अइ [5] नित्यं स्यात्। [6] दइच्चो॥

---

[1] जोव्वणमिति॥ यौवनशब्दे यकारस्य 'आदेर्जः' (प्रा. सू. १-३-७४) इति जकारादेशो बोध्यः॥

[2] शौण्डगेष्विति॥ सूत्रस्यास्य त्रिविक्रमवृत्तिचन्द्रिकयोः 'कौक्षेयक उत्' (प्रा. सू. १-२-९७) इति सूत्रानन्तरं पाठेन पूर्वसूत्रादत्र उदित्यानुवृत्त्या आदेरित्यधिकाराच्च शौण्डादिष्वादेरैच उत्वं भवतीत्येतत्सूत्रार्थो बोध्यः। शौण्डादिगणेऽस्मिन् पठितानां शौद्धोदनिमौञ्जायनसौन्दर्यसौगन्ध्यदौवारिकसौवर्णिकपौलोमीशब्दानां प्राकृते सुद्धोअणी मुंजाअणो सुंदेरं सुगंधत्तणं दुवारिओ सुवण्णिओ पुलोमी इति रूपाणि बोध्यानि॥

[3] वैरादाविति॥ वैरादिगणपठितानां वैरवैशम्पायनवैदेशिकवैश्रवणचैत्रकैलासवैतालिककैरवदैवादिशब्दानां वइरं वेरं, वइसम्पाअणो वेसम्पाअणो, वइदेसिअं वेदेसिअं, वइसवणो वेसवणो, चइत्तो चेत्तो, कइलासो केलासो, वइआलिओ वेआलिओ, कइरवं केरवं, दइव्वं देव्वं, इति प्राकृते सिद्धरूपाणि बोध्यानि॥

[4] दैत्यगेष्विति॥ त्रिविक्रमवृत्तिचन्द्रिकयोस्तु 'दैत्यादौ' (प्रा. सू. १-२-१०४) इत्येतत्सूत्रपाठो दृश्यते॥

[5] नित्यमिति॥ पृथक्सूत्रकरणादिति भावः॥

[6] इत्यादीति॥ 'दैत्यो दैन्यं दैवतकैतववैदर्भवैदेहाः। ऐश्वर्यं वैजननो भैरववैहारिकौ च वैदेशः। वैश्वानरवैशाखौ स्वैरं वैशालचैत्ये च॥' इति दैत्यादिः। अत्र त्रिविक्रमवृत्तौ वैहारिकशब्दस्थाने वैतालीयशब्दः पठितो दृश्यते। एषां च दैत्यादि-

कैतवं-कइदवं [1] इत्यादि ॥

## [2] पौरगे गौरवे चावुत् ॥ १-२-७४ ॥

पौरादौ गौरवे च ऐच अउस्स्यात्। पउरो गउरवं। गौडः-गउडो [3] इत्यादि ॥

---

शब्दानां प्राकृते 'दइच्चो दइन्नं दइवअं कइवअं वइअब्भो वइएहो अइसरिअं वइअणणो भइरवो वइहारिओ (वइआलीयं) वइएसो वइसाणरो वइसाहो सइरं वइसालो चइत्तं' इति सिद्धरूपाणि बोध्यानि ॥

[1] दइत्तो इति ॥ अत्र त्योऽचैत्ये' (प्रा. सू. १-४-१७) इत्यनेन त्यस्य स्थाने चादेशस्य दुर्वारतया त्रिविक्रमवृत्तिचन्द्रिकयोः दइच्चो इत्येवोदाहरणाच्च तथैवोचितमिति भाति ॥

[2] पौरग इत्यादि ॥ इतः पूर्वं नौशब्दस्य नावा इति रूपसाधकं 'नाव्यावः' (प्रा. सू. १-२-१०५) इत्येकं सूत्रं सूत्रपाठेऽधिकं दृश्यते । किञ्चात्र त्रिविक्रमवृत्तिचन्द्रिकयोः एतद्वृत्त्युपात्तप्रकृतसूत्रस्थाने 'गौरव आत्' (प्रा.सू. १-२-१०६) 'पौरगे चाउत्' (प्रा. सू. १-२-१०७) इति सूत्रद्वयं पठितं दृश्यते । तद्रीत्या च गौरवशब्दगतस्यादेरौकारस्य प्रथमसूत्रेण आत्वे गारवमिति, तदुत्तरसूत्रेण चकारबलात् तस्यैवौकारस्य अउ इत्यादेशे गउरवमिति च रूपद्वयं सम्पद्यते। अत्र तु वृत्तौ अउ इत्येकमेवादेशमभिप्रेत्य गउरवमित्येकमेव रूपमुदाहृतम्। अत्रेदं चिन्तनीयम्—यदि गौरवशब्देऽपि एतद्वृत्त्यनुरोधेन अउ इत्यादेश एक एवेष्टः स्यात्तर्हि गौरवशब्दमपि पौरादावेवाऽन्तर्भाव्य अउ इत्यादेशविधानेनैव अभिमतसिद्धया सूत्रे अतिरिच्यमानगौरवशब्दोपादानमनर्थकं स्यात्। अतो विज्ञायते त्रिविक्रमवृत्तिचन्द्रिकोपात्तः सूत्रद्वयात्मकसूत्रपाठ एव साधीयानिति ॥

[3] इत्यादीति ॥ 'पौरस्सौरो मौलिः कौरवगौडौ च कौलश्च। कौशलपौरुषकौक्षेयकाश्च सौधं च मौनं च॥' इति पौरादिः। 'पउरो सउरो मउली कउरवो गउडो कउलो कउसलं पउरिसं कउच्छेअअं सउहं मउणं' इति पौरादिगणपठितानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

## [1]ई धैर्ये ॥ १-२-७५ ॥

धीरं। धैर्ये रः (प्रा. सू. १-४-५९) इति रत्वम् ॥ *

इति स्वरविकारप्रकरणम् ॥

इति श्रीदक्षिणसमुद्राधीश्वरचोक्कनाथभूपालप्रियसचिव-सज्जनावलम्ब-ब्रह्मण्यबिरुदाङ्क-चिन्नबोम्मभूपहृदयकमलकुहरविहरमाणश्रीसाम्बशिवप्रेरितेनाप्पयदीक्षितेन कृते प्राकृतमणिदीपे प्रथमाध्यायस्य द्वितीयः पादः ॥

---

[1]ई धैर्ये इति ॥ एतत्सूत्रात्पूर्वं उच्चैर्नीचैश्शब्दयोः उच्चअं नीचअं इति प्राकृतरूपसाधकं 'उच्चैर्नीचैसोरअः' (प्रा. सू. १-२-१०८) इत्येकं सूत्रमधिकं प्राकृतसूत्रपाठे दृश्यते ॥

* अन्तेऽत्र 'वा पुयाय्याद्याः' इत्येकं सूत्रमधिकं चन्द्रिकादौ। अत्र 'उन्मत्तपिशाचयोः पुयायी ॥ १ ॥ ऊणंदियमानन्दिते ॥ २ ॥ तुंवुरो दोंवुरो ॥ ३ ॥ माहिवायो माघवाते ॥ ४ ॥ शतकोटौ सइकोडी ॥ ५ ॥ माइंदो माकंदे ॥ ६ ॥ ओंदुरो उंदुरौ ॥ ७ ॥ आलिआ आळयाम् ॥ ८ ॥ तणसोल्लो तृणशून्ये ॥ ९ ॥ अरेष्टदैत्यकाकेषु रिट्ठो ॥ १० ॥ द्रुते दुरियम् ॥ ॥ ११ ॥ किरो किरौ ॥ १२ ॥ वामलूरो वामलूरौ ॥ १३ ॥ विसा वृपमूषिकयोः ॥ १४ ॥ वंद्रं बृन्दे ॥ १५ ॥ हेरिबो हेरम्बे ॥ १६ ॥ चिक्कं स्तोके ॥ १७ ॥ चलणाओहो चरणायुवे ॥ १८ ॥ उन्मत्तादुश्शीलयोर्वयणिया ॥ १९ ॥ मूसलं मांसले ॥ महालयपक्षे महलवक्खो ॥ २० ॥ चच्चरीके चच्चरिओ ॥ २१ ॥' इति गणसूत्राणि च दृश्यन्ते ॥

इति स्वरविकारप्रकरणम् ॥

इति महिशूरराजकीयप्राच्यकोशालयविदुषः तिरु. तिरु. श्रीनिवासगोपालाचार्यस्य कृतौ दीधित्यभिख्यायां प्राकृतमणिदीपटिप्पण्यां प्रथमाध्यायस्य द्वितीयः पादः ॥

---

# अथ प्रथमाध्यायस्य तृतीयः पादः.

## असंयुक्तहलादेशप्रकरणम्.

### एत्साज्झला [1] त्रयोदशगेऽचः ॥ १-३-१ ॥

त्रयोदशादावादे[2]रचः परेण-सस्वरव्यञ्जनेन सह एत्वं स्यात् । त्रयोदश-[3] तेरह । त्रयोविंशतिः-[4] तेवीसा । स्थविरः-[5] थेरो [6] इत्यादि ॥

---

अथ प्रथमाध्यायस्य तृतीयः पादः.

असंयुक्तहलादेशप्रकरणम्.

[1] त्रयोदशग इति ॥ 'गो गणपरः' (प्रा. सू. १-१-१०) इति संज्ञासूत्रबलादत्र त्रयोदशगशब्दस्य त्रयोदशादावित्यर्थः ॥

[2] आदेरिति ॥ अधिकारलब्धमेतत् ॥

[3] तेरहेति ॥ त्रयोदशशब्दे 'एत्साज्झला' (प्रा. सू. १-३-१) इत्यादिना प्रकृतसूत्रेण सस्वरव्यञ्जनस्य आदेरचः अयो इत्यस्य स्थाने एकारादेशे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि दकारस्य 'रल् ससत्यादौ (प्रा. सू. १-३-४२) इति रेफादेशे 'प्रत्यूषदिवसदशपाषाणे तु हः' (प्रा. सू. १-३-८८) इति शस्य पाक्षिके हादेशे तेरहेति रूपम् । शस्य हादेशाभावपक्षे तु 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वे तेरसो इत्यपि रूपान्तरं बोध्यम् ॥

[4] तेवीसेति ॥ त्रयोविंशतिशब्दे 'एत्साज्झला' (प्रा. सू. १-३-१) इत्यादिना स्वरव्यञ्जनसहितस्य आदेरवर्णस्य अयो इत्यस्य एकारादेशे 'विंशत्यादिषु त्या श्लोपल्' (प्रा. सू. १-१-४८) इत्यनेन बिन्दुसहितस्य तिशब्दस्य लोपे तस्य शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१९) इति दीर्घे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सत्वे च तेवीसा इति रूपम् ॥

[5] थेरो इति ॥ स्थविरशब्दे स्वरव्यञ्जनसहितस्यादेरवर्णस्य अवि इत्यस्य एत्वे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सलोपे च थेरो इति रूपम् ॥

[6] इत्यादीति ॥ अत्रादिशब्देन अयस्कारविचकिलत्रयस्त्रिंशदादिशब्दानां ग्रहणम् । तेषां च प्राकृते एक्कारो वेइल्लं तेत्तीसा इत्यादिसिद्धरूपाणि ॥

## [1] नवमालिकाबदरनवफलिकापूगफलपूतर ओल् ॥ १–३–२ ॥

[2] एषूक्तविषये ओत्वं स्यात् । पूतरः–पोरो । [3] अधम इत्यर्थः । णोमाळिआ । बोरं, [4] इत्यादि ॥

## [5] तु मयूरचतुर्थचतुर्दशचतुर्द्वारचतुर्गुणमयूखोलूखल-सुकुमारलवणकुतूहले ॥ १–३–३ ॥

[6] ऐषूक्तं वा । मोरो मऊरो इत्यादि । [7] अस्तोरखोरच्च इति बोध्यम् ॥

---

[1] **नवमालिकेत्यादि** ॥ एतत्सूत्रात्पूर्वं कदलकर्णिकारशब्दयोः केलं कण्णेरं इति रूपसाधकं 'कदले तु' (प्रा. सू. १-३-२) 'कर्णिकारे फोः' (प्रा. सू. १-३-३) इति सूत्रद्वयं सूत्रपाठेऽधिकं दृश्यते ॥

[2] **उक्तविषय इति** ॥ आद्यजुत्तरसस्वरव्यञ्जनविषय इत्यर्थः ॥

[3] **अधम इत्यर्थ इति** ॥ त्रिविक्रमवृत्तौ तु पूतरपदस्यास्य जलजन्तुबोधकत्वमपीत्यभिप्रेत्य 'अधमो जलजन्तुर्वा' इत्युक्तं दृश्यते ॥

[4] **इत्यादीति** ॥ अवशिष्टयोः नवफलिकापूगफलिकाशब्दयोः णोहलिआ पोहलिआ इति प्राकृते रूपं बोध्यम् । सूत्रेऽस्मिन् त्रिविक्रमवृत्तौ पूगफलिकाशब्दस्थाने पूगफलशब्दपाठोऽभिमतः ॥

[5] **तु मयूरेत्यादि** ॥ सूत्रेऽस्मिन् चतुर्वारशब्दस्थाने त्रिविक्रमवृत्तिचन्द्रिकयोः चतुर्द्वारशब्दः पठितः । तथा सुकुमारशब्दानन्तरं तत्रैवोदूखलशब्दोऽधिकः पठ्यते । किञ्चात्र त्रिविक्रमवृत्तौ 'मोरस्संस्कृतेऽपीति कश्चित्' इत्युक्त्वा तदप्रसिद्धमिति हेमचन्द्रमतं खण्डितं दृश्यते ॥

[6] **एषूक्तं वेति** ॥ एष्वादेरचः परेण सस्वरव्यञ्जनेन सह ओत्वं वेत्यर्थः । अत्र चतुर्थचतुर्दशचतुर्द्वारचतुर्गुणमयूखोलूखलसुकुमारलवणशब्दानां प्राकृते चोत्थो चउत्थो, चोद्दह चउद्दह, चोव्वारो चउव्वारो, चोग्गुणो चउग्गुणो, मोहो मऊहो, ओहलं उलूहलं, सोमालो सुउमालो, लोणं लअणं, कोहलं कुऊहलं, इति प्रत्येकं द्वे द्वे रूपे बोध्ये ॥

[7] **अस्तोरित्यादि** ॥ अस्तोः अखोः अचः इत्युत्तरसूत्रेषु पदत्रयमधिक्रियत इति बोध्यमित्यर्थः । अस्तोरित्यस्य 'संयुक्तः स्तुः' (प्रा. सू. १-१-१२) इति सूत्रबलादसंयुक्तस्येति , अखोरित्यस्य 'आदिः खुः' (प्रा. सू. १-१-९) इति सूत्रबलादनादेरिति चार्थो बोध्यः ॥

## [1] प्रायोलुक्कगचजतदपयवाम् ॥ १-३-४ ॥

पिकः-पिओ। नगरं-नअरं । कुचः-कुओ [2] इत्यादि। [3] प्रायोग्रहणादुच्चारणसौकुमार्यभावे क्वचित्क्वचिल्लोपो न क्रियते ॥

(वा) [4] समासेऽन्तर्वर्तिविभक्ति[5]निरूपितं पदत्वं वेति वाच्यम् ।

तेन कदाचित्पदादित्वान्न लुक्। सुखकरः—सुहकरो। कदाचित् सुहअरो। [6] अस्तोरित्यादि किम्? चर्चाकरः अंकः ॥

---

[1] **प्रायो लुगित्यादि** ॥ एतत्सूत्रात्पूर्वं 'अस्तोरखोरचः' (प्रा. सू. १-३-७) इत्यधिकारसूत्रमेकं, ततः पूर्वं च निषण्णशब्दस्य णुमण्णो इति रूपसाधकं 'निषण्ण उमः' (प्रा. सू. १-३-६) इत्यपरं सूत्रं च सूत्रपाठेऽधिकं दृश्यते। प्रायो लुगिति सूत्रस्यास्य असंयुक्तानामनादीनामचः परेषां कादीनां प्रायो लुग्भवतीत्यर्थः। यथाप्रयोगदर्शनमयं लुगिति सूचनार्थमत्र प्रायोग्रहणम् ॥

[2] **इत्यादीति** ॥ गजः—गओ, सुतः- सुओ, रिपुः—रिऊ, जयः—जओ, लावण्यं-लाअण्णं, इत्यादीनि जादीनां लुक्युदाहरणानि बोध्यानि। वबयोरभेदात् बकारस्य लुकि विबुधः—विउहो, इति रूपं त्रिविक्रमदेवेनोक्तम् ॥

[3] **प्रायोग्रहणादिति** ॥ प्रायोग्रहणात्क्वचिन्न भवतीत्युक्त्वा—सुकुसुमं पयागजलं सुगओ अगरू सचापं विजणं सुतारं विदुरो सपावं समवायो देवो दाणवो इति रूपाणीति त्रिविक्रमवृत्तावभिहितं दृश्यते ॥

[4] **समास इत्यादि** ॥ त्रिविक्रमवृत्तौ तु 'समासे तु वाक्यविभक्त्यपेक्षयाऽभिन्नपदत्वमपीष्यते' इति वाक्येनायमर्थः संगृहीतो दृश्यते ॥

[5] **विभक्तिनिरूपितमिति** ॥ विभक्तिनिमित्तकमित्यर्थः ॥

[6] **अस्तोरित्यादि किमिति** ॥ अत्र अस्तोरित्याद्यधिकाराभावे चर्चाशब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना चकारस्य द्वित्वे चच्चा इत्यत्र द्वितीयचकारस्य संयुक्तस्यापि 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुक्स्यात्, तथा करशब्दे ककारस्यादेरपि लुक्स्यात्, एवं अंकशब्दे अनुस्वारस्य प्रत्याहारसूत्रघटकत्वाभावेन, 'हलि ङञणननानाम्' (प्रा. सू. १-१-४१) इति हलः पूर्वस्य तस्य तद्वर्गीयपञ्चमाक्षरावश्यंभावेन वाऽच्त्वाभावात् ततः परस्य ककारस्य अचः परत्वाभावेऽपि 'प्रायो लुक्' (पा. सू. १-३-८) इत्यादिना लुक्स्यादिति भावः ॥

(वा) [1] पिशाच्यां चस्य जत्वं वाच्यम् ।

पिसाजी ॥

(वा) [2] चिह्वादावादेर्लुगिति वाच्यम् ।

चिह्नं-[3] इन्धं । न पुनः न उणो । स च-सो अ इत्यादि ॥

[4] नात्पः ॥ १-३-५ ॥

अवर्णात्परस्य पस्य लुङ् न स्यात् । किं तु 'पो वः' (प्रा. सू. १-३-५५) इति वत्वम् । जपः-जवो । चापः-चावो ॥

यश्रुतिरः ॥ १-३-६ ॥

[5] अवर्णपकारोऽकार ईषत्स्पृष्टयश्रुतिः स्यात् । आकारः—आआरो ॥

कामुकयमुनाचामुण्डातिमुक्तके मो ङ्लुक् ॥ १-३-७ ॥

---

[1] पिशाच्यामित्यादि ॥ त्रिविक्रमवृत्तौ त्वयमर्थः 'क्वचिच्चस्य जः, इति वाक्येन संगृहीतो दृश्यते ॥

[2] चिह्वादाविति ॥ त्रिविक्रमवृत्तावयमर्थः 'बहुलाधिकारात्क्वचिदादेरपि' इति वाक्येन संगृहीतो दृश्यते । एवं चन्द्रिकायामपि ॥

[3] इन्धमिति ॥ चिह्नशब्दे ह्नस्य 'वान्तन्धौ मन्युचिह्नयोः' (प्रा. सू. १-४-३२) इत्यनेन न्धादेशे आदेश्चस्य 'प्रकृतवार्तिकेन लुकि इन्धमिति रूपम् । न्धादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'श्नष्णस्नह्नस्नह्न' (प्रा. सू. १-४-६९) इत्यादिना ह्नस्य ण्हादेशे इण्हमिति, चकारलुकोऽपि वैकल्पिकत्वात्तदभावपक्षे चिन्धं चिण्हमिति च रूपाणि बोध्यानि ॥

[4] नात्प इति ॥ यद्यपि 'पो वः' (प्रा. सू. १-३-५५) इत्यनेन वत्वविधानसामर्थ्यादेव लुङ् न भवतीति 'नात्पः' (प्रा. सू. १-३-९) इति सूत्रं व्यर्थमिति प्रतीयते, तथाऽपि पकारविषये 'प्रायो लुक्' (प्रा. सू. १-३-८) 'पो वः' (प्रा. सू. १-३-५५) इत्यनयोः समानविषयकत्वेनोभयोः सार्थक्यसंपादनाय पाक्षिकत्वस्यावश्याभ्युपगमनीयतया अवर्णात्परत्वे पकारस्य लुग्वारणार्थं 'नात्पः' (प्रा. सू. १-३-९) इति सूत्रं चरितार्थमिति बोध्यम् । अत एव 'प्रायो लुक्' इत्यत्र प्रायग्रहणमिति बोध्यम् ॥

[5] अवर्णपकारोऽकार इति ॥ अत्र 'अवर्णात्परोऽकारः' इति पाठस्साधीयान् ॥

एषु मस्य लुक्स्यात् । [1]ङित्त्वात्सानुनासिकोच्चारः । काउँओ [2]इत्यादि । [3]'सिद्धिर्लोकात्' (प्रा. सू. १-१-१) इति ङस्येत्संज्ञा ॥

[4]**ऊत्वे सुभगदुर्भगे वः ॥ १-३-८ ॥**

अनयोः [5]कवर्गस्य वस्स्यात् ॥

---

[1]**ङित्त्वादिति** ॥ 'सानुनासिकोच्चारं ङित्' (प्रा. सू. १-१-१६) इति संज्ञासूत्रसत्त्वादिति भावः ॥

[2]**इत्यादीति** ॥ अत्र शिष्टानां यमुनाचामुण्डातिमुक्तकशब्दनां जउँणा चाउँण्डा अइउँत्तअं इति प्राकृते सिद्धरूपाणि बोध्यानीति भावः ॥

[3]**सिद्धिर्लोकादिति ङस्येत्संज्ञेति** ॥ इदमुपलक्षणम्—अनुक्तमन्यशब्दानुशासनवत्, इति सूत्रस्य । अन्यथा लोके ङस्येत्संज्ञकत्वप्रसिद्ध्यभावेन यथाश्रुतमनुपपन्नं स्यात् । प्राकृतेऽस्मिन् लोकव्यवहारस्येव व्याकरणान्तरव्यवहारोऽप्यविरुद्धोऽनुमत इति भावः । पाणिनीये हि ङकारस्य 'लशक्वतद्धिते' (पा. सू. १-३-८) इत्यनेन इत्संज्ञा विहिता दृश्यत इति ॥

[4]**ऊत्व इत्यादि** ॥ एतत्सूत्रात्पूर्वं कुब्जकर्परकिलच्छागश्रृङ्खलकिरातैकादिकन्दुकमरकतमदकलपुंनागभागिनीचन्द्रिकाशीकरशब्दानां खुज्जो खप्परो खिलो छालो संकलं चिलाओ एगो लोगो गेंदुअं मरगअं मअगलो पुण्णामो भामिणी चंदिमा सीभरो (सीहरो) इति प्राकृतरूपसाधकानि 'खोऽपुष्पकुब्जकर्परकिले कोः' (प्रा. सू. १-३-१२) 'छागश्रृङ्खलकिरातेलकचाः' (प्रा. सू. १-२-१३) 'वैकादौ गः' (प्रा. सू. १-३-१४) 'खोः कन्दुकमरकतमदकले' (प्रा. सू. १-२-१५) 'पुंनागभागिनीचन्द्रिकासु मः' (प्रा. सू. १-२-१६) 'शीकरे तु भहौ' (प्रा. सू. १-१-१७) इतीमानि षट्सूत्राणि सूत्रपाठेऽधिकानि दृश्यन्ते । तत्र 'खोऽपुष्प' (प्रा. सू. १-३-१२) इत्यादिना कुब्जशब्दस्य पुष्पार्थकभिन्नस्य यः ककारस्तस्य खो विहितो दृश्यते । कुब्जशब्दश्च त्रिकाण्डशेषे अपामार्गपुष्पवाचकः वारिकण्टकाख्यपुष्पयाचकश्च गृहीतो दृश्यते । तथाऽत्रैव सूत्रे किलशब्दस्थाने मुद्रितत्रिविक्रमवृत्तिकोशे कीलेति पठितं दृश्यते । 'एकः आकर्षः लोकः असुगः तीर्थकरः उद्द्योतकरः श्रावकः अमुकः आकारः' इत्येकादिगणपठिताः शब्दा बोध्याः ॥

[5]**कवर्गस्येति** ॥ 'खोऽपुष्प' (प्रा. सू. १-३-१२) इत्यादिसूत्रात्कोरित्यनुवृत्त्या तस्य 'अणुदित्सवर्णस्य' (पा. सू. १-१-६९) इत्यादिपाणिनीयसूत्रपर्यालोचनया कवर्गस्येत्ययमर्थो लभ्यत इति भावः ॥

[1] सूहवो । ऊत्व एव, [2] सुहवो ॥

## निकषस्फटिकचिकुरे हः ॥ १-३-९ ॥

कोरेव । [3] णिहसो फलिहो चिहुरो ॥

## खघथधभाम् ॥ १-३-१० ॥

एषां हः स्यात् । ख, शाखा-[4] साहा । घ, मेघः-मेहो । थ, रथः-रहो । ध, मधु-महु । भ, शुभं-सुहं । [5] अस्तोरित्येव । मुख्यः—

---

[1] सूहवो इति ॥ सुभगशब्दे 'सुभगमुसले' (प्रा. सू. १-२-६४) इत्यनेन पाक्षिके उत ऊत्वे 'खघथधभाम्' (प्रा. सू. १-३-२०) इति भस्य हादेशे प्रकृतसूत्रेण घस्य वत्वे च सूहवो इति रूपम् । दुर्भगशब्दे तु 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि 'दुरो रलुकि तु' (प्रा. सू. १-२-६३) इत्युकारस्य पाक्षिके ऊत्वे पूर्ववत् भकारगकारयोः हकारवकारादेशयोः दूहवो इति रूपं बोध्यम् ॥

[2] सुहवो इति ॥ ऊत्वपक्ष एव प्रकृतसूत्रेण वकारादेशस्य विहिततया ऊत्वाभावपक्षे सुहओ इत्येव रूपमुचितमित्यत्रत्यं वकारघटितप्रत्युदाहरणं लेखकप्रमादायत्तमिति बोध्यम् ॥

[3] णिहसो फलिहो इति ॥ निकपशब्दे 'आदेस्तु' (प्रा. सू. १-३-५३) इति नस्य पाक्षिके णत्वे 'शोस्सल्' (प्रा. सू. १-३-८७) इति षकारस्य सत्वे प्रकृतसूत्रेण कस्य हकारादेशे च णिहसो इति रूपम् । स्फटिकशब्दे टकारस्य 'स्फटिके' (प्रा. सू. १-३-२५) इति सूत्रेण लत्वे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सकारस्य लुकि प्रकृतसूत्रेण ककारस्य हत्वे च फलिहो इति रूपम् ॥

[4] साहेत्यादि ॥ शाखाशुभशब्दयोः शकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वे प्रकृतसूत्रेण खकारस्य हकारादेशे साहा सुहं इति रूपं बोध्यम् ॥

[5] अस्तोरित्याद्येवेति ॥ अत्र सूत्रे अस्तोः अखोः अचः इति पदत्रयमधिकृतं वेदितव्यमित्यर्थः । ततश्च असंयुक्तस्य अनादेः अचः परस्येत्यर्थोऽत्र लभ्यत इति । तेन मुख्य इत्यत्र खस्य संयुक्तत्वात् स्कन्धशब्दे आदेः खादेशानन्तरं तस्यादित्वात् शंखशब्दे खस्य अचः परत्वाभावाच्च न प्रकृतसूत्रेण हकारादेश इति सिद्धम् ॥

[1] मुक्खो। स्कन्धः- [2] खंधो। शङ्खः- [3] संखो॥

## [4] टोर्बडिशादौ ॥ १-३-११ ॥

बडिशं बळिसं। वेत्येव। [5] बडिशगुडनडचपेटापीडनाडीवेणुदाडि-[6]मेत्यादि। चपेटा[7]-चविडा चविला। अत्र 'चपेटाकेसरदेवर-सैन्यवेदनास्वेचस्त्वित्' (प्रा. सू. १-२-९४) इत्येचो वैकल्पिकमित्वम्॥

---

[1] मुक्खो इति॥ मुख्यशब्दे यकारस्य 'मनयाम्' (प्रा. सू. १-४ ७९) इति लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना खकारस्य द्वित्वे पूर्वस्य 'पूर्व-मुपरि' (प्रा. सू. १-४-९४) इति तद्वर्गीयप्रथमवर्णादेशे च मुक्खो इति रूपम्॥

[2] खंधो इति॥ स्कन्धशब्दे स्क् इत्यस्य 'ष्कस्कोर्नाम्नि' (प्रा. सू. १-४-६) इति खकारादेशः॥

[3] संखो इति॥ शंखशब्दे 'शोस्सल्' (प्रा. सू १-३-८७) इति शकारस्य सकारादेशः॥

[4] टोरित्यादि॥ अत्र सूत्रे 'ढः पृथकि तु' (प्रा. सू. १-३-२१) इति सूत्राद्वार्थकस्तुशब्दोऽनुवर्तते। अत्र 'अनुक्तमन्य' (प्रा. सू. १-१-२) इत्यादिपरिभाषया पाणिनीयप्रक्रियादरणस्य अनुमतत्वेन 'अणुदित्' (पा. सू. १-१-६९) इत्यादिपाणिनीयानुसारादत्रत्यस्य टोरित्यस्य टवर्गस्येत्यर्थसंपत्त्या बडिशादौ टवर्गस्य लत्वं वा स्यादित्येतत्सूत्रार्थो निष्पद्यते। एतत्सूत्रात्पूर्वं पृथक्खचितपिशाचजटिलशब्दानां पिढं खसिओ पिसलो झडिलो इति प्राकृतरूपसाधकानि 'ढः पृथकि तु' (प्रा. सू. १-३-२१) 'चोः खचितपिशाचयोस्सल्लौ' (प्रा. सू. १-३-२२) 'झो जटिले' (प्रा. सू. १-३-२३) इति त्रीणि सूत्राणि मूलपाठेऽधिकानि दृश्यन्ते। पृथक्शब्दे तु थकारस्य हेमचन्द्रेण धकारो विहितो दृश्यते॥

[5] बडिशेत्यादि॥ अत्र गणपाठे वाटीशब्दोऽधिकः पठितः॥

[6] इत्यादीति॥ आदिशब्देन णिजन्तस्य पाटेर्ग्रहणम्॥

[7] चविडा चविलेति॥ चपेटाशब्दे टकारस्य प्रकृतसूत्रेण पाक्षिके लत्वे 'चपेटाकेसर' (प्रा. सू. १-२-९४) इत्यादीना एकारस्य पाक्षिक इत्वे पस्य 'पो वः (प्रा. सू. १-३-५५) इति वत्वे चाविला इति, इत्वाभावपक्षे चवेला इति, लत्वाभावपक्षे 'टो डः' (प्रा. सू. १-३-३१) इति टस्य डत्वे इत्वतदभावपक्षयोः चवेडा चविडा इति च रूपमिति रूपचतुष्टयं बोध्यम्। बडिशादिगणपठितानां गुडनडापीडनाडीवेणुदाडिमपाटयतिशब्दानां प्राकृते 'गुडं गुलं, नडं नलं' आमेलो आमेडो, नाली नाडी, वेलू

## स्फटिके ॥ १-३-१२ ॥

[1]नित्यं लः । [2]फलिहो ॥

## [3]ठः ॥ १-३-१३ ॥

[4]ढः स्यात् । मठः-मढो । अस्तोरित्याद्यधिकारात् कोष्ठं कोट्ठं [5]इत्यादि ॥

## [6]लल्डोऽनुडुगे ॥ १-३-१४ ॥

---

वेणू, दालिमं दाडिमं, फालेइ फाडेइ' इति टवर्गस्य लत्ववैकल्पिकत्वेन प्रत्येकं रूपद्वयं बोध्यम् ॥

[1] नित्यं ल इति ॥ स्फटिकशब्दं बडिशादावपरिपठ्य 'स्फटिके' इति पृथक्सूत्रारम्भसामर्थ्यादेव नित्यमित्ययमर्थो लभ्यत इति भावः । पूर्वसूत्रात् टोः लः इति पदद्वयानुवृत्त्या स्फटिकशब्दे टवर्गस्य नित्यं लकारादेशो भवतीति सूत्रार्थः ॥

[2] फलिहो इति ॥ स्फटिकशब्दे सकारस्य 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सकारस्य लुकि प्रकृतसूत्रेण टकारस्य लत्वे 'निकषस्फटिकचिकुरे हः (प्रा. सू. १-३-१९) इति ककारस्य हकारादेशे च फलिहो इति रूपम् ॥

[3] ठ इति ॥ एतत्सूत्रात्पूर्वं अङ्कोड(ठ)कैटभशकटसटाशब्दानां अङ्कोल्लं केडवो सअढो सढा इति प्राकृतरूपसाधकानि 'लरङ्कोडे(ठे)' (प्रा. सू. १-३-२६) 'ढः कैटभशकटसटे' (प्रा. सू. १-३-२७) इति सूत्रद्वयं सूत्रपाठेऽधिकं दृश्यते ॥

[4] ढः स्यादिति ॥ अस्तोरखोरच इत्यधिक्रियते । पूर्वसूत्राड्ढ इति चानुवर्तते । ततश्च असंयुक्तस्यानादेरचः परस्य ठकारस्य ढकारो भवतीति सूत्रार्थः ॥

[5] इत्यादीति ॥ सूत्रेऽस्मिन् अखोरित्यधिकारात्तस्य चानादेरित्यर्थात् तिष्ठतेः ठादेशे च तस्य ठकारस्यादितया न ढकारादेशः । तथाऽत्र अच इत्यनुवृत्त्या अचः परस्येति तदर्थात् कंठो इत्यत्र ठकारस्य अनुस्वारात् परत्वेन तस्य प्रत्याहारसूत्राघटकतयाऽच्त्वाभावात्, तस्य वर्गीयपञ्चमाक्षरादेशेऽपि तस्याच्त्वाभावात् ततः परस्य ठकारस्य न ढकार इति भावः ।

[6] लल्ड इति ॥ एतत्सूत्रात्पूर्वं पिठरशब्दे ठकारस्य हत्वविधानेन रेफस्य च ढत्वविधानेन प्राकृते पिहढो इति रूपसाधकं 'पिठरे हस्तु रश्च ढः' (प्रा. सू. १-३-२९) इत्येकं सूत्रं सूत्रपाठेऽधिकं दृश्यते । सूत्रेऽस्मिन् लल् डः अनुडुगे इति पदच्छेदः । अनुडुग इत्यत्र गशब्दो 'गो गणपरः' (प्रा. सू. १-१-१०) इति गणार्थे सङ्केतितः । अस्तोरखोरच

डस्य लस्स्यात्। गरुडः-[1] गरुलो। [2]अधिकारान्नेह, कुड्यम्-कुड्डुम। अनुड्वगे किम्? उड्डुः-उड्डू। गौडनिबिड[3] नाडीपीडितनीड॥

## टो डः॥ १-३-१५॥

भटः-भडो। [4]अधिकारान्नेह। खट्वा-खट्टा। टङ्कः-घण्टा॥

## (वा) [5]अटतेर्नेति वाच्यम्।

अटति-अटइ॥

## [6]प्रतिगेऽप्रतीपगे॥ १-३-१६॥

---

इत्यधिक्रियते। ललो लित्वात् 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इति परिभाषया नित्यमिति लभ्यते। ततश्च उड्वादिभिन्नवृत्तिडकारस्य असंयुक्तस्यानादेरचः परस्य नित्यं लकारादेश इति सूत्रार्थः॥

[1] गरुलो इति॥ गरुडशब्दे हरिद्रादिपाठाद्रेफस्यापि लत्वे गलुलो इति रूपमिति चन्द्रिकायामुक्तम्॥

[2] अधिकारादिति॥ अस्तोरखोरच इति पदत्रयमत्राधिक्रियत इति भावः। ततश्च संयुक्तत्वात् कुड्यमित्यत्र डस्य न लकारः, आदित्वात् डमरुकशब्दे न डकारस्य लकारः, अचः परत्वाभावाच्च तुंडशब्दे न डकारस्य लकार इति कुड्डं डमरुओ तुंडो इत्येव प्राकृते रूपमिति सिध्यति॥

[3] नाडीति॥ मुद्रितत्रिविक्रमवृत्तौ तु नाडिशब्दस्थाने तटीशब्द उड्वादौ परिगणितो दृश्यते॥

[4] अधिकारादिति॥ अस्तोः अखोः अचः इति पदत्रयस्याधिकारादिति भावः। ततश्च खट्वाशब्दे संयुक्तत्वात्, टङ्कशब्दे आदित्वात् घण्टाशब्दे च अचः परत्वाभावान्नतत्रत्यटकारस्य प्रकृतसूत्रेण डकारादेशप्रवृत्तिरिति बोध्यम्॥

[5] अटतेर्नेतीति॥ त्रिविक्रमवृत्तौ त्वत्र 'क्वचिन्न भवति' इति वाक्येनायमर्थः संगृहीतः॥

[6] प्रतिगेऽप्रतीपग इति॥ एतत्सूत्रात्पूर्वं वेतसशब्दे तकारस्य डकारादेशविधानेन वेडिसो इति प्राकृतरूपसाधकं 'वेतस इति तोः' इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते। तस्मादत्र सूत्रे पूर्वसूत्रात् तोरित्यनुवृत्त्या 'टो डः' (प्रा. सू. १-३-३१) इत्यतो ड इत्यनुवृत्त्या गशब्दस्य गणसंज्ञकत्वेन च प्रतीपादिगणघटकभिन्नप्रत्यादिशब्दघटकतवर्गस्य ड इत्येतत्सूत्रार्थोऽवसेयः॥

प्रत्यादौ तो डः स्यात्। प्रतिपन्नम्–[1]पडिवण्णम्। प्रतिपताकाव्याकृत [2] इत्यादि। अप्रतीपग इत्येव। प्रतीपं–पईवम्। प्रतिज्ञासम्प्रतिप्रतिष्ठा-प्रतिष्ठानम्॥

दंशदहोः ॥ १–३–१७॥

[3] दस्य डः स्यात्। दशति–दसइ। दहति–डअइ॥

दम्भदरदर्भगदर्भदष्टदशनदग्धदाहदोहददोला-दण्डकदने तु ॥ १–३–१८॥

दम्भः–डम्भो [4] इत्यादि॥

[5] हः कातरककुदवितस्ति[6]मातुलुङ्गे ॥ १–३–१९॥

---

[1] पडिवण्णमिति ॥ प्रतिपन्नशब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि 'पो वः' (प्रा. सू. १-३-५५) इति पकारस्य वकारादेशे प्रकृतसूत्रेण तकारस्य डकारादेशे नकारस्य णत्वे च पडिवण्णमिति रूपं बोध्यम्॥

[2] इत्यादीति ॥ आदिशब्देन प्रभृतिमृतकभिण्डिवालप्राभृतविभीतककन्दलिकाहरीतक्यादीनां ग्रहणम्। पहुडि मडओ भिण्डिवालो पाहुडं वहेडओ कण्डलिआ हरडई, इति प्रभृत्यादीनां च प्राकृते सिद्धरूपाणि॥

[3] दस्येति ॥ पूर्वसूत्रात्तोरित्यनुवृत्त्या लब्धमेतत्। दम्भादिग्रहणसामर्थ्यादत्र अखोरित्यस्य नाधिकारः। दोहदशब्दे दकारद्वयसत्त्वेऽपि दम्भादिसाहचर्यादाद्यस्यैवेति त्रिविक्रमदेवाभिमतम्। तथा दरशब्दश्चात्र भयार्थक एव गृह्यत इति त्रिविक्रमदेवाभिमतत्वेन ईषदर्थकस्य दरशब्दस्य दरो इत्येव रूपमिति बोध्यम्॥

[4] इत्यादीति ॥ डरो दरो, डब्भो दब्भो, गड्डहो गद्दहो, डट्ठो दट्ठो, डसणं दसणं, डड्ढो दड्ढो, डाहो दाहो, डोहअं दोहअं, डोला दोला, डंडो दंडो, कडणं कअणं, इत्यत्रत्यदरादिशब्दानां प्रत्येकं द्वे द्वे रूपे दस्य डकारादेशविकल्पाद्भवतः॥

[5] ह इत्यादि ॥ एतत्सूत्रात्पूर्वं तुच्छशब्दे विकल्पेन तकारस्य चछकारयोर्विधानेन चुच्छं छुच्छं इति रूपसाधकं 'तुच्छे चच्छौ' (प्रा. सू. १-३-३६) इत्येकं सूत्रं, तथा त्रसरवृन्ततूबरतगरशब्दानां तवर्गस्य टत्वविधानेन टसरो वेण्टं टूवरो टगरो इति प्राकृतरूपसाधकं 'टल् त्रसरवृन्ततूबरतगरे' (प्रा. सू. १-३-३७) इत्यपरं च सूत्रमधिकं सूत्रपाठे दृश्यते॥

[6] मातुलुङ्ग इति ॥ मातुलुङ्गेष्विति बहुवचनान्तपाठस्त्रिविक्रमवृत्तावादृतः॥

कातरः-काहरो [1] इत्यादि ॥

## दोहदप्रदीपिशातवाहनातस्याम् ॥ १-३-२० ॥

तोर्लो [2] नित्यं स्यात् । दोहदं-दोहळम् ॥

## रल् सप्तत्यादौ ॥ १-३-२१ ॥

[3] लित्त्वान्नित्यम् । सप्ततिः-[4]सत्तरी ॥ [5] एकादशसप्तदशद्वादश-पञ्चदशाष्टादशत्रयोदश[6]गद्गद ॥

## [7] ढः पृथिव्यौषधनिशीथे ॥ १-३-२२ ॥

---

[1] इत्यादीति ॥ अत्रावशिष्टानां ककुदवितस्तिमातुलुङ्गशब्दानां कउहं विहत्थी माहुलुङ्गं इति प्राकृतरूपाणि बोध्यानि ॥

[2] नित्यमिति ॥ पृथक्सूत्रकरणसामर्थ्यादेतत्सूत्रविहितं नित्यमिति भावः ॥ अत्र प्रपूर्वकस्य दीप्यतेः शातवाहनातसीशब्दयोश्च पलीवेइ सालाहणो अलसी इति प्राकृते रूपाणि बोध्यानि ॥

[3] नित्यमिति ॥ 'प्रायो लिति न विकल्पः (प्रा. सू. १-१-१४) इति परिभाषया रलो लित्त्वान्नित्यत्वमिति भावः । पूर्वसूत्रात्तोरित्यनुवृत्त्या सप्तत्यादौ तवर्गस्येदं रत्वमिति बोध्यम् । अस्तोरित्यधिकाराच्च संयुक्तस्य तस्य न रत्वमित्यपि बोध्यम् ॥

[4] सत्तरीति ॥ सप्ततिशब्दे पकारस्य 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना पकारस्य लुकि 'शेषादेशस्य (प्रा. सू. १-४-८६) इत्यादिना शिष्टस्य तकारस्य द्वित्वे प्रकृतसूत्रेणान्त्यस्य तकारस्य रेफादेशे च सत्तरीति रूपं बोध्यम् ॥

[5] एकादशेत्यादि ॥ एआरह सत्तरह बारह पण्णरह अट्ठारह तेरह गग्गर इत्यत्यानां एकादशसप्तदशद्वादशपञ्चदशाष्टादशत्रयोदशगद्गदशब्दानां प्राकृते सिद्ध-रूपाणि बोध्यानि ॥

[6] गद्गदेति ॥ इति सप्तत्यादिरिति शेषः ॥

[7] ढ इत्यादि ॥ एतत्सूत्रात्पूर्वं कदलीकदर्थितपीतदीप्यतीनां तवर्गस्य आदेश-विधानेन करली कवट्टिओ पीवलं डिप्पइ इति प्राकृते रूपसाधकानि 'अद्रुमे कदल्याम्' (प्रा. सू. १-३-४३) 'कदर्थिते वोर्वः' (प्रा. सू. १-३-४४) 'पीते ले वा' (प्रा. सू. १-३-४५) 'डो दीपि' (प्रा. सू. १-३-४६) इति चत्वारि सूत्राण्यधिकानि सूत्र-पाठे दृश्यन्ते ॥

[1] पुढवी । ढश्चतुर्थः । [2] पक्षे पुहवी ॥

## [3] प्रथमशिथिलमेथिशिथिल (र) निषधेषु ॥ १–३–२३ ॥

ढत्वं नित्यं स्यात् । [4] पढमम् ॥

## [5] णर्दिना रुदिते ॥ १–३–२४ ॥

दिना सह तोर्णः स्यात् । रित्त्वाद्दित्वम् । रुण्णम् ॥

## [6] नः ॥ १–३–२५ ॥

[7] नस्य णः स्यात् । कनकं— [8] कणअं ॥

---

[1] **पुढवीति** ॥ पूर्ववदत्रापि तोरित्यनुवृत्त्या पृथिव्यादिषु तवर्गस्य ढकारादेशः स्यादित्येतत्सूत्रार्थात् पृथिवीशब्दगतथकारस्य ढत्वे ऋकारस्य 'ऋतुगे' (प्रा. सू. १-२-८१) इति सूत्रेण उत्वे पुढवीति रूपम् ॥

[2] **पक्ष इति** ॥ 'पीते ले वा' (प्रा. सू. १-३-४५) इति सूत्रादत्र वेत्यनुवृत्तेः ढत्वस्यास्य वैकल्पिकतया तदभावपक्षे ढकारस्य 'खघथधभाम्' (प्रा. सू. १-३-२०) इति हकारादेशे पूर्ववद्दकारस्योत्वे पुहवीत्यपि रूपान्तरम् । एवं औषधनिशीथशब्दयोः ओसढं ओसहं, णिसीढो णिसीहो, इति प्रत्येकं रूपद्वयं बोध्यम् ॥

[3] **नित्यमिति** ॥ पृथक्सूत्रारम्भादिति भावः ॥

[4] **पढममिति** ॥ प्रथमशब्दे रेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि प्रकृतसूत्रेण थस्य ढत्वे च पढममिति रूपम् । एवमत्रोपात्तानां शिथिलमेथिशिथिरनिषधशब्दानां सिढिलं मेढी सिढिलो णिसढो इति प्राकृते सिद्धरूपाणि बोध्यानि ॥

[5] **णर्दिनेति** ॥ देवनागरलिपिमुद्रितत्रिविक्रमवृत्तिचन्द्रिकयोस्तु 'र्णो दिना रुदिते' इति सूत्रं पठितं दृश्यते । तत्र र्ण इत्यादेशे आदिभूतस्य रेफस्य इत्संज्ञाविधायकसूत्रं एतद्वाल्मीकीये सूत्रे पाणिनीये चादृष्टमिति कथं तत्रत्यरेफस्येत्संज्ञा स्यादिति चिन्तनीयम् ॥

[6] **न इति** ॥ एतत्सूत्रात्पूर्वं अतिमुक्तकगर्भितशब्दयोस्तवर्गस्य णत्वविधानेन अणिउँतअं गब्भिणो इति प्राकृतरूपसाधकं 'णो वाऽतिमुक्तके' (प्रा. सू. १-३-५०) 'गर्भिते' (प्रा. सू. १-३-५१) इति सूत्रद्वयमधिकं सूत्रपाठ उपलभ्यते ॥

[7] **नस्य ण इति** ॥ अत्र अस्तोः अखोः अचः इति यथाक्रमं असंयुक्तस्य अनादेः अचः परस्येत्यर्थकं पदत्रयमधिक्रियत इति बोध्यम् ॥

[8] **कणअमिति** ॥ कनकशब्दान्त्यककारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुग्बोध्यः ॥

## आदेस्तु ॥ १-३-२६ ॥

**नदी-णई नई । [1] अस्तोरित्येव । न्यायः-[2] नाओ ॥**

## [3] पो वः ॥ १-३-२७ ॥

**स्पष्टम् । चापः-चावो । नृपः-[4] णिवो । [5] नेह, विप्रः पतिः शम्पा ॥**

## (वा) [6] लोपवत्त्वयोः श्रुतिसुखतो व्यवस्था ॥

---

[1] **अस्तोरिति॥** 'संयुक्तः स्तुः' (प्रा. सू. १-१-१२) इति स्तुशब्दस्य संयुक्त-संज्ञकतया असंयुक्तस्येत्यर्थो बोध्यः ॥

[2] **नाओ इति ॥** न्यायशब्दे प्रथमयकारस्य 'मनयाम्' (प्रा. सू. १-४-७९) इति लुकि शिष्टस्य नकारस्यादित्वादित्वाभावे द्वितीयस्य यकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि च नाओ इति रूपं बोध्यम् ॥

[3] **पो व इति ॥** एतत्सूत्रात्पूर्वं नापितशब्दे नस्य वैकल्पिकतया ण्हादेशविधानेन ण्हाविओ णाविओ इति प्राकृते रूपद्वयसाधकं 'नापिते ण्हः' (प्रा. सू. १-३-५४) इत्येकं सूत्रमधिकं त्रिविक्रमदेवानुमते सूत्रपाठे दृश्यते। चन्द्रिकायां तु 'नापिते हः' (प्रा. सू. १-३-५४) इत्येतत्सूत्रपाठ उपात्तो दृश्यते। तत्र च पूर्वतो 'णः तु' इति पदद्वयानुवृत्तिमभिप्रेत्य णकारहकारयोर्वैकल्पिकतया विधानं चाभिमत्य णाविओ हाविओ इत्युदाहृतं दृश्यते ॥

[4] **णिवो इति ॥** नृपशब्दे नकारस्य 'आदेस्तु' (प्रा. सू. १-३-२३) इति णत्वे ऋकारस्य 'इत् कृपगे' (प्रा. सू. १-२-७६) इति इकारादेशे प्रकृतसूत्रेण पकारस्य वकारादेशे च णिओ इति रूपम् ॥

[5] **नेहेत्यादि ॥** अत्र सूत्रे अस्तोरखोरच इति पदत्रयस्याप्यधिकारेण असंयुक्तस्य अनादेरचः परस्य पकारस्य वकारादेशो भवतीति प्रकृतसूत्रार्थसंपत्त्या विप्रशब्दे संयुक्तत्वात्, पतिशब्दे आदिभूतत्वात्, शंपाशब्दे अचः परत्वाभावाच्च पकारस्य न वकारादेश इत्यर्थः ॥

[6] **लोपवत्त्वयोरिति ॥** लोपवत्वयोरिति शुद्धपाठेनात्र भाव्यम् । ततश्च 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना पकारलुकः 'पो वः' (प्रा. सू. १-३-५५) इति वत्वस्य च प्राप्तौ यस्य प्रवृत्तौ शब्दश्रवणे सुखमुत्पद्यते तस्य प्रवृत्तिरिति तदर्थः। अत एव रिपुरित्यादौ पकारस्य लुकि रिऊ इति शब्दश्रवणे सुखमुत्पद्यत इति त्रिविक्रमदेवेनोक्तम् ॥

## [1] फस्य [2] हभौ वा ॥ १-३-२८॥

[3] रेफे भ एव । रेभो ॥

## (वा) मुक्ताफलादौ ह एव ।

मोत्ताहळं ॥

[4] अधिकारान्नेह । पुप्पं [5] पुप्फं इत्यादि ॥

---

[1] फस्येत्यादि ॥ एतत्सूत्रात्पूर्वं पाटयतिपरिघपरिखापरुषपनसपारिभद्रनीपापीडपापर्धिप्रभूतशब्देषु पकारस्यादेशविधानेन फाडइ फलिहो फलिहा फरुसो फणसो फालिहद्दो नीमो आमेलो पारद्धी वहुत्तं इति प्राकृतरूपसाधकानि 'फः पाटिपरिघपरिखापरुषपनसपारिभद्रेषु' (प्रा. सू. १-३-५६) 'नीपापीडे मो वा' (प्रा. सू. १-३-५७) 'रल् पापर्धौ' (प्रा. सू. १-३-५८) 'प्रभूते वः' (प्रा. सू. १-३-५९) इति चत्वारि सूत्राण्यधिकानि सूत्रपाठे दृश्यन्ते ॥

[2] हभौ वेति ॥ अत्र 'भहौ वा' इति त्रिविक्रमवृत्तौ पाठो दृश्यते ॥

[3] रेफे भ एवेत्यादि ॥ 'फस्य हभौ वा' (प्रा. सू. १-३-६०) इत्यस्मिन् सूत्रे वेति न सर्वत्र विकल्पाभिप्रायम्, किं तु क्वचित् हकारः, क्वचिद्भकारः, क्वचिदुभयमपि, क्वचिदुभयमपि नेति व्यवस्थितविभाषाश्रयणेन यथाप्रयोगदर्शनमवसेयमित्याशयः । ततश्च रेफशब्दे फकारस्य भकारादेशस्यैव प्रवृत्त्या रेभो इत्येकमेव रूपम् । तथा मुक्ताफलशब्दे फकारस्य हकारादेशस्यैव प्रवृत्त्या मोत्ताहलमित्येकमेव रूपम् । सफलमित्यत्र तु फस्य हभयोरुभयोरपि प्रवृत्त्या सहलं सभलमित्युभयमपि रूपमिष्टम् । कृष्णफणीत्यत्र तूभयस्याप्यप्रवृत्त्या कसणफणीत्येव रूपमित्येवं विकल्पव्यवस्था बोध्या। किंचात्र सूत्रे अस्तोरखोरचः इति पदत्रयस्याप्यधिकारात् तस्य च क्रमेण असंयुक्तस्य अनादेरचः परस्येत्यर्थात् गुल्फमित्यत्र संयुक्तत्वात्, फणीत्यत्रादिभूतत्वात्, गुम्फति इत्यत्र अचः परत्वाभावाच्च न फकाराणां हभयोरादेशयोः प्रवृत्तिरिति बोध्यम् ॥

[4] अधिकारान्नेहेति ॥ अस्तोरखोरच इति पदत्रयस्याप्यधिकारात् संयुक्तस्यादेरचोऽनुत्तरस्य च फस्य नादेशाविति भावः ॥

[5] पुप्फमिति ॥ पुष्पशब्दे ष्पस्य 'ष्पस्पोः फः' (प्रा. सू. १-४-४४) इति फत्वे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे च पुप्फमिति रूपम् । संस्कृतरूपप्रकृतिगतवर्णानामेवात्र शास्त्रे आदेशविधानौचित्यात् 'ष्पस्पोः फः' (प्रा. सू.

## बो वः ॥ १-३-२९ ॥

अबला-अवळा । [1] नेह, कर्बुरः-कब्बुरो इत्यादि ॥

## [2] मन्मथे ॥ १-३-३० ॥

[3] मस्य वः स्यात् । [4] वम्महो ॥

## [5] यो जर् तीयानीयोत्तरीय[6]कृत्येषु ॥ १-३-३१ ॥

१-४-४४) इति फत्वविधानस्यानर्थक्याच्च पुप्फमित्यत्र फादेशानन्तरं तस्यादेशापादनं दुश्शकमिति गुल्फं गुप्फमिति प्रत्युदाहर्तुमुचितमिति भाति ॥

[1] नेहेति ॥ पूर्ववदत्रापि अस्तोरित्यधिकारेण कर्बुरशब्दे बकारस्य संयुक्तत्वात्तस्य न वकार इत्यर्थः । एवं अखोरचः इति पदद्वयस्याप्यत्राधिकारात् बकशब्दे आदिभूतत्वात्, अंबुशब्दे चाचः परत्वाभावाच्च तत्रत्यबकारयोर्न वकारादेश इति बोध्यम् ॥

[2] मन्मथ इति ॥ एतत्सूत्रात्पूर्वं कबन्धबिसिनीकैटभाभिमन्युशब्देषु पवर्गीयस्य वकाराद्यादेशविधानेन कबँन्धो भिसिणी केडवो अहिमन्नू इति रूपसाधकानि 'ङ्वयौ कबन्धे' (प्रा. सू. १-३-६२) 'बिसिन्यां भः' (प्रा. सू. १-३-६३) 'वो भस्य कैटभे' (प्रा. सू. १-३-६४) 'त्वभिमन्यौ मः' (प्रा. सू. १-३-६५) इति चत्वारि सूत्राण्यधिकानि सूत्रपाठे दृश्यन्ते ॥

[3] मस्य वस्स्यादिति ॥ नन्वत्र मन्मथशब्दे द्वौ मकारौ दृश्येते, एक आदिभूतः, अपरश्च संयुक्तः । तयोः कतरस्य वत्वं विधीयते । अखोरित्यधिकारान्नाद्यस्यादेशो भवितुमर्हति । अस्तोरित्यधिकाराच्च संयुक्तस्याप्यादेशो न भवितुमर्हति । सूत्रारम्भसामर्थ्याश्रयणे च विनिगमकाभावाद्युगपत्पर्यायेण वा द्वयोरपि स्यादिति चेन्न । 'न्मः' (प्रा. सू. १-४-४८) इति सूत्रेण न्म इत्यस्य मकारादेशविधानात् अगत्या सूत्रारम्भसामर्थ्याश्रयणाच्च अत्र अखोरित्यस्याधिकाराभावमुररीकृत्य आदेर्मकारस्यैव वकारादेशोऽभिमन्तुं युक्त इत्यवसीयते । अत एव त्रिविक्रमवृत्तौ 'आदेर्मस्य वत्वम्' इत्युक्तं दृश्यते ॥

[4] वंमहो इति ॥ मन्मथशब्दे 'न्मः' (प्रा. सू. १.४-४८) इत्यनेन न्मस्य मत्वे तस्य द्वित्वे वम्महो इत्येवात्रोदाहर्तुमुचितम् ॥

[5] यो जरित्यादि ॥ एतत्सूत्रात्पूर्वं विषमशब्दस्य विसढो विसमो इति रूपद्वयसाधकं 'तु ढो विषमे' (प्रा. सू. १-३-६७) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[6] कृत्येष्विति ॥ अस्य कृत्यसंज्ञकप्रत्यय इत्यर्थाङ्गीकारे तेनैवानीयर्प्रत्ययस्यापि ग्रहणसंभवादत्र सूत्रे पृथगनीयग्रहणस्य वैयर्थ्यापातात् तव्यदादिष्वतिप्रसङ्गाच्च

एषु यस्य जः [1] स्याद्वा । रित्त्वाद्द्वित्वम् । तीय, तृतीयं- [2]तइज्जं अनीयर्, करणीयं करणिज्जं । उत्तरीयं उत्तरिज्जं । मेयं मेज्जं । [3]पक्षे लुक्, तईअं ॥

## [4]यष्ट्यां लल् ॥ १-३-३२ ॥

लित्त्वाद्द्वित्वम् । [5]लट्ठी ॥

## [6]अर्थपरे तो युष्मदि ॥ १-३-३३ ॥

युष्मच्छब्दे यकारस्य तः स्यात् । युष्मदीयं । [7]तुम्हकेरम् ॥

---

कृत्संज्ञकप्रत्ययगतयकार इत्यर्थस्यैवोचितत्वेन तत्र च कृद्येष्वित्येव सूत्रे पाठ उचित इति बोध्यम् ॥

[1]स्याद्वेति ॥ पूर्वसूत्रात्तुशब्दानुवृत्त्याऽयमर्थो लभ्यत इति बोध्यम् ॥

[2]तइज्जमिति ॥ तृतीयशब्दे ऋकारस्य 'ऋतोऽत्' (प्रा. सू. १-२-७६) इत्यत्त्वे द्वितीयतकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि प्रकृतसूत्रेण द्विरुक्तजकारादेशे पूर्वस्य 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे च तइज्जमिति रूपम् । एवं करणिज्जमित्यत्रापि बोध्यम् ॥

[3]पक्षे लुगिति ॥ जादेशस्यास्य वैकल्पिकत्वादेतदभावपक्षे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना जकारस्यापि लुगिति भावः ॥

[4]यष्ट्यां लल्लिति ॥ एतत्सूत्रात्पूर्वं विषमयशब्दस्य अकान्त्यर्थकच्छायाशब्दस्य च विसमओ (वच्छस्स) छाहा इति प्राकृतरूपसाधकं 'इन्मयटि' (प्रा. सू. १-३-६९) 'छायायां होऽकान्तौ' (प्रा. सू. १-३-७०) इति सूत्रद्वयं सूत्रपाठेऽधिकं दृश्यते ॥

[5]लट्ठीति॥ यष्टिशब्दे ष्ट इत्यस्य 'ष्टः' (प्रा. सू. १-४-१४) इति ठत्वे द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे प्रकृतसूत्रेण यस्य लत्वे च लट्ठीति रूपम् ॥

[6]अर्थपर इत्यादि ॥ एतत्सूत्रात्पूर्वं कतिपयशब्दे यकारस्य पर्यायेण वत्व-हत्वयोर्विधानेन कइववो कइवाहो इति रूपद्वयसाधकं 'कतिपये वहशौ' (प्रा. सू. १-३-७२) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते । कतिपयशब्देऽस्मिन् यकारस्य अनुपद-निर्दिष्टसूत्रेण वत्वहत्वान्यतरादेशनैयत्येन मुद्रितत्रिविक्रमवृत्तिचन्द्रिकयोर्दृश्यमानं लुप्तयकारकं कइवओ इत्युदाहरणं लेखकप्रमादायातमिति भाति ॥

[7]तुम्हकेरमिति ॥ युष्मच्छब्दादिदमर्थे विहितस्य छप्रत्ययस्य 'केर इदमर्थे' (प्रा. सू. २-१-८) इति केरादेशे 'श्मष्म' (प्रा. सू. १-४-६७) इत्यादिना ष्मस्य म्हादेशे

[1] अर्थपर एव, जुम्हसद्दो ॥

[2] आदेर्जः ॥ १–३–३४ ॥

यशः-जसो । यवः–जवो ॥

[3] हरिद्रादौ ॥ १–३–३५ ॥

रस्य ळस्स्यात् । हळद्दी । हरिद्राच्छाया (प्रा. सू. २-२-३९) [4] इतीत्वम् । 'मूषिकविभीतक' (प्रा. सू. १-२-४३) [5] इत्यत्वम् । [6] अङ्गारच-रणयुधिष्ठिरसुकुमारसंस्कारमुखरवरुणकरुणदरिद्रपरिखापरिघमत्सरसंव-त्सराः ॥

---

'दैवगेऽखौ' (प्रा. सू. १-४-९२) इति कस्य पाक्षिकद्वित्वे प्रकृतसूत्रेण यकारस्य तकारादेशे च तुम्हक्केरमिति रूपम् ॥

[1] अर्थपर एवेति ॥ यदा युष्मच्छब्दानुपूर्वी विहाय युष्मच्छब्दार्थबोधनाय युष्मच्छब्दः प्रयुज्यते तदा तादृशयुष्मच्छब्दसम्बन्धिन एव यकारस्य तकार इत्यर्थः । तेन युष्मच्छब्द इत्यत्र युष्मदिति शब्दानुपूर्व्या एव बोधनेनार्थपरत्वाभावात्तद्गतयकारस्य न प्रकृतसूत्रेण तकारः, किन्तु 'आदेर्जः' (प्रा. सू. १-३-७४) इति जकारादेशेन प्राकृते जुम्हसद्दो इत्येव रूपं बोध्यम् ॥

[2] आदेरिति ॥ अत्र बहुलाधिकारात् सोपसर्गस्यानादेरपि जकारः । यथा—संयोगः–संजोओ । संयमः–संजमो, इत्यादि । तथा बहुलाधिकारादेव क्वचिन्न भवत्यपि । यथा—प्रयोगः–पओओ, इति वृत्तिकारत्रिविक्रमदेवेनोक्तम् ॥

[3] हरिद्रादाविति ॥ एतत्सूत्रात्पूर्वं बृहस्पतिपर्याणजठरवठरनिष्ठुरशब्दानां भयप्पई बहप्पई, पडायाणं पल्लाणं, जढलं जढरं, वढलो वढरो, निट्ठुलो निट्ठुरो, इति रूपसाधकं 'भ्यौ बृहस्पतौ तु बहोः' (प्रा. सू. १-३-७५) 'रो डा पर्याणे' (प्रा. सू. १-३-७६) 'लो जठरवठरनिष्ठुरे' (प्रा. सू. १-३-७७) इति सूत्रत्रयमधिकं सूत्रपाठे दृश्यते ॥

[4] इतीत्वमिति ॥ हरिद्राच्छायाशब्दाभ्यां ङीब्वा भवतीति तत्सूत्रार्थात् ङीबित्यर्थः ॥

[5] इत्यत्वमिति ॥ इकारस्यात्वमित्यर्थः ॥

[6] अङ्गार इत्यादि ॥

"हरिद्राङ्गारचरणसुकुमारयुधिष्ठिराः ।
सत्कारमुखरौ रुग्णः करुणो वरुणस्तथा ॥

(वा) [1] अङ्गार इत्व एवेष्यते ।

अन्यत्र—अङ्गारो-इङ्गाळो ॥

लो [2] ललाटे च ॥ १–३–३६ ॥

ललाटे खोर्लस्य णत्वं स्यात् । [3] णडालं ॥

[4] नीवीस्वप्ने वा ॥ १–३–३७ ॥

---

परिखासंवत्सरमत्सरपरशुकिरातशिथिरदारिद्र्यम् ।
कातरपरिघदरिद्रापद्वारा गरुडपारिभद्रं च ॥
दरिद्रातिश्चात्र पादार्थ एव चरणो गणे ।
पठ्यतेऽत्र किरातस्तु चत्वसंयोग एव हि ॥ ''

इत्यान्ध्रलिपिमुद्रितचन्द्रिकाकोशे हरिद्रादिगणान्तर्गतशब्दसङ्ग्राहिकाः कारिका दृश्यन्ते । वृत्तौ त्वस्यां सत्कारशब्दस्थाने संस्कारशब्दः पठितो दृश्यते । अत्रत्यकारिकायां ' चत्वसंयोग एव हि ' इत्यस्यायमर्थः—' छागशृङ्खलकिराते लकचाः ' (प्रा. सू. १-३-१३) इत्यनेनादेः ककारस्य वैकल्पिकतया चकारविधानाच्चकारपक्ष एव रेफस्य लत्वमिति । तेन किरातशब्दस्य चिलाओ किराओ इति रूपद्वयं सिद्धम् ॥

[1] अङ्गार इत्व एवेत्यादि ॥ ' पक्वाङ्गारललाटे तु ' (प्रा. सू. १-२-१२) इत्यनेनेत्वस्य विकल्पेन विधानादित्वपक्ष एव रस्य लत्वमिति इङ्गालो अङ्गारो इत्यङ्गारशब्दस्य रूपद्वयं सिध्यति । ' इङ्गालो चलणो सुउमालो जुहुट्ठिलो सक्कालो मुहलो लुग्गो कलुणो वलुणो फलिहा संवच्छलो मच्छलो पलसू चिलाओ सिढिलो दालिद्दं काहलो फलिहो दलिद्दो अवद्दालं गलुणो फालिहद्दं दलिद्दाइ ' इत्यङ्गारादिशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

[2] ललाटे चेति ॥ एतत्सूत्रात्पूर्वं वराहगर्तमूषिकागन्धर्वार्थकस्य किरिशब्दस्य, भीरुभेदकरभसरोमण्डूकदुन्दुभ्यर्थकस्य भे(बे)रशब्दस्य, तथा करवीरशब्दस्य च यथाक्रमं ' किडी भेडो कणवीरो ' इति रूपसाधकं ' किरिभे(बे)रे डः ' (प्रा. सू. १-३-७९) ' खोः करवीरे णः ' (प्रा. सू. १-३-८०) इति सूत्रद्वयमधिकमुपात्तं त्रिविक्रमवृत्तिचन्द्रिकयोर्दृश्यते ॥

[3] णडालमिति ॥ ललाटशब्दे प्रथमलकारस्य प्रकृतसूत्रेण णत्वे ' टो डः ' (प्रा. सू. १-३-३१) इति टस्य डत्वे ' ललाटे डलोः ' (प्रा सू. १-४-११४) इति डलयोर्व्यत्यासे च णडालमिति रूपम् । ' पक्वाङ्गारललाटे तु ' (प्रा. सू. १-२-१२) इतीत्वपक्षे तु णिडालमिति रूपं बोध्यम् ॥

[4] नीवीति ॥ एतत्सूत्रात्पूर्वं शब्दविशेषार्थकस्य लोहलशब्दस्य लाङ्गललाङ्गू-

अनयोर्वस्य वा मस्स्यात्। णीमी णीवी। [1] सिमिणो सिविणो ॥

**हस्य घो [2] बिन्दोः ॥ १-३-३८ ॥**

सिंघो ॥

**शोस्सल् ॥ १-३-३९ ॥**

[3] अस्तोरित्यादि निवृत्तम् । शब्दः-[4] सद्दो । स्यन्दनः-संदणो । अंशः-अंसो । यशः-जसो। वेषः-वेसो ॥

**प्रत्यूषदिवसदशपाषाणेषु तु हः ॥ १-३-४० ॥**

शोरेव । [5] पच्चूहो पच्चूसो ॥

---

लस्थूलशबरशब्दानां च 'णोहलो णंगलं णंगूलं थोरो समरो' इति रूपसाधकं 'लोहललाङ्गललाङ्गूले वा' (प्रा. सू. १-३-८२) 'स्थूले रलूतश्चौत्' (प्रा. सू. १-३-८३) 'बो मश्शबरे' (प्रा. सू. ८४) इति सूत्रत्रयमधिकं त्रिविक्रमवृत्तिचन्द्रिकयोरुपात्तं दृश्यते ॥

[1] सिमिणो इति ॥ स्वप्नशब्दे वकारस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि 'स्वप्नादाविल्' (प्रा. सू. १-२-७६) इत्यादेरकारस्येत्वे 'नात् स्वप्ने' (प्रा. सू. १-४-१०२) इति नकारात्प्रागिकारागमे पकारस्य 'पो वः' (प्रा. सू. १-३-५५) इति वत्वे 'नीवी स्वप्ने' (प्रा. सू. १-३-८५) इत्यस्मिन् स्वप्नशब्दगतबकारोद्देशेन मत्वविधानसामर्थ्यानुगृहीतं 'वबयोरभेदः' इति न्यायमाश्रित्य वकारस्य मत्वे 'नः' (प्रा. सू. १-३-५२) इति नकारस्य णत्वे च सिमिणो इति रूपम् ॥

[2] बिन्दोरिति ॥ पञ्चम्यन्तमेतत्। बिन्दोः परस्य हस्य घो भवतीति सूत्रार्थः। अत्र त्रिविक्रमवृत्तिकारो बहुलाधिकारं मनसिकृत्य क्वचित् दाह इत्यादौ अबिन्दोरपि परस्य हस्य वत्वेन दावो इति रूपमभिप्रैति ॥

[3] अस्तोरित्यादि ॥ तदधिकारस्यैतदवधिकत्वोक्त्या अस्तोः अखोः अचः इति पदत्रयमत्र सूत्रे उत्तरत्र च न संबध्यत इत्यर्थः। तेन अश्व इत्यादौ संयुक्तस्य शेष इत्यादावादेः, अंश इत्यादावनचः परस्य शकारादेस्सकार इति बोध्यम् ॥

[4] सद्दो इति ॥ शब्दशब्दे 'वबयोरभेदः' इति न्यायेन 'लवरामधश्च' (प्रा. सू. १-४-७८) इति बकारस्य लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना दकारस्य द्वित्वे प्रकृतसूत्रेण शस्य सादेशे च सद्दो इति रूपमिति भाति ॥

[5] पच्चूहो इति ॥ प्रत्यूषशब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि त्य् इत्यस्य 'त्योऽचैत्ये' (प्रा. सू. १-४-१७) इति चादेशे 'शेषादेशस्य'

[1] छल् षट्छमीसुधाशाबसप्तपर्णे ॥ १-३-४१ ॥
एषु शोश्छः स्यात्। लित्त्वान्नित्यम्। षण्मुखः–छंमुहो ॥

इत्यसंयुक्तहलादेशप्रकरणम् ॥

---

# अथ निपातनप्रकरणम्.

[2] अपतौ घरो गृहस्य [3] ॥ १-३-४२ ॥

---

(प्रा. सू. १-४-८६) इत्यादिना द्वित्वे प्रकृतसूत्रेण षकारस्य हादेशतदभावपक्षयोः पच्चूहो पच्चूसो इति रूपद्वयम्। अत्र दिअहो दिअसो, दह दस, पाहाणो पासाणो इति दिवसदशपाषाणशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

[1] छल् षडित्यादि ॥ एतत्सूत्रात्पूर्वं 'स्नुषायां ण्हः फोः' (प्रा. सू. १-३-८९) इति सूत्रमेकमधिकं स्नुषाशब्दस्य सुण्हा इति रूपसाधकं त्रिविक्रमवृत्तिचन्द्रिकयोरुपात्तं दृश्यते। अत्र छमी छुहा छावो छत्तिअण्णो इति शमीसुधाशाबसप्तपर्णशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

इत्यसंयुक्तहलादेशप्रकरणम् ॥

---

## अथ निपातनानि.

[2] अपतावित्यादि ॥ एतत्सूत्रात्पूर्वं सिरा-पादपीठ-पादपतन-दुर्गादेवी-उदुम्बर-व्याकरण-प्राकार-आगत-एवमेव-देवकुल-प्रावारक-यावत्-जीवित-अवट-आवर्तमान-तावत्-दनुजवध-राजकुल-भोजन-कालायस-किसलय-हृदयशब्दानां छिरा पावीढं पावडणं दुग्गावी उंबरो वारणं पारो आओ एमेअ देउलं पारओ जा जीअं अडो आत्तमाणं ता दणुवहो राउलं भोणं कालासं किसलं हिअं इति पाक्षिकरूपसाधकानि 'सिरायां वा' (प्रा. सू. १-३.९१) 'लुक्पादपीठपादपतनदुर्गादेव्युदुम्बरेऽचाऽन्तर्दः' (प्रा. सू. १-३-९२) 'व्याकरणप्राकारागते कगोः' (प्रा. सू. १-३-९३) 'एवमेवदेवकुलप्रावारकयावज्जीवितावटावर्तमानतावति वः' (प्रा. सू. १-३-९४) 'ज्योर्दनुजवधराजकुलभोजनकालायसकिसलयहृदयेषु' (प्रा. सू. १-३-९५) इति षट् सूत्राण्यधिकानि त्रिविक्रमवृत्तिचन्द्रिकयोरुपात्तानि दृश्यन्ते ॥

[3] गृहस्येति ॥ एतदनन्तरं स्त्री-भगिनी-दुहितृ-वनिता-उभय-अधो-मलिन-धृति-पूर्व-वैडूर्य-स्मर-कटु-बहिर्-ईषत्-इदानीं-तिर्यक्-पदाति-शुक्तिशब्दानां इत्थी बहिणी धूआ

गृहं घरम्। अपतौ किम्? गिहपई॥

इति निपातनप्रकरणम्.

इति श्रीमद्दक्षिणसमुद्राधीश्वरचोक्कनाथभूपालप्रियसचिव-सज्जनावलम्ब-ब्रह्मण्यबिरुदाङ्क-चिनबोम्मभूपहृदयकुहरविहरमाण-साम्बशिवप्रेरितेनाप्पय्यदीक्षितेन कृते प्राकृतमणिदीपे प्रथमाध्यायस्य तृतीयः पादः.

---

विलआ अवह हिट्ठं मइलं दिही पुरिमं वेरुलिअं ईसरो कारं बाहिं (बाहिरं) कूरं इण्हिं (एत्ताहे) तिरिच्छि पाइक्को सिप्पी इति पाक्षिकरूपसाधकानि 'स्त्रीभगिनीदुहितृवनितानामित्थीबहिणीधूआविलआः' (प्रा. सू. १-३-९७) 'उभयाधसोरवहहिट्ठौ' (प्रा. सू. १-३-९८) 'मलिनधृतिपूर्ववैडूर्याणां मइलदिहीपुरिमवेरुलिआः' (प्रा. सू. १-३-९९) 'स्मरकट्वोरीसरकारौ' (प्रा. सू. १-२-१००) 'बाहिं बाहिरौ बहिसः' (प्रा. सू. १-३-१०१) 'कूरो गौणेषतः' (प्रा. सू. १-३-१०२) 'इण्हिं एत्ताहे इदानीमः' (प्रा. सू. १-३-१०३) 'तिर्यक्पदातिशुक्तेस्तिरिच्छिपाइक्कसिप्पि'' (प्रा. सू. १-३-१०४) इत्यष्टावधिकानि सूत्राण्युपात्तानि त्रिविक्रमवृत्तिचन्द्रिकयोरुपलभ्यन्ते॥

१. गवि गोणा।
२. तल्ल–तल्लड–तलानि तल्पे।
३. धिधिरत्थु धिगस्त्वित्यर्थे।
४. गोला–गोदे गोदावर्याम्।
५. ओसायणं (अहीशाने) आपोशन इति त्रिविक्रमवृत्तौ।
६. वणई वनराजौ।
७. पङ्गुरणं प्रावरणे।
८. ओसिरणगोसौ व्युत्सर्जनप्रत्यूषयोः।
९. थोवथेवथोक्काः स्तोके।
१०. आअ–विरुआवब्विरुद्धयोः।
११. पत्थेवाअ (पत्थेणअ)–वेलम्बौ पाथेयविडम्बनयोः।
१२. बालबुद्बुदकरीरेषु बाय–बुलबुल-करिल्लाः।
१३. ऊया–दोग्ग–धणिया यूकायुग्म-धन्यासु।
१४. उद्वहने णिव्वहणम्।
१५. छिच्छि धिग्धिगित्यर्थे।
१६. वृतौ वाडी।
१७. गहिल्लो ग्रहिले।
१८. गोसमूहे गोणिक्को।
१९. अयुजरेवई (अइरजुवई) अचिर-युवत्याम्।
२०. झग्गुलय्भिसारिकायाम्।
२१. अणरहू नववध्वाम्।
२२. असुरे अम(ग)यो।
२३. पण्णपण्णा (पणअण्णा) पञ्चपञ्चा-शति।
२४. तेपण्णा त्रिपञ्चाशति।

२५. पण्णा पञ्चाशति ।

२६. गामहण–घुसिमे ग्रामस्थानघुसृण-योः ।

२७. छटायां छट्टा ।

२८. पाउरण–वइल्लौ प्रावरणबलीवर्द-योः ।

२९. हिज्जो (ज्जो) ह्यःस्थाने ।

३०. त्रिचत्वारिंशति तेआलि(ली)सा ।

३१. आसंघ–डोसिण्या (दोसिणा) वा-स्थाज्योत्स्नयोः ।

३२. लक्कुडो लगुडे ।

३३. छे (चे) णो स्तेने ।

३४. कक्खड–कक्खलौ कर्कशे ।

३५. अलाबूकलत्रयोः कलबू–कत्ते ।

३६. निलये णिलय–णिहेलणं ।

३७. णिक्कड–निरासौ निश्चयनृशंसयोः।

३८. विहुंडअ–णिप्पंसौ विधुंतुदनिस्त्रिं-शयोः ।

३९. व(प)हिअ–कोळीरे मथितकुरुवि-न्दयोः ।

४०. खेड्डं खेले ।

४१. विउसग्ग–व्युडौ व्युत्सर्गविटयोः ।

४२. संघअण-घाअणौ संहननगायनयोः।

४३. मत्कुणककुदजम्बालेषु डेंकुण–कउद–सेवालाः ।

४४. अथक्क – खुड्डुअ – वड्डु( ड्डु )अरा अकाण्डक्षुल्लकबृहत्तरेषु ।

४५. आनने आणुअम् ।

४६. संगोल्ल(ल्ली)-सामरी(लि)–सिप्पी-तलाराः संघातशाल्मलीसूचीत-लवरेषु ।

४७. अव्वा (ब्बा) अम्बायाम् ।

४८. पम्मि–हीमोर–जच्छन्दाः पाणिभी-मोरस्स्वच्छन्देषु ।

४९. दिनमुखकुड्ड (तु) कशीर्षत्रसंस्तरेषु अणुदिव-कुड्ड-सीसक्क-सत्थराः ।

५०. विड्डि(ड्डु)र–वीवि(लि)–कडप्प – दूसला(ल्ला) विस्तारवीचीकलाप-दुर्भगेषु ।

५१. वीली वीथ्याम् ।

५२ च्छिल्ल–डंभिअ–डेङ्कुराश्छिद्रदाम्भि-कदर्दुरेषु ।

५३. गण्डस्थले गल्लो ।

५४. पाडिसिद्धि–पडिसिद्धी प्रतिस्पर्धा-याम् ।

५५. वंजर–मंजरौ मार्जारे ।

५६. गृध्रे गहरो ।

५७. उअअ–अज(ज्ज)मावृजौ ।

५८. अरणि–तणेसि–साळङ्कि(ङ्कि)आः सरणितृणराशिशारिकासु ।

५९. दुःखचतुष्पथकरालेषु दुग्ग–चउ-क्क–कलेराः ।

इत्येकोनषष्टिर्गणसूत्राणि 'गोणाद्याः' इत्येतत्पादान्तिमसूत्रगतानि चन्द्रिका-त्रिविक्रमवृत्त्योर्दर्श्यन्ते ॥

इति निपातनप्रकरणम्.

इति महिशूरराजकीयप्राच्यकोशालयविदुषः तिरु. तिरु. श्रीनिवासगोपालाचार्यस्य कृतौ दीधित्यभिख्यायां प्राकृतमणिदीपटिप्पण्यां प्रथमाध्यायस्य तृतीयः पादः ॥

# अथ संयुक्तादेशप्रकरणम्.

## [1] स्तोः ॥ १-४-१ ॥

अधिकारोऽयम्। 'ईल् जायाम्' (प्रा. सू. १-४-११०) इति यावद्वक्ष्यते ॥

## वा रक्ते गः ॥ १-४-२ ॥

अत्र स्तोर्गो वा स्यात्। [2] रग्गो रत्तो ॥

## [3] ष्कस्कोर्नाम्नि ॥ १-४-३ ॥

[4] खः स्यात्। पुष्करं-[5] पोक्खरं। स्कन्दः-खंदो। नाम्नि किम्?

---

अथ संयुक्तादेशप्रकरणम्.

[1] **स्तोरिति**। 'संयुक्तः स्तुः' (प्रा. सू. १-१-१२) इत्यनेन स्तुशब्दस्य संयुक्तार्थे सङ्केतिततया स्तोरित्यस्य संयुक्तस्येत्यर्थः ॥

[2] **रग्गो रत्तो इति**। रक्तशब्दे प्रकृतसूत्रेण क्त इत्यस्य गादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे रग्गो इति, गादेशस्य वैकल्पिकतया तदभावपक्षे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना कस्य लोपे पूर्ववत्तकारस्य द्वित्वे रत्तो इति च रूपं बोध्यम् ॥

[3] **ष्कस्कोर्नाम्नीति**। एतत्सूत्रात्पूर्वं त्रिविक्रमवृत्तिचन्द्रिकयोः शुल्कशक्तमुक्तदष्टमृदुत्वरुग्णशब्दानां सुङ्गं सक्को मुक्को दक्को मउक्कं लुक्को इति पाक्षिकरूपसाधकं, तथा क्ष्वेटकादीनां खेडओ--इत्यादिरूपसाधकं च 'शुल्के ङ्गः' (प्रा. सू. १ ४-३) 'कश्शक्तमुक्तदष्टमृदुत्वरुग्णेषु' (प्रा. सू. १-४-४) 'क्ष्वेटकगे खल्' (प्रा. सू. १-४-५) इति सूत्रत्रयमधिकमुपात्तं दृश्यते। 'क्ष्वेटकः स्फोटकः स्फेटकः' इति क्ष्वेटकादिगणः ॥

[4] **ख इति**। 'क्ष्वेटकगे खल्' (प्रा. सू. १-४-५) इति सूत्रे खल् इत्यनुवृत्त्या तत्र लित्त्वस्य नित्यत्वार्थकतया नित्यं खकारादेशो भवतीत्यर्थः। पूर्वसूत्रसंबद्धवाशब्दाननुवृत्त्यर्थं तत्र लित्करणं बोध्यम् ॥

[5] **पोक्खरमिति** ॥ पुष्करशब्दे प्रकृतसूत्रेण ष्कस्य खत्वे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इति तद्वर्गीयप्रथमवर्णादेशे 'स्तौ' (प्रा. सू. १-२-६६) इत्यनेन उकारस्य ओत्वे पोक्खरमिति रूपम् ॥

दुष्करं–दुक्करं[1]। नमस्कारः–[2]णमोक्कारो ॥

[3]वृश्च रुर्वृक्षे ॥ १–४–४ ॥

वृक्षे क्षस्य खः स्यात्। तदा वृ–इत्यस्य रुः स्यात्। वृक्षः–रुक्खो [4]वच्छो ॥

क्षः ॥ १–४–५ ॥

क्षस्य खः स्यात्। क्षणः–खणो ॥

---

[1]दुक्करमिति ॥ दुष्करशब्दस्य यौगिकत्वात् नामत्वाभावात् 'ष्कस्कोर्नाम्नि' (प्रा. सू. १-४-६) इत्यस्य अप्रवृत्त्या 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना षकारस्य लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना कस्य द्वित्वे दुक्करमिति रूपमिति भावः। अत्र 'स्तौ' (प्रा. सू. १-२-६६) इत्यनेन ओत्वस्य दुर्वारतया दोक्करमित्येव रूपं बोध्यम्। अतोऽत्र मुद्रितचन्द्रिकात्रिविक्रमवृत्त्योरपि दृश्यमानं दुक्करमिति प्रत्युदाहरणलेखनं लेखकप्रमादायत्तमिति संभाव्यते। अत एव लिखितत्रिविक्रमवृत्तिकोशादावत्र दोक्करमित्येव लिखितं दृश्यते। दुक्करमित्यस्यापि सति प्रयोगे चन्द्रिकोक्तरीत्या थुल्लो इत्यत्रेव बहुलग्रहणादोकारनिवृत्तिरङ्गीकार्या ॥

[2]णमोक्कारो इति ॥ नमस्कारशब्दे 'फोः परस्परनमस्कारे' (प्रा. सू. १-२-३०) इति द्वितीयाकारस्य ओत्वं 'नः' (प्रा सू. १-३-५२) इति नकारस्य णत्वं च बोध्यम् ॥

[3]वृश्च रुर्वृक्ष इति ॥ 'क्षेटकगे खल्' (प्रा. सू. १-४-५) इत्यतः खलित्यनुवर्तते। वुरिति वृशब्दस्य षष्ठ्येकवचने रूपम्। स्तोरित्यधिक्रियते। लित्वान्नित्यम्। ततश्च वृक्षशब्दे संयुक्तस्य क्ष्–इत्यस्य नित्यं खकारादेशो भवति, वृशब्दस्य रु–इत्यादेशश्च भवतीति सूत्रार्थः। तेन वृक्षशब्दे क्षस्य खत्वे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना खस्य द्वित्वे 'पूर्वमुपरि वर्गयुजः' (प्रा. सू. १-४-९४) इति पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे प्रकृतसूत्रेण वृ इत्यस्य खत्वसंनियोगशिष्टे र्वादेशे रुक्खो इति रूपम् ॥

[4]वच्छो इति ॥ ननु 'वृश्च रुर्वृक्षे' (प्रा. सू. १-४-७) इति विहितखत्वस्य नित्यतया कथमेतद्रूपं सङ्गच्छत इति चेत्, 'स्पृहादौ' (प्रा. सू. १-४-२२) इति सूत्रे स्पृहादिगणे वृक्षशब्दपाठस्य वैयर्थ्यान्यथानुपपत्त्या एतत्सूत्रसार्थक्याय च छत्वखत्वयोरुभयोरपि पाक्षिकप्रवृत्त्यभ्युपगमस्यावश्यकत्वमित्याशयात्। नन्वेवं छत्वपक्षे वृ इत्यस्य 'वृश्च रुर्वृक्षे' (प्रा. सू. १-४-७) इत्यनेन रुत्वं कुतो नेति चेत्, खत्वरुत्वयोः संनियोगशिष्टत्वाभ्युपगमेन खत्वाभावपक्षे न रुत्वमित्याशयात्। एवंकिल परिभाषितं पाणिनीये 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति। अत्र सह वा प्रवृत्तिरित्यादेः सहैव प्रवृत्तिनिवृत्ती इत्यर्थः। तथा च छत्वपक्षे 'ऋतोऽत्' (प्रा. सू. १-२-७४) इति ऋकारस्यात्वे वच्छो इति रूपं बोध्यम् ॥

## स्थाणावहरे ॥ १–४–६ ॥

खाणू । [1]हरे तु थाणू ॥

## [2]स्कन्दतीक्ष्णशुष्के तु खोः ॥ १–४–७ ॥

खंदो [3]कंदो ॥

## स्तम्भे ॥ १–४–८ ॥

खोः स्तोः खः । खंभो । पक्षे [4]थंभो ॥

## स्थोऽस्पन्दे ॥ १–४–९ ॥

स्पन्दाभावलक्षणसात्विकभावार्थकस्तम्भशब्दवृत्तेः स्तोः खोः थकारः स्यात् । [5]लित्वान्नित्यम् । थंभो ॥

## स्त्यानचतुर्थे च तु ठः ॥ १–४–१० ॥

ठीणं । 'ईलृ खल्वाटस्त्यानयोरातः' (प्रा. सू. १-२-३३) इत्यात ईत्वम् । [6]चउट्ठो ॥

---

[1] हरे त्विति ॥ रुद्रपर्यायस्थाणुशब्दे अहर इत्यत्र निषेधात् न संयुक्तस्य खत्वं, किन्तु 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सकारस्य लुकि थाणू इति रूपं बोध्यम् ॥

[2] स्कन्देत्यादि ॥ अत्र खोरिति आद्यर्थे सङ्केतितम् । तथा तु इति विभाषायाम् । ततश्च स्कन्दादिशब्दगताद्यसंयुक्तस्य खकारादेशो विभाषा भवतीत्यर्थः । खत्वाभावपक्षे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सकारलोपे कंदो इति रूपम् ॥

[3] कंदो इति ॥ तीक्ष्णशुष्कशब्दयोस्तु तिक्खं तिण्हं, सोक्खं सोक्कं, इति प्राकृते रूपं बोध्यम् ॥

[4] थंभो इति ॥ अत्र 'स्थोऽस्पन्दे' (प्रा. सू. १-४-१२) इत्युत्तरसूत्रे अस्पन्दरूपसात्विकभावार्थकस्तम्भशब्द एव संयुक्तस्य थकारादेशविधानात् तस्य दारुमयवाचकत्वे थकारादेशस्याप्रवृत्या 'स्तम्भे' इति प्रकृतसूत्रे पूर्वसूत्रात्तु इत्यनुवृत्त्या खत्वस्य वैकल्पिकत्वात्तदभावपक्षे 'कगटड (प्रा. सू. १-४-७७) इत्यनेन सकारलुको दुर्वारतया तम्भो इति पाक्षिकोदाहरणं न्याय्यमिति बोध्यम् ॥

[5] लित्त्वादिति ॥ 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इति लित्त्वस्य विकल्पाभावे सङ्केतितत्वान्नित्यत्वे पर्यवसानादिति भावः ॥

[6] चउट्ठो इति ॥ चतुर्थशब्दे तकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुक् । प्रकृतसूत्रेण ठादेशानन्तरं तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य तद्वर्गीयप्रथमवर्णादेशोऽपि बोध्यः ॥

पक्षे-चउत्थो। [1] चात् ठंभो। पक्षे-[2] थीणम्॥

ष्टः॥ १-४-११॥

[3] ठः स्यात्। इष्टं-इट्ठम्॥

[4] त्योऽचैत्ये॥ १-४-१२॥

त्यस्य चः स्यात्। सत्यं-[5] सच्चं। अचैत्ये किम्? चइत्तं, [6] वैरादि॥

श्चेर्वृश्चिके श्चुर्वा॥ १-४-१३॥

[7] विञ्चुओ॥

---

[1] चादिति॥ अत्र सूत्रे चशब्दस्य पूर्वसूत्रोपात्तस्तम्भशब्दसमुच्चायकतया तत्राप्यादेः संयुक्तस्य ठकारादेशेन ठम्भो इत्यपि रूपमित्यर्थः॥

[2] थीणमिति॥ सूत्रे चशब्दस्य पूर्वोक्तस्य त्थ इत्यादेशस्याप्यनुकर्षकतया थादेशे इदं रूपमिति बोध्यम्। स्त्यानशब्दस्य दैवादिपाठात् 'देवगेऽखौ' (प्रा. सू. १-४-९२) इति णकारस्य द्वित्वे थिण्णमित्यप्यपरं रूपं बोध्यम्॥

[3] ठः स्यादिति॥ पूर्वसूत्र एव ष्टशब्दपाठं परित्यज्य सूत्रान्तरारम्भसामर्थ्यान्नित्योऽयमादेश इति बोध्यम्॥

[4] त्योऽचैत्ये इति॥ एतत्सूत्रात्पूर्वं विसंस्थुलास्थिशब्दयोः धनभिन्नार्थकार्थशब्दे कृत्तिचत्वरशब्दयोश्च संयुक्तानां ठकारचकारादेशविधानेन विसंठुलो अट्ठी अट्ठो किच्ची चच्चरं इति प्राकृतरूपसाधकं 'विसंस्थुलास्थ्यधनार्थे' (प्रा. सू. १-४-१५) 'चः कृत्तिचत्वरे' (प्रा. सू. १-४-१६) इति सूत्रद्वयं सूत्रपाठेऽधिकं दृश्यते॥

[5] सच्चमिति॥ सत्यशब्दे संयुक्तस्य चादेशानन्तरं 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना पूर्वस्य द्वित्वम्॥

[6] वैरादीति॥ वैरादिगणप्रविष्टः चैत्यशब्द इत्यर्थः। तेन चैत्यशब्दे 'अइ तु वैरादौ' (प्रा. सू. १-२-१०३) इति सूत्रेण ऐकारस्य अइ इत्यादेशे त्य्-इत्यत्रत्ययकारस्य 'मनयाम्' (प्रा. सू. १-४-७९) इति लुकि तकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे च चइत्तमिति रूपं बोध्यम्॥

[7] विञ्चुओ इति॥ वृश्चिकशब्दे ऋकारस्य 'इल् कृपगे' (प्रा. सू. १-२-७६) इति इकारे ककारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि प्रकृतसूत्रेण श्चीत्यस्य ञ्चु-इत्यादेशे विञ्चुओ इति रूपम्॥

[1] विंसिओ । [2] वक्रादित्वाद्बिन्दुः । [3] कृपादित्वादिः ॥

[4] उत्सवक्रक्षोत्सुकसामर्थ्ये छो वा ॥ १-४-१४ ॥

[5] उच्छवो ऊसवो, [6] इत्यादि ॥

---

[1] विंसिओ इति ॥ अत्र प्रकृतस्य ञ्छ-इत्यादेशस्य वैकल्पिकतया तदभावपक्षे 'ध्यश्वत्सप्सामनिश्चले' (प्रा सू. १-४-२३) इत्यनेन श्च-इत्यस्य छादेशे 'स्वरेभ्यो वक्रादौ' (प्रा. सू. १-१-४२) इति प्रथमात्स्वरादनन्तरं बिन्दौ विंछिओ इति रूपं साधीय इति भाति ॥

[2] वक्रादित्वादिति ॥ 'स्वरेभ्यो वक्रादौ' (प्रा. सू. १-१-४२) इति सूत्रेण वक्रादिगणपठितानां प्रथमादिस्वरेभ्यः परमनुस्वारागमविधानादित्यर्थः ॥

[3] कृपादित्वादिरिति ॥ 'इल् कृपगे' (प्रा. सू. १-२-७६) इति सूत्रेणेति भावः ॥

[4] उत्सवेत्यादि ॥ स्तोरित्यधिक्रियते । संयुक्तस्येति तदर्थः । उत्सवादिषु संयुक्तस्य छकारादेशो वा भवतीति सूत्रार्थः । पूर्वसूत्रादेवात्र वाग्रहणानुवृत्तावप्यत्र पुनर्वाग्रहणमेतदुत्तरसूत्रे तदननुवृत्त्यर्थमिति बोध्यम् ॥

[5] उच्छवो इति ॥ प्रकृतसूत्रेण उत्सवशब्दे संयुक्तस्य छत्वानन्तरं 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना पूर्वस्य प्रथमवर्णादेशे च उच्छवो इति रूपम् । छत्वस्यास्य वैकल्पिकत्वात्तदभावपक्षे 'दोदोऽनुत्साहोत्सन्न ऊ शसि' (प्रा. सू. १-२-६२) इत्युकारस्य दकारसहितस्य ऊकारादेशे ऊसवो इति रूपम् ॥

[6] इत्यादीति ॥ ऋक्षशब्दे संयुक्तस्य छादेशे तस्य द्वित्वे पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे 'केवलस्य रिः' (प्रा. सू. १-२-९०) इति ऋकारस्य र्यादेशे रिच्छो इति, छादेशाभावपक्षे 'क्षः' (प्रा. सू. १-४-८) इति खत्वे द्वित्वे पूर्वस्य कत्वे पूर्ववदृकारस्य र्यादेशे रिक्खो इति च रूपम् । तथा उत्सुकशब्दे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना कलोपोऽधिको बोध्यः । तेन उच्छुओ ऊसुओ इति रूपं बोध्यम् । सामर्थ्यशब्दे छत्वपक्षे सामच्छमिति, तदभावपक्षे 'लवरामधश्च' (प्रा. सू. १-४-७८) 'मनयाम्' (प्रा. सू. १-४-७९) इति सूत्राभ्यां रेफयकारयोर्लुकि थस्य द्वित्वे पूर्वस्य तत्वे सामत्थमिति च रूपम् ॥

## क्षमायां कौ ॥ १-४-१५ ॥

छमा। [1] शान्तौ तु खमा ॥

## [2] स्पृहादौ ॥ १-४-१६ ॥

स्तोः छः स्यात्। [3] छिहा ॥

[4] इक्षुक्षीरक्षारक्षुत्क्षिप्तक्षुण्णमक्षिकावृक्षाः।
कक्ष्याक्षिकुक्षिदक्षक्षेत्रसदृक्षोक्षाक्षलिक्षौ च।
पक्ष्म च स्थगितं क्षत्रं क्षतं कौक्षेयकं तथा।
सादृश्यं च · · · · · · ।

---

[1] शान्तौ त्विति ॥ सूत्रे कावित्यस्य पृथिव्यामित्यर्थकतया तद्भिन्नशान्तिगुणवाचकक्षमाशब्दे छत्वाप्रवृत्त्या 'क्षः' (प्रा. सू. १-४-८) इति खकारादेशे खमा इत्येव रूपमिति भावः ॥

[2] स्पृहादाविति ॥ एतत्सूत्रात्पूर्वं उत्सवार्थकक्षणशब्दगतस्य संयुक्तस्य छकारविधानेन छणो इति रूपसाधकं 'क्षण उत्सवे' (प्रा. सू. १-४-२१) इत्येकं सूत्रमधिकं प्राकृतसूत्रपाठे दृश्यते ॥

[3] छिहेति ॥ स्पृहाशब्दे संयुक्तस्य प्रकृतसूत्रेण छकारादेशे ऋकारस्य कृपादित्वात् 'इल् कृपगे' (प्रा. सू. १-२-७६) इति इत्वे इदं रूपम् ॥

[4] इक्ष्वित्यादि ॥

इक्षुक्षीरक्षारक्षुरक्षुतक्षुण्णमक्षिकावृक्षाः।
कक्ष्याकुक्षी दक्षक्षेत्रसदृक्षोक्षलिक्षाश्च।
लक्ष्माक्षि स्थगितं क्षवं क्षतं कौक्षेयकस्तथा।
सादृश्यं च क्षुधा लक्ष्मीः स्पृहादिगण इष्यते ॥

इति ससूत्रगणपाठे स्पृहादिगणपाठो दृश्यते। अत्र त्रिविक्रमवृत्तौ वक्षश्शब्दोऽपि पठितो दृश्यते। अतस्तस्यापि वच्छो इति रूपम्। 'उच्छू छीरं छारं छुरो छुण्णो मच्छिआ वच्छो कच्छा कुच्छी दच्छो छेत्तं सरिच्छं उच्छा लिच्छा लच्छं अच्छी छइअं छत्तं छअं कुच्छेअओ सारिच्छं छुहा लच्छी' इति इक्ष्वादिशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

## थ्यश्चत्सप्सामनिश्चले ॥ १-४-१७ ॥

छः स्यात् । थ्य, पथ्यं-पच्छम् । श्च, पश्चिमं-पच्छिमम् । आश्चर्य-[1]अच्छरिअं । त्स, मत्सरः-मच्छळो । प्स, अप्सरसः-अच्छराओ । अनिश्चले किम् ? निच्चळम् ॥

## द्यय्ययाँ जः ॥ १-४-१८ ॥

द्य, मद्यं-[2]मज्जं । य्य, जय्यं-जज्जं । र्य, कार्य-कज्जम् ॥

## [3]ध्यह्योर्झल् ॥ १-४-१९ ॥

लित्त्वान्नित्यम् । ध्यानं-[4]झाणम् । सह्यं-सज्झम् ॥

## [5]र्तस्या[6]धूर्तादौ टः ॥ १-४-२० ॥

---

[1] अच्छरिअमिति ॥ प्रकृतसूत्रेण आश्चर्यशब्दगतस्य 'श्च' इत्यय छादेशे तस्य द्वित्वे पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे 'र्य' इत्यस्य 'अररिअरिज्जमाश्चर्ये' (प्रा. सू. १-४-५६) इति रिअ इत्यादेशे अच्छरिअमिति रूपम् । एवमस्यैव अच्छअरं अच्छरिज्जमित्यपि रूपद्वयं बोध्यम् । तथा अच्छेरमित्यप्यस्यैव रूपान्तरं त्रिविक्रमवृत्त्याद्यनुमतं दृश्यते ॥

[2] मज्जमिति ॥ मद्यशब्दे संयुक्तस्य द्य्-इत्यस्य प्रकृतसूत्रेण जादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे मज्जमिति रूपम् । एवमन्यत्राप्यूह्यम् । कज्जमित्यत्र तु 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वोऽधिको बोध्यः ॥

[3] ध्यह्योरिति ॥ एतत्सूत्रात्पूर्वं अभिमन्युशब्दगतसंयुक्तस्य जर्जादेशद्वयविधानेन 'अहिमज्जू अहिमजू' इति रूपद्वयसाधकं 'त्वभिमन्यौ जर्जौ' (प्रा. सू. १-४-२५) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[4] झाणमिति ॥ अत्र 'नः' (प्रा. सू. १-३-५२) इति नस्य णकारादेशो बोध्यः ॥

[5] र्तस्येत्यादि ॥ एतत्सूत्रात्पूर्वं साध्वसध्वजेन्धीनां संयुक्तस्य झादेशविधानेन सज्झसो, झओ धओ, इज्जइ इति रूपसाधकं 'साध्वसे' (प्रा. सू. १-४-२७) 'ध्वजे वा' (प्रा. सू. १-४-२८) 'इन्धौ' (प्रा. सू. १-४-२९) इति सूत्रत्रयमधिकं सूत्रपाठे उपलभ्यते । त्रैविक्रमे तु कर्तरीशब्दोऽप्यत्र पठितः । बहुलाधिकाराद्वार्ताशब्दे वा टत्वमिति लक्ष्मीधरः ॥

[6] अधूर्तादाविति ॥ 'धूर्त-संवर्तन-वार्ता-प्रवर्तन-मुहूर्त-मूर्त-आवर्तक-सं-

**कैवर्तः–[1] केवट्टो । अधूर्तादौ किम्? धुत्तो ॥**

**(वा) [2] वार्तासंवर्तनमुहूर्तवार्तिकवर्तिकाकीर्तिकार्तिकमूर्तवार्तायां वेति वाच्यम् ॥**

**वार्ता–वट्टा ॥**

**[3] वा न्तन्धौ मन्युचिह्नयोः ॥ १–४–२१ ॥**

**मन्तू । चिन्धम् । पक्षे–[4] मण्णू चिण्हम् ॥**

**डल्फोर्मर्दित[5]विच्छर्दिच्छर्दिकपर्दिवितर्दिगर्तसंमर्दे ॥ १–४–२२ ॥**

---

वर्तक–वार्तिक–वर्तिका–निवर्तन–आवर्तन–विवर्तन–प्रवर्तक–मूर्ति–उत्कर्तित–निवर्तक–कीर्ति–कार्तिक इत्यादि ' इति चन्द्रिकायां धूर्तादिगणीयशब्दा निर्दिष्टाः ॥

[1] **केवट्टो इति** ॥ कैवर्तशब्दे ऐकारस्य 'ऐच एङ्' (प्रा. सू. १-२-१०२) इत्येकारो बोध्यः ॥

[2] **वार्तेत्यादि** ॥

'धूर्तः कीर्तितमौहूर्तिकवार्तिकवर्तिकाः कीर्तिः ।
कार्तिकहर्ता मूर्ता वार्तायां वेति वाच्यमित्याहुः ॥
समाविनिर्निप्रयुतो वर्तनं वर्तकस्तथा ।
वार्ताकं चोत्कर्तितश्च धूर्तादिगण ईरितः ॥'

इति ससूत्रगणपाठे धूर्तादिगणो निर्दिष्टः । अत्र 'समाविनिर्निप्रयुतः' इत्यादेः वर्तन-वर्तकशब्दविशेषणतया सम्-आ-वि-निर्-नि-प्र-इत्युपसर्गषट्कयुतो वर्तनशब्दो वर्तक-शब्दश्च धूर्तादिगणघटक इत्यर्थो बोध्यः ॥

[3] **वा न्तेत्यादि** ॥ एतत्सूत्रात्पूर्वं प्रवृत्तसन्दष्टमृत्तिवृत्तेष्टापत्तनकदर्थितोष्ट्रशब्द-घटकसंयुक्तानां टकारादेशविधानेन 'पअट्टो सन्दट्टो मट्टी वट्टं इट्टा पट्टणं कवट्टिओ उट्टो' इति रूपसाधकं 'प्रवृत्तसन्दष्टमृत्तिवृत्तेष्टापत्तनकदर्थितोष्ट्रे' (प्रा. सू. १-४-३१) इत्येकं सूत्रं सूत्रपाठेऽधिकं दृश्यते ॥

[4] **मण्णू चिण्हमिति** ॥ मन्युशब्दे न्तादेशाभावपक्षे 'मनयाम्' (प्रा. सू. १-४-७९) इति यकारस्य लुकि नकारस्य 'नः' (प्रा. सू. १-३-५२) इति णकारादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे मण्णू इति रूपम् । एवं चिह्नशब्दे न्धादेशाभावपक्षे 'श्नष्णस्नत्स्नह्नल्क्ष्णां ण्हः' (प्रा. सू. १-४-६९) इति ण्हादेशे चिण्हमिति रूपं साधीयः । अत्र बहुलाधिकारादादेशस्य लोपे इण्हमित्यपि चिह्न-शब्दस्य रूपान्तरं चन्द्रिकायामुक्तं दृश्यते ॥

[5] **विच्छर्दीति** ॥ 'विच्छर्दच्छर्दिकपर्द' इति सूत्रे पाठश्चन्द्रिकादौ दृश्यते ॥

एषु [1] फोः स्तोर्डः स्यात्। [2] लित्त्वान्नित्यम् । [3] मड्डिओ ॥

ढोऽर्धर्धिश्रद्धामूर्ध्नि तु ॥ १-४-२३ ॥

एषु स्तोः फोः ढो [4] वा स्यात्। अर्ध-अड्ढं, [5] अद्धम् ॥

दग्धविदग्धवृद्धिदंष्ट्रावृद्धे ॥ १--४--२४ ॥

ढो [6] नित्यं स्यात्। [7] डड्ढो। वृद्धकवे[8]र्नेष्यते। वुद्धकई ॥

---

[1] फोः स्तोरिति ॥ फुः स्तुः इति पदद्वयं द्वितीयः संयुक्त इत्यर्थे यथाक्रमं संकेतितम्। तथा च द्वितीयस्य संयुक्तस्येत्यर्थोऽत्र बोध्यः। सूत्रगृहीतपदेषु येषु संयुक्तद्वयसत्त्वं तत्र द्वितीयस्य डत्वं संयुक्तद्वयाभावे तु आदेरपि संयुक्तस्य डत्वमिति मर्दितादिपदग्रहणादेवावसीयते ॥

[2] लित्त्वादिति ॥ पूर्वसूत्रे वाग्रहणसत्त्वात्तदननुषङ्गार्थमत्र सूत्रे लित्करणमिति भावः ॥

[3] मड्डिओ इति ॥ मर्दितशब्दे संयुक्तस्य डादेशानन्तरं 'शेषादेशस्य' (प्रा. सू. १-४-८६) इति तस्य द्वित्वं 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारस्य लुक्च। विच्छड्डी छड्डी कवड्डी विअड्डी गड्डो सम्मड्डो इति विच्छर्दिछर्दिकपर्दिवितर्दिगर्तसंमर्दशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

[4] वेति ॥ सूत्रे तुशब्दस्य वार्थे संकेतितत्वेनाऽयमर्थो लभ्यत इति भावः। अत्रापि सूत्रे पूर्वसूत्रवत् सूत्रगृहीतपदे द्वितीयसंयुक्तसत्त्वे तस्यादेशः, अन्यथा तु प्रथमस्येति बोध्यम् ॥

[5] अद्धमिति ॥ अर्धशब्दे संयुक्तस्य ढादेशो विकल्प इति तदभावपक्षे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना धस्य द्वित्वे पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे च अद्धमिति रूपम्। एवं इड्डी इद्धी, सड्ढा सद्धा, मुड्ढा मुद्धा, इति ऋद्धिश्रद्धामूर्धशब्दानां प्रत्येकं रूपद्वयं बोध्यम् ॥

[6] नित्यमिति ॥ पृथक्सूत्रारम्भसामर्थ्यादिति भावः ॥

[7] डड्ढो इति ॥ अत्र आदिदकारस्य डकारविध्यदर्शनात् दड्डो इत्युदाहृतं चन्द्रिकादौ। अत्र शिष्टानां विदग्धवृद्धिदंष्ट्रावृद्धशब्दानां विअड्ढो वुड्डी दाढा वुड्ढो इति रूपाणि बोध्यानि ॥

[8] नेष्यत इति ॥ बहुलाधिकारादिति भावः ॥

## पञ्चदशदत्तपञ्चाशति णः ॥ १--४--२५ ॥

[1] पण्णरह । [2] दिण्णं । पण्णासम् । [3] अन्त्यहल्लोपे 'मङ्लुगसंबुद्धेः' (प्रा. सू. २-२-३०) इति मत्वम् ॥

## ज्ञम्नोः ॥ १–४–२६ ॥

णः स्यात् । ज्ञानं–[4] णाणं । निम्नं–निण्णं ॥

## [5] स्तः ॥ १–४–२७ ॥

थः स्यात् । हस्तः–[6] हत्थो ॥

## [7] वाऽऽत्मभस्मनि पः ॥ १–४–२८ ॥

---

[1] पण्णरहेति ॥ पञ्चदशादिषु संयुक्तस्य णकारादेशो भवतीत्येतत्सूत्रार्थात् पञ्चदशशब्दे संयुक्तस्य णकारादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे सप्तत्यादिपाठात् 'रल् सप्तत्यादौ' (प्रा. सू. १-३-४२) इति दस्य रत्वे 'प्रत्यूष' (प्रा. सू. १-३-८८) इत्यादिना शकारस्य हत्वे पण्णरहेति रूपम् ॥

[2] दिण्णमिति ॥ स्वप्नादिपाठात् दत्तशब्दे आदेरकारस्य 'स्वप्नादाविल्' (प्रा. सू. १-२-११) इतीत्वं बोध्यम् ॥

[3] अन्त्यहल्लोप इति ॥ 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति सूत्रेणेति भावः । पञ्चाशच्छब्दे शकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वं बोध्यम् ॥

[4] णाणमिति ॥ ज्ञानशब्दे नकारस्य 'नः' (प्रा. सू. १-३-५२) इति सूत्रेण णत्वं बोध्यम् ॥

[5] स्त इति ॥ एतत्सूत्रात्पूर्वं स्तवोत्साहशब्दयोः संयुक्तस्य पाक्षिकथादेशविधानेन थवो उत्थारो इति पाक्षिकरूपसाधकं 'स्तवे थो वा' (प्रा. सू. १-४-३८) 'रो ह्रश्चोत्साहे' (प्रा. सू. १-४-३८) इति सूत्रद्वयमधिकं सूत्रपाठे दृश्यते ॥

[6] हत्थो इति ॥ हस्तशब्दे संयुक्तस्य थादेशानन्तरं तस्य द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इति तद्वर्गीयप्रथमवर्णादेशो बोध्यः ॥

[7] वाऽऽत्मेति ॥ अत्र सूत्रे स्तोरित्यधिकारात्तस्य च संयुक्तसंज्ञकत्वेन आत्मभस्मशब्दयोस्संयुक्तस्य पकारो वा भवतीति सूत्रार्थो बोध्यः ॥

आत्मा–[1] अप्पा अत्ता । भस्म–[2] भप्पो भम्हो ॥

**द्मक्मोः ॥ १–४–२९ ॥**

पः स्यात् । कुद्मलं–[3] कुप्पळं । रुक्मिणी–रुप्पिणी ॥

**ष्पस्पोः फः ॥ १–४–३० ॥**

पुष्पं–पुप्फं । स्पर्शः–[4] फंसो । वक्रादित्वाद्बिन्दुः ॥

---

[1] **अप्पेति** ॥ प्रकृतसूत्रेण आत्मशब्दे संयुक्तस्य पाक्षिके पकारादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे 'संयोगे' (प्रा. सू. १-२-४०) इति पूर्वस्य ह्रस्वे 'पुंस्याणो राजवच्चानः' (प्रा. सू. १-२-६०) इत्युक्त्या राजवत्कार्ये अप्पा इति रूपम्। पकारादेशाभावपक्षे तु 'मनयाम्' (प्रा. सू. १-४-७९) इति मकारस्य लोपे शेषस्य द्वित्वे राजवत्कार्ये च अत्ता इति रूपम्। राजवत्कार्यस्यापि वैकल्पिकतया अप्पो अत्तो इत्यप्यन्यद्रूपद्वयं बोध्यम् ॥

[2] **भप्पो भम्हो इति** ॥ भस्मशब्दे प्रकृतसूत्रेण संयुक्तस्य पाक्षिके पादेशे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इति द्वित्वे 'स्नमदाम' (प्रा. सू. १-१-४९) इत्यनेन पुंस्त्वे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यन्त्यस्य हलो लोपे भप्पो इति रूपम्। पादेशाभावपक्षे तु 'श्मष्मस्मह्मामस्मररश्मौ म्हः' (प्रा. सू. १-४-६७) इति म्हादेशे भम्हो इति रूपम्। अत्राप्यात्मशब्दवत् पक्षे भप्पा भम्हा इत्यपि रूपद्वयं ज्ञेयम्। त्रिविक्रमवृत्तिषड्भाषाचन्द्रिकयोस्तु पादेशाभावपक्षे 'मनयाम्' (प्रा. सू. १-४-७९) इति मकारलोपाभिप्रायेण भस्सो इत्युदाहृतं दृश्यते। तत्र चानुपदप्रदर्शितरीत्या म्हादेशः कुतो न प्रवर्तेत इति विमर्शनीयम् ॥

[3] **कुप्पळमिति** ॥ कुट्मलशब्दस्य वक्रादिपाठात् 'स्वरेभ्यो वक्रादौ' (प्रा. सू. १-१-४२) इति प्रथमस्वरात्परं बिन्दोर्दुर्निवारतया तथैव त्रिविक्रमवृत्तिचन्द्रिकादावप्युदाहृतत्वेन कुंपळमित्येवात्राप्युदाहर्तुमुचितमित्यवमीयते। कुप्पळमित्यत्र दृश्यमानं तु लेखकप्रमादाधीनमेवेति ज्ञायते। अत एव पूर्वमत्रैव वृत्तौ 'स्वरेभ्यो वक्रादौ' (प्रा. सू. १-१-४२) इति सूत्रे वक्रादिगणे 'वक्रकुट्मलबुद्धाश्च' इति कुट्मलशब्दः पठितो दृश्यते ॥

[4] **फंसो इति** ॥ स्पर्शशब्दे प्रकृतसूत्रेण स्प–इत्यस्य फादेशे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सत्वे

## [1] ग्मो मः ॥ १–४–३१ ॥

[2] वा स्यात्। तिग्मं–[3] तिम्मं तिग्गं ॥

## [4] न्मल् ॥ १–४–३२ ॥

मः स्यान्नित्यम्। जन्म–जम्मो ॥

## [5] ताम्राम्रयोर्म्भः ॥ १–४–३३ ॥

[6] तम्भम्। अम्भम् ॥

---

वक्रादित्वात् 'स्वरेभ्यो वक्रादौ' (प्रा. सू. १-१-४२) इति प्रथमात्स्वरात्परं बिन्दौ फंसो इति रूपम् ॥

[1] **ग्मो म इति** ॥ एतत्सूत्रात्पूर्वं भीष्मशब्दस्य भिप्फो इति, श्लेष्मबृहस्पतिशब्दयोस्तु सेप्फो बुहप्फई इति पाक्षिकरूपसाधकं 'भीष्मे' (प्रा. सू. १-४-४५) 'श्लेष्मबृहस्पतौ तु फोः' (प्रा. सू. १-४-४६) इति सूत्रद्वयमधिकं सूत्रपाठे दृश्यते ॥

[2] **वा स्यादिति** ॥ 'श्लेष्मबृहस्पतौ तु फोः' (प्रा. सू. १-४-४६) इति पूर्वसूत्राद्वार्थकस्तुशब्दोऽत्रानुवर्तत इति भावः ॥

[3] **तिम्मं तिग्गमिति** ॥ तिग्मशब्दे प्रकृतसूत्रेण ग्मस्य मत्वे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे तिम्ममिति, मत्वस्य वैकल्पिकत्वात्तदभावपक्षे 'मनयाम्' (प्रा. सू. १-४-७९) इति मस्य लुकि शेषस्य गकारस्य द्वित्वे तिग्गमिति च रूपं बोध्यम् ॥

[4] **न्मलिति** ॥ 'न्मः' (प्रा. सू. १-४-४८) इत्यन्यत्र सूत्रपाठो दृश्यते। त्रिविक्रमवृत्तावपि पृथग्योगान्नित्यमित्युक्तिदर्शनाल्लकारविरहित एवात्र पाठस्समुचित इति भाति। अन्यथा न्म इत्यस्य उद्देश्यसमर्पकतया तत्र लित्करणस्य वैयर्थ्यं चापतेदिति बोध्यम् ॥

[5] **ताम्राम्रयोरिति** ॥ अत्रापि सूत्रपाठे 'ताम्राम्रयोर्म्बः' (प्रा. सू. १-४-४९) इत्येव पाठो दृश्यते। स एव पाठः त्रिविक्रमदेवाद्यभिमतश्च ज्ञायते ॥

[6] **तम्भं अम्भमिति** ॥ ताम्राम्रशब्दयोः संयुक्तादेशानन्तरं संयोग इति ह्रस्वे इदं रूपं बोध्यम्। ताम्राम्रशब्दयोरनयोः देश्यां तंबिरं अंबिरं इति रूपान्तरमप्युक्तं त्रिविक्रमवृत्तौ। तत्तु हेमचन्द्रीयदेशीयनाममालायां न दृश्यते ॥

[1]ह्वः ॥ १–४–३४ ॥

भः स्यात्। जिह्वा–जिब्भा। [2]जीहेत्यप्युक्तम् ॥

[3]लो वाऽऽर्द्रे ॥ १–४–३५ ॥

[4]अल्लम्। अद्दम् ॥

[5]अररिअरिज्जमाश्चर्ये ॥ १–४–३६ ॥

---

[1]ह्व इति ॥ एतत्सूत्रात्पूर्वं ऊर्ध्वशब्दे संयुक्तस्य पाक्षिकभकारादेशविधानेन उब्भं उद्धमिति रूपद्वयसाधकं 'ऊर्ध्वे भो वा' (प्रा. सू. १-४-५०) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[2]जीहेत्यप्युक्तमिति ॥ अत्र पूर्वसूत्राद्ह्वेत्यस्यानुवृत्त्या जिह्वाशब्दे संयुक्तस्य भादेशपक्षे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे जिब्भेति, भादेशाभावपक्षे च 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वकारस्य लुकि 'शोर्लुसयवरशोर्दिः' (प्रा. सू. १-२-८) इत्यत्र त्रिविक्रमवृत्तौ 'बहुलाधिकारादन्यस्य चादेर्दीर्घः' इत्युक्त्वा जीहेत्युदाहरणात् हकारात्पूर्वस्यापीकारस्य दीर्घे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इति सूत्रे अह्व इति प्रतिषेधात् 'दीर्घान्न' (प्रा. सू. १-४-८७) इति प्रतिषेधाच्च हस्य द्वित्वाभावे जीहेत्यपि रूपं सिद्धमिति भावः ॥

[3]लो वाऽऽर्द्रे इति ॥ एतत्सूत्रात्पूर्वं विह्वलशब्दे वस्य संयुक्तस्य च पाक्षिकभकारादेशविधानेन भिहलो विब्भलो विहलो इति रूपत्रयसाधकं 'वश्च विह्वले' (प्रा. सू. १-४-५२) इत्येकं सूत्रं, तथा काश्मीरशब्दे संयुक्तस्य पाक्षिकस्य म्भादेशस्य विधानेन कंभारं कम्हारं इति रूपद्वयसाधकं 'काश्मीरे म्भः' (प्रा. सू. १-४-५३). इत्यपरं सूत्रं चाधिकं सूत्रपाठे दृश्यते। पूर्वसूत्रवदेवात्र वाग्रहणानुवृत्तेस्सिद्धत्वेऽपि पुनरत्र वाग्रहणमुत्तरत्र वापदाननुवृत्तिसूचनार्थमिति बोध्यम् ॥

[4]अल्लमित्यादि ॥ प्रकृतसूत्रेण आर्द्रशब्दे संयुक्तस्य पाक्षिके लादेशे तस्य द्वित्वे पूर्वस्य 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे अल्लमिति रूपम्। लत्वाभावपक्षे तु 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफद्वयस्यापि लुकि पूर्ववद्वित्वह्रस्वयोः अद्दमिति रूपं बोध्यम्। अस्यैवार्द्रशब्दस्य 'त्वार्द्रे उदोत्' (प्रा. सू. १-२-२७) इति सूत्रेण आदेर्विकल्पेनोत्वौत्वयोर्विधानात् उल्लं उद्दं ओल्लं ओद्दं इत्यन्यान्यपि रूपाणि बोध्यानि ॥

[5] अररिअरिज्जमित्यादि ॥ एतत्सूत्रात्पूर्वं सौकुमार्यपर्यस्तपर्याणशब्दानां सोअमल्लं पल्लट्टं पल्लत्थं इति रूपसाधकं 'र्यस्सौकुमार्यपर्यस्तपर्याणे' (प्रा. स

अत्र र्यस्य एते स्युः। [1]अच्छअरं अच्छरिअं अच्छरिज्जम्। [2]र्य-सम्बन्ध्यर्णस्य लोपो वाच्य उक्तरूपसिद्ध्यर्थम्॥

## डेरो ब्रह्मचर्यसौन्दर्ये च॥ १-४-३७॥

अनयो[3]र्डिदेरः स्यात्। [4]बम्हचेरम्। डेरे, अकार उच्चारणार्थः॥ [5]सुन्देरम्। चात् आश्चर्यं अच्छेरम्॥

## [6]वा पर्यन्ते॥ १-४-३८॥

---

१-४-५५) इति सूत्रमेकं सूत्रपाठेऽधिकं दृश्यते। मुद्रितत्रिविक्रमवृत्तिकोशे त्वत्र सूत्रे रिअ इत्यस्य स्थाने रीअ इति पाठो दृश्यते॥

[1]अच्छअरमित्यादि॥ आश्चर्यशब्दे प्रकृतसूत्रेण र्यस्य अरादेशे श्चस्य 'थ्यश्च-त्सप्सामनिश्चले' (प्रा. सू. १-४-२३) इत्यनेन छादेशे तस्य द्वित्वे पूर्वस्य तद्वर्गीयप्रथम-वर्णादेशे 'संयोगे' (प्रा. सू. १-२-४०) इति पूर्वस्य ह्रस्वे अच्छअरमिति रूपम्। एवं रिअरिज्जादेशयोरपि प्रक्रिया॥

[2]र्यसम्बन्धीति॥ बहुलाधिकारकल्प्यमेतत्। वस्तुतस्तु—अत्रैवोत्तरसूत्रे डेरे अकार उच्चारणार्थ इत्युक्त्या तद्वदत्राप्यादेशे स्थानिनि वाऽकारस्योच्चारणार्थत्व-कल्पने तु नायं क्लेशः।

[3]डिदिति॥ प्रत्ययादित्वाभावेऽपि बहुलाधिकाराड्डित्संज्ञा कल्पनीयेति भाति॥

[4]बम्हचेरमिति॥ ब्रह्मचर्यशब्दे र्यस्य प्रकृतसूत्रेण एरादेशे तस्य डित्त्वा-च्चकारोत्तराकारस्य लोपे संयुक्तावयवरेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि 'श्मष्मस्मह्मामस्मरश्मौ म्हः' (प्रा. सू. १-४-६७) इति ह्मस्य म्हादेशे च बम्हचेरमिति रूपम्॥

[5]सुन्देरमिति॥ सौन्दर्यशब्दे प्रकृतसूत्रेण र्यस्य डेरादेशे तस्य डित्त्वात्पूर्ववद्दे-कारोत्तरवर्त्यकारस्य लोपे 'अनुक्तमन्य' (प्रा. सू. १-१-२) इत्यादिना 'एच इग्घ्रस्वादेशे' (पा. सू. १-१-४८) इति पाणिनीयानुशासनस्यात्राप्यनुमतत्वेन औकारस्य 'संयोगे' (पा. सू. १-२-४०) इति उकाररूपह्रस्वे सुन्देरमिति रूपम्॥

[6]वा पर्यन्त इति॥ एतत्सूत्रात्पूर्वं धैर्यतूर्यदशार्हशौण्डीर्यशब्देषु संयुक्तस्य रादेशविधानेन धीरं तूरं दसारो सोंडीरं इति प्राकृतरूपसाधकं 'धैर्ये रः' (प्रा. सू. १-४-५९) 'तूर्यदशार्हशौण्डीर्ये'(प्रा.सू. १-४-६०) इति सूत्रद्वयं सूत्रपाठेऽधिकं दृश्यते॥

पर्यन्ते र्यस्य डेरो वा स्यात्। पेरन्तो। पक्षे [1] पज्जन्तो ॥

## बाष्पे होऽश्रुणि ॥ १-४-३९ ॥

बाहो। अश्रुणि किम्? [2] बप्पो, ऊष्मेत्यर्थः ॥

## [3] न वा तीर्थदुःखदक्षिणदीर्घे ॥ १-४-४० ॥

एषु स्तोर्हो वा स्यात्। [4] तूहं तित्थं। तीर्थे ह्यूल् (प्रा. सू. १-२-५५)। [5] दाहिणो। 'हे दक्षिणेऽस्य' (प्रा. सू. १-२-९) ॥

---

[1] पज्जन्तो इति ॥ अत्र डेरादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'द्यय्यर्यां जः' (प्रा. सू. १-४-२४) इति र्यस्य जादेशे द्वित्वे पज्जन्तो इति रूपम् ॥

[2] बप्पो इति ॥ बाष्पशब्दे हादेशस्य वैकल्पिकतया तदभावपक्षे प्रयोगानुरोधात्पूर्वमेव 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे ततः 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना षकारस्य लुकि शिष्टस्य पकारस्य द्वित्वे च बप्पो इति रूपम् ॥

[3] न वा तीर्थेत्यादि ॥ एतत्सूत्रात्पूर्वं कार्षापणशब्दे संयुक्तस्य हादेशविधानेन काहावणो इति रूपसाधकं 'कार्षापणे' (प्रा. सू. १-४-६२) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[4] तूहं तित्थमिति ॥ तीर्थशब्दे संयुक्तस्य प्रकृतसूत्रेण हकारादेशपक्षे 'तीर्थे ह्यूल्' (प्रा. सू. १-२-५५) इति ईकारस्य ऊकारे तूहमिति रूपम्। हादेशस्य वैकल्पिकत्वात्तदभावपक्षे तु 'संयोगे' (प्रा. सू. १-२-४०) इति पूर्वमेव ईकारस्य ह्रस्वे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना थकारस्य द्वित्वे 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे तित्थमिति रूपम् ॥

[5] दाहिणो इति ॥ दक्षिणशब्दे संयुक्तस्य हत्वपक्षे 'हे दक्षिणेऽस्य' (प्रा. सू. १-२-९) इत्यादेरकारस्य दीर्घे दाहिणो इति, हत्वाभावपक्षे च क्षस्य 'क्षः' (प्रा. सू. १-४-८) इति खत्वे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे च दक्खिणो इति रूपम्। दुःखशब्दस्य दुहं दुक्खमिति, दीर्घशब्दस्य दीहं दिग्घं दीहरमिति च रूपाणि बोध्यानि ॥

## [1]त्वथ्वद्वध्वां [2] क्वचिच्चछजझाः ॥ १-४-४१ ॥

**भुक्त्वा–[3] भोच्चा । पृथ्वी–[4] पिच्छी । सकलपृथ्वीविद्वान्–सअळपिच्छीविज्जम् । शौरसेनीयो मः । समस्तत्वाद्विद्वच्छब्दस्य प्रयोगः ध्वनिः–झुणी । ' उल् ध्वनि ' (प्रा. सू. १-२-१६) इत्युत्वम् ॥**

---

[1] **त्वथ्वद्वध्वेत्यादि** ॥ एतत्सूत्रात्पूर्वं कूश्माण्डीशब्दस्य प्रथमस्य संयुक्तस्य हकारादेशेन द्वितीयस्य लकारादेशेन च कोहली कोहण्डी इति रूपद्वयसाधकं ' कूश्माण्ड्यां ण्डश्च तु लः ' (प्रा. सू. १-४-६४) इत्येकं सूत्रं सूत्रपाठेऽधिकं दृश्यते । ' कूश्माण्ड्यां ' इत्यस्मिन् सूत्रे मुद्रितत्रिविक्रमवृत्तिकोशगतटिप्पणे तु ' कोहल्ली कषड्भाषाचन्द्रिकयोरपपाठः । लस्य यद्यादेशद्विः स्यात् कोहलीत्यत्रेत्याद्युपन्यासवैयर्थ्यं स्यात् । अतः कोहल्लीति द्वित्वयुक्तोऽपपाठ एव ' इत्युल्लिखितं दृश्यते । अत्रेदं विभावनीयम्—' प्रागेव ह्रस्वः पश्चाल्लत्वम् ' इत्यत्रत्यत्रिविक्रमवाक्येन आदेशात्पूर्वं ह्रस्वे ततो लकारादेशे च ' शेषादेशस्य ' (प्रा. सू. १-४-८६) इत्यादिना लकारद्वित्वस्य दुर्निवारतया कोहल्ली इति लद्वित्वघटितस्यैव साधुत्वाभ्युपगम आवश्यकः । किं चैतस्य ' प्रागेव ह्रस्वः ' इत्यादिग्रन्थस्य द्वित्वसाधनार्थमपि प्रवृत्तिरित्यङ्गीकरणीयम् । यदि ह्रस्वात्पूर्वमेव लत्वं स्यात् तर्हि संयोगपरकत्वाभावेन आकारस्य ' संयोगे ' (प्रा. सू. १-२-४०) इति ह्रस्वो न स्यात् । ततश्च दीर्घस्य सत्वात् ' दीर्घान्न ' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधश्च स्यात् । अतो लत्वात्प्रागेव ह्रस्वाङ्गीकारे ततो लत्वे च ' दीर्घान्न ' (प्रा. सू. १-४-८७) इत्यस्याप्रवृत्त्या द्वित्वं सुलभमित्येव तदाशयात् । तस्मात् कोहलीति लकारद्वयाघटित एव अपपाठ इति ॥

[2] **क्वचिदिति** ॥ प्रयोगानुसारेणेत्यर्थः ॥

[3] **भोच्चेति** ॥ भुजेर्जकारस्य ' अन्त्यस्य वचिमुचिरुदिश्रुभुजां डोत् ' (प्रा. सू. २-४-४५) इति क्त्वाप्रत्यये परतो डोत्वे तस्य डित्वात्पूर्वस्य टेरुकारस्य लोपे प्राकृते क्वचिदेचां स्वरूपतो ह्रस्वाभ्यनुज्ञानादोकारस्य ह्रस्वतया ' दीर्घान्न ' इति निषेधाभावात् प्रकृतसूत्रेण त्वशब्दस्य चादेशानन्तरं ' शेषादेशस्य ' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे भोच्चेति रूपम् ॥

[4] **पिच्छीति** ॥ पृथ्वीशब्दे ' इत् कृपगे ' (प्रा. सू. १-२-७६) इति ऋकारस्येत्वे प्रकृतसूत्रेण थ्व्-इत्यस्य छादेशे तस्य ' शेषादेषस्य ' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य ' पूर्वमुपरि ' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे पिच्छीति रूपम् ॥

## ह्लो ल्हः ॥ १–४–४२ ॥

कह्लारं–कल्हारं । ‘ ह्लादी सुखे च ’ (भ्वादि–२७) इति धातोः कह्लारशब्दनिष्पत्तिः । [1] उपदेशसामर्थ्यान्न ललोपः ॥

## श्मष्मस्मह्मामस्मररश्मौ म्हः ॥ १–४–४३ ॥

अश्मा–[2] अम्हो । ग्रीष्मः–[3] गिम्हो । विस्मयः–विम्हओ । ब्राह्मणः–बाम्हणो । [4] समृद्ध्यादिः । अस्मरेति किम्? [5] सरो रस्सी ॥

---

[1] उपदेशसामर्थ्यादिति ॥ कह्लारशब्दे ह्ल इत्यस्य प्रकृतसूत्रेण ल्हादेशे ततो लकारस्य ‘ लवरामधश्च ’ (प्रा. सू. १-४-७८) इति यदि लुक् स्यात्तर्हि प्रकृतसूत्रे लाघवात् लकाररहितमेव हादेशं विदध्यात् । तदपहाय सलकारकहादेशविधानेन आदेशे लकारोपदेशसामर्थ्यान्नात्र ‘ लवरामधश्च ’ (प्रा. सू. १-४-७८) इति लकारस्य लुग्भवतीति परिकल्प्यत इत्यर्थः ॥

[2] अम्हो इति ॥ अश्मन् शब्दे ‘ अन्त्यहलोऽश्रदुदि ’ (प्रा. सू. १-१-२५) इति नकारस्य लोपे प्रकृतसूत्रेण श्मशब्दस्य म्हादेशे च अम्हो इति रूपम् ॥

[3] गिम्हो इति ॥ ग्रीष्मशब्दे ष्मस्य प्रकृतसूत्रेण म्हादेशे ‘ लवराधश्च ’ (प्रा. सू. १-४-७८) इति रलुकि ‘ संयोगे ’ (प्रा. सू.१-२-४०) इति ईकारस्य ह्रस्वे च गिम्हो इति रूपम् ॥

[4] समृद्ध्यादिरिति ॥ यथा समृद्ध्यादिगणप्रविष्टेषु समृद्ध्यादिपदेषु समिद्धी सामिद्धी इति ह्रस्वदीर्घघटितप्रयोगद्वयं भवति तथा ब्राह्मणशब्देऽपि बम्हणो बाम्हणो इति रूपद्वयमित्यस्य तात्पर्यं बोध्यम् । अन्यथाऽस्य यथाश्रुतार्थकत्वे ब्राह्मणशब्दस्यास्य समृद्ध्यादौ पाठाभावात् ‘ तु समृद्ध्यादौ ’ (प्रा. सू. १-२-१०) इत्यनेन ह्रस्वस्यैव दीर्घविधानाच्चानुपपन्नं स्यात् । अत एव च ‘ न वाऽव्ययोत्खातादौ ’ (प्रा. सू. १-२-३७) इति सूत्रे उत्खातादिगणे ‘ ब्राह्मणपूर्वाह्णावप्युत्खातादिः प्रकीर्तितस्तज्ज्ञैः ’ इति विकल्पेन दीर्घस्य ह्रस्वार्थं ब्राह्मणशब्दः पठित उपपन्नो भवतीति बोध्यम् ॥

[5] सरो रस्सीति ॥ स्मरशब्दे मकारस्य ‘ मनयाम् ’ (प्रा. सू. १-४-७९) इति लुग्बोध्यः । रश्मिशब्दे तु पूर्ववन्मकारस्य लुकि शकारस्य ‘ शोस्सल् ’ (प्रा. सू. १-३-८७) इति सत्वे ‘ शेषादेशस्य (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे च रस्सीति रूपम् ॥

## पक्ष्मणि ॥ १-४-४४ ॥

[1] पम्हो ॥

## [2] श्नष्णस्नह्नक्ष्णां ण्हः ॥ १-४-४५ ॥

**प्रश्नः-[3] पह्नो। विष्णुः-विण्हू । स्नातः-[4] ण्हाओ। [5] जन्हुः-जण्हू । पूर्वाह्नः-[6] पुव्वण्हो। तीक्ष्णः-[7] तिण्हो। [8] ज्योत्स्नादौ ण्ह एव न छ इष्यते ।**

---

[1] **पम्हो इति** ॥ पक्ष्मन् शब्दस्य नकारान्ततया 'स्नमदामशिरोनभो नरि' (प्रा. सू. १-१-४९) इति प्राकृते पुंस्त्वे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति नकारस्य लोपे प्रकृतसूत्रेण क्ष्मस्य म्हादेशे च पम्हो इति रूपम् ॥

[2] **श्नष्णेत्यादि** ॥ 'श्नष्णस्नत्स्नह्नह्लक्ष्णां ण्हः' (प्रा. सू १-४-६९) इति पाठस्य त्रिविक्रमवृत्तिचन्द्रिकादौ दर्शनादेतत्कोशदृश्यमानेऽस्मिन् सूत्रे त्स्नह्लशब्दौ लेखकप्रमादेन गलिताविति भाति। अत एवास्यामेव वृत्तौ 'पूर्वाह्लः पुव्वण्हो, ज्योत्स्ना-जोण्हा' इत्युदाहृतं च संगच्छते ॥

[3] **पह्नो इति** ॥ प्रश्नशब्दे श्नस्य प्रकृतसूत्रेण ण्हादेशे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि पण्हो इत्येव रूपं साधु। लेखकप्रमादेनात्र पह्नो इति पतितम् ॥

[4] **ण्हाओ इति** ॥ स्नातशब्दे प्रकृतसूत्रेण स्न्-इत्यस्य ण्हादेशे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारस्य लुकि च ण्हाओ इति रूपम् ॥

[5] **जन्हुरिति** ॥ प्रकृतसूत्रे ह्न-इत्यस्य स्थानित्वोत्कीर्तनात्संस्कृते जह्नुरित्येव रूपदर्शनाच्च जह्नुरित्येवात्र पाठस्साधीयान्। एवं पूर्वाण्ह इत्यत्रापि पूर्वाह्ल इत्येव पाठस्साधीयानिति बोध्यम् ॥

[6] **पुव्वण्हो इति** ॥ पूर्वाह्लशब्दे प्रकृतसूत्रेण ह्लस्य ण्हादेशे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना वकारस्य द्वित्वे उत्खातादिगणप्रविष्टत्वेनास्य 'न वाऽव्ययोत्खातादौ' (प्रा. सू. १-२-३७) इत्यनेन आकारस्य ह्रस्वपक्षे पुव्वण्हो इति रूपम्। ह्रस्वाभावपक्षे तु पुव्वाण्हो इत्यपि रूपान्तरं बोध्यम्। अत एव 'ब्राह्मणपूर्वाह्लावप्युत्खातादिः प्रकीर्तितस्तज्ज्ञैः' इत्युत्खातादिगणे पूर्वाह्लशब्दः संगृहीतोऽभियुक्तैः। तथा त्रिविक्रमदेवेनापि 'केचिद्ब्राह्मणपूर्वाह्लयोरपीच्छन्ति' इति तत्रैव सूत्रेऽभिहितं दृश्यते ॥

[7] **तिण्हो इति** ॥ तीक्ष्णशब्दे प्रकृतसूत्रेण क्ष्णस्य ण्हादेशे 'संयोगे' (प्रा. सू. १-२-४०) इति ईकारस्य ह्रस्वे तिण्हो इति रूपम् ॥

[8] **ज्योत्स्नादावित्यादि** ॥ यद्यपि ज्योत्स्नाशब्दे त्स्-इति संयुक्तनिबन्धनं 'ध्यश्चत्सप्सामनिश्चले' (प्रा. सू.१-४-२३) इत्यनेन त्स्-इत्यस्य छत्वं, तथा स्त्न्-

**जोण्हा। मृत्स्ना–मण्हा। [1]अगस्त्यादौ थ एव, न छः। अगत्थो। पुलस्त्यः–पुळत्थो। [2]लक्ष्मणादौ ख एव, न म्हः। लक्ष्मणः–ळक्खणो। लक्ष्म–ळक्खो। छोऽत्र विकल्पः। रतिलक्ष्म[3]रइळक्खो इत्यपि दर्शनात्। [4]मर्त्यादौ ट एव, न चः। मर्त्यः–मट्टो। अमर्त्यः–अमट्टो। [5]स्त्र्यङ्गमित्यादिप्रयोगात् न धत्वजत्वयौगपद्यादि। विस्तरो भाष्ये॥**

---

इति संयुक्तनिबन्धनं च 'श्नष्णस्नत्स्नह्नह्लक्ष्णां ण्हः' (प्रा. सू. १-४-६९) इत्यनेन त्स्न् इत्यस्य ण्हादेशश्च प्राप्तुमर्हति। तथाऽपि छत्वाप्राप्तियोग्ये लक्ष्येऽचारितार्थ्यरूपबाधबीजसत्त्वात् छत्वापवादत्वेन 'श्नष्णस्नत्स्न' (प्रा. सू. १-४ ६९) इत्यादिनैव त्स्न्-इति संयुक्तस्य ण्हादेश एवेति भावः॥

[1] **अगस्त्यादाविति**॥ यद्यपि अगस्त्यशब्दे संयुक्तसंज्ञकः स्त्-इत्येकः, त्य्-इत्यपरः, तत्र स्त्-इति संयुक्तनिबन्धनं 'स्तः' (प्रा. सू. १-४-४०) इति सूत्रेण थत्वं, त्य्-इति संयुक्तनिबन्धनं 'त्योऽचैत्ये' (प्रा. सू. १-४-१७) इत्यनेन चत्वं च प्राप्तुमर्हति, तथाऽपि प्रयोगानुरोधेन 'स्तः' (प्रा. सू. १-४-४०) इत्यस्य परत्वाच्च थत्वमेव भवतीति भावः॥

[2] **लक्ष्मणादाविति**॥ लक्ष्मणादिषु क्ष्-इति संयोगनिबन्धनस्य 'क्षः' (प्रा. सू. १-४-८) इति खत्वस्य क्ष्म्-इति संयोगनिबन्धनस्य 'श्मष्मस्म' (प्रा. सू. १-४-६७) इत्यादिना म्हादेशस्य च प्रसक्तौ प्रयोगानुरोधेनात्र पूर्वविप्रतिषेधात् खत्वमेव प्रवर्तते। तेन ळक्खणो इत्याद्येव रूपमिति भावः॥

[3] **रईत्यादि**॥ अत्र 'रइळच्छो' इति पाठः स्यात्। अत एव त्रिविक्रमवृत्तौ 'क्षः' (प्रा. सू. १-४-८) इति सूत्रे बहुलाधिकारात्क्वचित् छत्वमप्यनुमतं दृश्यते॥

[4] **मर्त्यादाविति**॥ मर्त्यादिषु शब्देषु त्य्-इति संयोगनिबन्धनस्य 'त्योऽचैत्ये' (प्रा. सू. १-४-१७) इति चत्वस्य, र्त्-इति संयोगनिबन्धनस्य 'र्तस्याधूर्तादौ टः। (प्रा. सू. १-४-३०) इति टत्वस्य च प्रसक्तौ प्रयोगानुसारादत्र परत्वाट्टत्वमेव प्रवर्तते' तेन मट्टो इत्याद्येव रूपमिति भावः॥

[5] **स्त्र्यङ्गमित्यादीति**॥ एकस्मिन् लक्ष्ये हल्चतुष्टयादिसंयोगस्थले प्रत्येकं हल्द्वयसंयोगनिमित्तकादेशद्वययौगपद्यं प्रयोगानुरोधान्नाङ्गीक्रियते। तेन स्त्र्यङ्गमित्यादौ स्त्-इति संयोगनिबन्धनस्य 'स्तः' (प्रा. सू. १-४-४०) इति थत्वस्य र्य्-इति संयोगनिबन्धनस्य 'द्यय्यर्यां जः' (प्रा. सू. १-४-२४) इति जत्वस्य च युगपत्प्रवृत्तिर्न भवतीति सिध्यतीति भावः। आन्ध्रलिपिमुद्रितसवार्तिकसूत्रपाठे तु 'कगटड' (प्रा. सू. १ ४-७७) इत्यादिसूत्रे 'स्त्र्यङ्कात्स्न्यादीनामनभिधानमिष्यते' इति वार्तिकदर्शनात् स्त्र्यङ्कात्स्न्यादिशब्दानामनभिधानमिति प्रतीयते॥

## सूक्ष्मे ॥ १-४-४६ ॥

क्ष्मस्य ण्हः स्यात् । [1] न तु खः । [2] सुण्हम् ॥ सूक्ष्मे वोतः (प्रा. सू. १-२-६६)। सूक्ष्मे ऊत ओत्वं वा स्यात् । [3] सोण्हम् ॥

## [4] सो बृहस्पतिवनस्पत्योः ॥ १-४-४७ ॥

[5] वा स्यात् । विहस्सई विहप्पई ॥

इति संयुक्तादेशप्रकरणम् ॥

---

[1] न तु ख इति ॥ सूक्ष्मशब्दे प्रतिपदोक्तत्वात्प्रकृतसूत्रेण ण्हादेश एव प्रवर्तते, न तु 'श्मष्मस्म' (प्रा. सू. १-४-६७) इत्यादिना खत्वमित्यर्थः ॥

[2] सुण्हमिति ॥ प्रकृतसूत्रेण क्ष्मस्य ण्हादेशे 'संयोगे' (प्रा. सू. १-२-४०) इत्योकारस्य ह्रस्वेनोत्वे च सुण्हमिति रूपम् ॥

[3] सोण्हमिति ॥ अत्र यद्वक्तव्यं तत् ५२तमपृष्ठे 'सूक्ष्मे इत्यादि' इति प्रतीके द्रष्टव्यम् ॥

[4] सो बृहस्पतीत्यादि ॥ एतत्सूत्रात्पूर्वं आश्लिष्टशब्दे संयुक्तयोर्यथाक्रमं लधादेशविधानेन आलिद्धो इति प्राकृतरूपसाधकं 'आश्लिष्टे लधौ' (प्रा. सू. १-४-७१) इत्येकं सूत्रं, तथा स्तब्धशब्दे संयुक्तयोः ठढादेशविधानेन प्राकृते ठड्डो इति रूपसाधकं 'ठढौ स्तब्धे' (प्रा. सू. १-४-७२) इत्यपरं सूत्रं, तथा आरब्धशब्दे रेफस्थानिकढादेशसंनियोगशिष्टपाक्षिकसंयुक्तस्थानिकतकारादेशविधानेन आढत्तो इति रूपसाधकं 'तो ढो रश्चारब्धे तु' (प्रा. सू. १-४-७३) इत्यन्यत्सूत्रमप्यधिकं सूत्रपाठे दृश्यते। यद्यप्यान्ध्रलिपिमुद्रितचन्द्रिकाकोशे 'आश्लिष्टे लधौ' (प्रा. सू. १-४-७१) इति सूत्रस्थाने 'आश्लिष्टे लटौ' इति पठित्वा 'ष्ट इत्यस्य टः' इति विवृतं च दृश्यते, तथाऽप्यस्यां वृत्तौ त्रिविक्रमवृत्तौ च 'लधौ' इत्येव पाठदर्शनाद्देवनागराक्षरमुद्रितचन्द्रिकाकोशे आलिद्धो इत्येवोदाहरणदर्शनाच्च तत्र लटाविति पाठो लेखकप्रमादाधीन इति संभाव्यते। युक्तं चैतत् । अन्यथा ष्टस्य टादेशविधाने 'कगटड' (प्रा. सू. १-४-७७) इत्यादिनैव षकारस्य लुकि टकारस्य द्वित्वे टद्वयघटितरूपसिद्ध्या टादेशविधानमेवानर्थकं स्यात् । यदि च 'ष्टः' (प्रा. सू. १-४-१४) इति सूत्रेण प्राप्तठादेशबाधनार्थं टादेशविधानमित्युच्येत, तर्हि त्रिविक्रमवृत्त्यादौ 'आलिद्धो' इत्युदाहरणं कथं संगच्छेत। किं च तत्रैव आन्ध्रलिपिमुद्रितचन्द्रिकायां अलिट्टो इत्युदाहरणप्रदर्शनमपि लेखकदोषाधीनमेव, दीर्घात्परत्वेन 'दीर्घान्न' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधस्य जागरूकतया 'संयोगे' (प्रा. सू. १-२-४०) इति सूत्रस्याप्रवृत्त्या ह्रस्वाभावेन सदीर्घस्य आलिद्दो इति रूपस्यैवौचित्यात्तथैव वृत्त्यादौ लिखितकोशेऽपि दर्शनाच्चेति विभावनीयम्॥

[5] वा स्यादिति ॥ 'तो ढो रश्चारब्धे तु' (प्रा. सू. १-४-७३) इति पूर्वसूत्राद्वा-

# अथ संयुक्तावयवलुक्प्रकरणम्.

## शोर्लुक्खोः स्तम्बसमस्तनिस्पृहपरस्परश्मशानश्मश्रुणि ॥१-४-४८॥

**एषु [1] स्तोः खोः शोर्लुक् स्यात् ॥**

---

र्थकतुशब्दानुवृत्त्या स्तोरित्यधिकाराच्च बृहस्पतिवनस्पतिशब्दघटकसंयुक्तस्य सकारादेशो वा भवतीति प्रकृतसूत्रार्थः । तथा च बृहस्पतिशब्दे वनस्पतिशब्दे च संयुक्तस्य स्पस्य सादेशे तस्य 'शेषादेशस्य' (पा. सू. १-४-८६) इत्यादिना द्वित्वे बिहस्सई वनस्सई इति रूपम् । अत्र 'बो वः' (प्रा. सू. १-३-३१) इत्यस्य आदिबकार-विषयेऽप्रवृत्तेर्वकारघटितोदाहरणलेखनं लेखकप्रमादाधीनमिति विभाव्यते ॥

बृहस्पतिशब्देऽस्मिन् ऋकारस्य 'तु बृहस्पतौ' (प्रा. सू. १-२-८५) इति सूत्रेण पर्यायेण इत्वोत्वात्वानां, तथा बकारहकारयोः 'भ्यौ बृहस्पतौ तु बहोः' (प्रा. सू. १-३-७५) इति सूत्रेण यथाक्रमं भकारयकारादेशयोः, तथैव संयुक्तस्य स्पस्य 'श्लेष्मबृहस्पतौ तु फोः' (प्रा. सू. १-४-४६) इति सूत्रेण पाक्षिकपकारादेशस्य, तदभावपक्षे च 'सो बृहस्पतिवनस्पत्योः' (प्रा. सू. २-४-७४) इति सूत्रेण सादेशस्य, ततो द्वित्वस्य, सादेशाभावपक्षे च 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सकारलुकः, तच्छेषपकारद्वित्वस्य च प्रवृत्त्या बिहप्फई बुहप्फई बहप्फई, भियप्फई भुयप्फई भयप्फई, बिहस्सई बुहस्सई बहस्सई, भियस्सई भुयस्सई भयस्सई, बिहप्पई बुहप्पई बहप्पई, भियप्पई भुयप्पई भयप्पई इति प्राकृतेऽष्टादश रूपाणि संपद्यन्त इति बोध्यम् ॥

इति संयुक्तादेशप्रकरणम् ॥

---

### अथ संयुक्तावयवलुक्प्रकरणम्.

[1] स्तोः खोः शोरिति ॥ पदानामेषां यथाक्रमं संयुक्तस्य आदेः शषसाना-मित्यर्थे सङ्केतोऽत्र कल्पितो बोध्यः । यद्यप्यत्र स्तम्बादिषु संयुक्तादिभूतस्य सकारस्य शकारस्य च वक्ष्यमाणेन 'कगटड' (प्रा. सू. १-४-७७) इत्यादिसूत्रेणैव लुक-स्सिद्धिः, तथाऽपि स्तम्बसमस्तशब्दयोः स्तस्य 'स्तः' (प्रा. सू. १-४-४०) इत्यनेन विशेषविहितस्य थादेशस्य, निस्पृहपरस्परशब्दयोः स्प्-इत्यस्य 'ष्पस्पोः फः' (प्रा. सू. १-४-४४) इति फादेशस्य, श्मशानश्मश्रुशब्दयोः श्मस्य 'श्मष्म' (प्रा. सू. १-४-६७) इत्यादिना म्हादेशस्य च 'कगटड' (प्रा. सू. १-४-७७) इत्यादिलुग्बाधकस्य बाधनार्थ-मिदं 'शोर्लुक्' इत्यादिसूत्रमिति विभाव्यते ॥

[1] तंबो । [2] खोः किम्? मस्तः ॥

[3] कगटडतदपऽकऽपशोरुपर्यद्रे ॥ १-४-४९ ॥

[4] संयोगे प्रथमोच्चार्यमाणानामेषां लुक्स्यात् । युक्तं--[5] जुत्तम् ।

---

[1] तंवो इति ॥ शिष्टानां समस्तनिस्पृहपरस्परश्मशानश्मश्रुशब्दानां च समत्तो णिप्पिहो परोप्परं मसाणं मंसू इति प्राकृते सिद्धरूपाणि बोध्यानि ॥

[2] खोः किमित्यादि ॥ अत्र खोरित्यस्य सूत्रेऽभावेऽपि मस्त इत्यस्य सूत्रोपात्त-स्तम्बाद्यघटकतयाऽतिप्रसक्त्यभावादिदं लेखकप्रमादायातमिति भाति । परं त्वत्र 'स्तोः किम्? समस्तः' इति पाठाभ्युपगमे च स्तोरित्यभावे समस्तशब्देऽसंयुक्तसकारस्यादिः भूतस्यापि लुक् स्यादिति तद्वारणेन स्तोरिति सफलं भवतीत्युपपन्नं भवति ॥

[3] कगटडेत्यादि ॥ एतत्सूत्रात्पूर्वं हरिश्चन्द्रशब्दे श्चस्य लुग्विधानेन हरिअंदो इति प्राकृतरूपसाधकं 'श्चस्य हरिश्चन्द्रे' (प्रा. सू. १-४-७६) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[4] संयोगे प्रथमोच्चार्यमाणानामिति ॥ स्तोरित्यधिकारात् 'संयोगे' इति, सूत्रस्थोपरिशब्देन प्रथमोच्चार्यमाणानामिति चार्थो लभ्यत इति भावः । देवनागरेतरकर्णाटादिलिपिलेखनक्रमाभिप्रायेणात्र सूत्रे उपरीत्युक्तमिव भाति । तच्च सर्वलिपिलेखनक्रमसाधारण्यसंपादनायात्र वृत्तौ प्रथमोच्चार्यमाणानामिति विवृतं दृश्यते ॥

[5] जुत्तमित्यादि ॥ युक्तशब्दे प्रकृतसूत्रेण संयुक्तावयवककारस्य लुकि शेषस्य तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे 'आदेर्जः' (प्रा. सू. १-३-७४) इति जकारस्य यकारो बोध्यः । एवं दुग्धशब्दे संयुक्तावयवगकारस्य शेषस्य च लुग्द्वित्वयोः पूर्वधकारस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयतृतीयवर्णादेशो बोध्यः । तथा षट्पदशब्दे संयुक्तावयवटकारस्य लुकि शेषस्य द्वित्वे 'छल् षट्छमी' (प्रा. सू. १-३-९०) इत्यादिना षस्य छत्वे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना दकारस्य लुग्बोध्यः । एवं खड्गोत्पलमद्गुसुप्तशब्देषु संयुक्तादिभूतडकारतकारदकारपफाराणां लुक् शेषद्वित्वं च बोध्यम् । तथा दुःखशब्दे जिह्वामूलीयस्य लुकि शेषस्य खस्य द्वित्वे पूर्वस्य तद्वर्गीयप्रथमवर्णादेशो बोध्यः । तथैव अन्तःपातनिश्चलगोष्ठस्खलितशब्देषु संयुक्तेष्वादिभूतानां उपध्मानीयशकारषकारसकाराणां लुकि शेषस्य द्वित्वादि बोध्यम् ॥

दुग्धं-दुद्धम् । षट्पदः-छप्पओ । खड्गः-खग्गो । उत्पलं-उप्पळं । मद्गुः-मग्गू । सुप्तः-सुत्तो । ≍क≍पौ जिह्वामूलीयोपध्मानीयौ । दु≍खं-दुक्खम् । अन्त≍पातः-अन्तप्पाओ । निश्चलं-निच्चळम् । ष, गोष्ठं-गोट्ठं । स, स्खलितः-खळिओ । [1] अद्रे किम्? समुद्रः-समुद्दो ॥

(वा) [2] श्च्योततिस्नेहादौ लुग्वाचः ।

चुअइ । णेहो ॥

## लवरामधश्च ॥ १-४-५० ॥

संयोगे [3] प्रथमं पश्चाद्वा उच्चार्यमाणानां लवरां लुक्स्यात् । अधः, श्लक्ष्णं-[4] सण्हम् । [5] सापेक्षया परत्वाल्ललोप एव ॥

---

[1] अद्रे किमिति ॥ यद्यप्यत्र अद्रे इत्यनुक्तावपि समुद्रादिशब्देषु द्रशब्द-घटितेषु वक्ष्यमाणस्य 'धात्रीद्रे रस्तु' (प्रा. सू. १-४-८०) इत्यनेन विहितस्य रेफलुक एव परत्वाद्विशेषविहितत्वाच्च प्रवृत्तिर्दुर्वारा, तथाऽपि तस्य वैकल्पिकत्वाद्रलुगभाव-पक्षेऽत्र अद्रे इत्यनुक्तौ दकारस्य लुक्स्यादिति तद्वारणार्थमद्रे इत्युक्तिरिति बोध्यम् । तेन समुद्रो समुद्दो इत्यादि प्राकृते रूपद्वयं निर्बाधम् ॥

[2] श्च्योततिस्नेहादाविति ॥ श्च्योततीत्यादौ 'थ्यश्चत्सप्सामनिश्चले' (प्रा. सू. १-४-२३) इति श्चस्य छादेशस्य, स्नेह इत्यत्र 'श्नष्णस्न' (प्रा. सू. १-४-६९) इत्यादिना स्नो ण्हादेशस्य च प्राप्तावपि प्रयोगानुरोधादत्र 'कगटड' (प्रा. सू. १-४-७७) इत्यादिसूत्रेणैव शकारसकारयोर्लुग्भवतीति भावः । ततश्च श्च्योततौ 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना शस्य लुकि 'मनयाम्' (प्रा. सू. १-४-७९) इति यकारस्य लुकि 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारद्वयस्य लुकि च चुअइ इति रूपम् । एवं स्नेहशब्दे सकारस्य लुकि नकारस्य 'नः' (प्रा सू. १-३-९२) इति सूत्रेण णत्वे णेहो इति रूपं बोध्यम् ॥

[3] प्रथमं पश्चाद्वेति ॥ सूत्रेऽस्मिन् अधश्चेति चकारात्पूर्वसूत्रादुपरीत्यस्याप्यनु-वृत्त्याऽयमर्थो लभ्यत इति भावः । अत्र संयुक्तवर्णेषु प्रथमोच्चार्यमाणस्योपरिस्थता पश्चादुच्चार्यमाणस्य अधस्स्थता च बोध्या ॥

[4] सण्हमिति ॥ श्लक्ष्णशब्दे अधस्तनस्य लकारस्य प्रकृतसूत्रेण लुकि शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सत्वे क्ष्णशब्दस्य 'श्नष्णस्न' (प्रा. सू. १-४-६९) इत्यादिना ण्हादेशे च सण्हमिति रूपम् ॥

[5] सापेक्षया परत्वादिति ॥ श्लक्ष्णशब्दे 'कगटड' (प्रा. सू. १-४-७७)

[1] पक्कं-पिक्कम् । चक्रं-[2] चक्कं । उपरि, उल्का-[3] उक्का । बवयोरभेदात् शब्दः-[4] सद्दो । अर्कः-अक्को ॥

## मनयाम् ॥ १-४-५१ ॥

[5] संयोगे पश्चादुच्चार्यमाणानामेषां लुक्स्यात् । युग्मं-[6] जुग्गं लग्नं-ळग्गं । मूल्यं-[7] मुळ्ळं ।

---

इत्यादिना उपरिस्थशकारलुकः 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्यनेन अधस्तन-लकारलुकश्च प्रसक्तौ परत्वाल्लकारस्यैव 'लवरामधश्च (प्रा. सू. १-४-७८) इति लुगिति भावः । अतोऽत्र 'सापेक्षया' इत्यत्र 'शलुगपेक्षया' इति पाठः स्यात् ॥

[1] पिक्कमिति ॥ पक्वशब्दे पूर्ववद्वकारस्य लुकि शेषस्य कस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे 'पक्वाङ्गारललाटे तु' (प्रा. सू. १-२-१२) इत्यादेरकारस्येत्वे पिक्कमिति रूपम् ॥

[2] चक्कमिति ॥ चक्रशब्दे पूर्ववत्परत्वाद्रेफस्य लुकि शेषस्य कस्य द्वित्वं बोध्यम् ॥

[3] उक्केत्यादि ॥ उल्कार्कशब्दयोरुपरिस्थलकाररेफयोर्लुकि शेषस्य ककारस्य द्वित्वे उक्का अक्को इति रूपं बोध्यम् ॥

[4] सद्दो इति ॥ शब्दशब्दे बकारस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति सूत्रे वग्रहणेन 'बवयोरभेदः' इति न्यायमाश्रित्य बकारस्यापि ग्रहणात् लुकि शेषस्य दकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे शकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वे सद्दो इति रूपं बोध्यम् ॥

[5] संयोगे पश्चादुच्चार्यमाणानामिति ॥ स्तोरित्यधिकारात् संयोग इति पूर्वसूत्रात् अध इत्यानुवृत्त्या पश्चादुच्चार्यमाणानामिति चार्थो लभ्यत इति भावः ॥

[6] जुग्गमिति ॥ युग्मशब्दे प्रकृतसूत्रेण मकारस्य लुकि शेषस्य द्वित्वे 'आदेर्जः' (प्रा. सू. १-३-७३) इति यकारस्य जकारादेशे जुग्गमिति रूपम् ॥

[7] मुळ्ळमिति ॥ मूल्यशब्दे 'अमात्यः-अमच्चो' इत्यादाविव प्रयोगानुरोधादा-दावेव 'संयोगे' (प्रा. सू. १-२-४०) इत्यूकारस्य ह्रस्वे ततः प्रकृतसूत्रेण संयुक्ताधस्त-नयकारस्य लुकि शेषस्य द्वित्वे मुळ्ळमिति रूपम् ॥

## वा–[1] णस्योपसङ्ख्यानम् ।

**रुग्णः—लुग्गो ॥**

[2] **तस्य चोपसङ्ख्यानमभिज्ञाद्यर्थम् ॥**

[3] **कगटडेत्याद्येतत्सूत्रत्रयविषयाणां मिथोयोगे यत्परं तल्लुप्यते ॥**

**पक्वं–पिक्कं । उग्रः–उग्गो । त्रैलोक्यं–[4] तेळोक्कम् । काव्यं–कव्वम्, इत्यादि ॥**

[5] **अत्रैकसूत्रविषयेष्वपि मिथोयोगे यत्परं तल्लुप्यते ॥**

**पल्वलं–पळ्ळळं । व्रजः–वजो ॥**

---

[1] **णस्येत्यादि** ॥ संयुक्ताधस्तनणकारस्यापि लुग्वक्तव्य इत्यर्थः ॥

[2] **तस्य चेत्यादि** ॥ अत्र ञस्य चेति पाठस्साधीयान् । अभिज्ञादौ ञस्य संयुक्ताधस्तनस्य लुग्वक्तव्य इति तदर्थो बोध्यः ॥

[3] **कगटडेत्याद्येतत्सूत्रेत्यादि** ॥ एकस्मिन् लक्ष्ये 'कगटड' (प्रा. सू. १-४-७७) 'लवरामधश्च' (प्रा. सू. १-४.७८) 'मनयाम्' (प्रा. सू. १.४.७९) इति सूत्रत्रयविषये द्वयोः त्रयाणां वा प्रसक्तौ अनुक्तमन्यशब्दानुशासनवत् (प्रा. सू. १-१-७) इत्यत्रत्यसूत्रबलात् पाणिनीयव्याकरणानुसरणस्य अनुमतत्वेन 'विप्रतिषेधे परं कार्यं' (पा. सू. १-४-२) इति पाणिनीयव्यवस्थयाऽत्रापि परस्यैव प्रवृत्तिरित्यर्थः । ततश्च पक्कमित्यादौ 'कगटड' (प्रा. सू. १-४-७७) इत्यनेन ककारलुकः 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्यनेन वकारलुकश्च प्रसक्तौ पूर्वप्रदर्शितविप्रतिषेधन्यायात् परस्यैव वकारलुकः प्रवृत्तिरित्यर्थः ॥

[4] **तेळोक्कमिति** ॥ त्रैलोक्यशब्दे परत्वात् 'मनयाम्' (प्रा. सू. १-४-७९) इति यकारस्य लुकि कस्य शेषद्वित्वे 'ऐच एङ्' (प्रा. सू. १-२-१०७) इति ऐकारस्य एकारे तेलोक्कमिति रूपम् । त्रैलोक्यशब्दस्य प्रमुक्तादिपाठात् 'प्रमुक्तगे' (प्रा. सू. १-४.९१) इति सूत्रेण लकारस्यापि द्वित्वपक्षे तेल्लोक्कमित्यपि रूपान्तरं बोध्यम् ॥

[5] **अत्रैकसूत्रेत्यादि** ॥ उद्देश्यभेदेन विधिभेदादेकसूत्रोपात्तेष्वपि पूर्वोक्तरीत्या परविधेरेव प्रवृत्तिरिति भावः । तेन पल्वलादिशब्देषु 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्येकसूत्रप्रवृत्तावपि तत्र लकारोत्तरोच्चार्यमाणवकारोद्देश्यकलुक एव परत्वात्प्रवृत्तिर्न तु लकारलुक इति पल्ललमित्यादिरूपसिद्धिः ॥

[1] परलोपविषयेऽपि शेष एव लुप्यते पूर्वविप्रतिषेधेन। कर्म–कम्मो। कर्णः–कण्णो॥

[2] रययोगे ज एव, अन्यतरलोपं प्रति सङ्घातादेशस्यापवादत्वात्। कार्य–कज्जम्॥

[3] लवयोरपि क्वचित्पूर्वविप्रतिषेधेन॥

गुल्मः–गुम्मो। कल्मषं–कम्मसम्। कण्वः–कण्णो। शुल्वं–सुव्वम्॥

[4] क्वचिदित्येव। व्यवसायः–व्ववसाओ। व्ययः–वओ, इत्यादि॥

---

[1] परलोपविषयेऽपि शेष एवेत्यादि॥ 'विप्रतिषेधे परं' (पा. सू. १-४-२) इत्यत्र लक्ष्यानुरोधेन क्वचित्पूर्वकार्यस्यापीष्टतया तत्रत्यपरशब्दस्य इष्टवाचित्वात्क्वचित्पूर्वकार्यस्याप्यभ्यनुज्ञानस्य भगवत्पतञ्जलिभाषितत्वेन रेफलुग्विषये तत्परविधेः प्राबल्याभावेन रेफस्य लुगेव लक्ष्यानुरोधादङ्गीक्रियत इति भावः। तेन कर्मादिशब्देषु 'लवराम्' (प्रा.सू. १-४-७८) इति पूर्वसूत्रस्यैव प्रवृत्तिः, न तूत्तरस्य 'मनयाम्' (प्रा.सू. १-४-७९) इत्यस्येति कम्मो इत्यादि रूपं सिध्यति। ततश्चात्र 'शेष एव' इत्यत्र 'रेफ एव' इति पाठः साधुरिति भाति॥

[2] रययोग इत्यादि॥ रेफयकारयोः संयोगे पूर्वोक्तरीत्या पूर्वविप्रतिषेधेन रेफलुकः प्रसक्तावपि 'द्यय्यर्यां जः' (प्रा. सू. १-४-२४) इति र्यादेशतया विधीयमानजादेशस्य लुगप्राप्तियोग्यलक्ष्यासम्भवेन 'र्य' इति संयोगविशेषोपादानाच्च जादेशस्य लुगपवादत्वमिति भावः। तेन कार्यमित्यादौ 'लवरामधश्च' (प्रा. सू. १-४-७८) 'मनयाम्' (प्रा. सू. १-४-७९) इत्यस्य चाप्रवृत्त्याऽपवादत्वात 'द्यय्यर्यां जः' (प्रा. सू. १-४-२४) इति जादेशस्यैव प्रवृत्त्या कज्जमित्यादिरूपं सिध्यति॥

[3] लवयोरपीत्यादि॥ यथा रेफविषये 'मनयाम्' (प्रा. सू. १-४-७९) इत्यस्य परस्यापि दौर्बल्यं, तथा लकारवकारविषयेऽपि क्वचिद्दौर्बल्यं पूर्वविप्रतिषेधन्यायादङ्गीकार्यमिति भावः। तेन क्वचिद्गुल्मादिशब्दविषये परस्यापि 'मनयाम्' (प्रा. सू. १-४-७९) इत्यस्याप्रवृत्त्या पूर्वस्यापि 'लवराम्' (प्रा. सू. १-४-७८) इत्यस्यैव पूर्वविप्रतिषेधाङ्गीकारात्प्रवृत्त्या गुम्मो इत्यादिरूपं सिध्यति॥

[4] क्वचिदित्येवेति॥ 'क्वचित्पूर्वविप्रतिषेधेन' इत्युक्त्या व्यवसायादिशब्देषु परविप्रतिषेधात् 'मनयाम्' (प्रा. सू. १-४-७९) इत्यस्य परस्यैव प्रवृत्तिरिति ववसाओ इति रूपसिद्धिरिति भावः॥

## (वा) [1] द्वादशादौ दस्य लुग्वाच्यः ॥

द्वादश–वादह । द्वाविंशतिः–[2] वावीसा । द्वात्रिंशत्–[3] वातीसा ॥

## (वा) [4] द्वितीयादौ पर्यायेणोभयलोपो वाच्यः ॥

द्वितीयः-विईओ दुईओ। द्विगुणः दुउणो, विउणो। उद्विग्नः–[5] उद्दिग्गो, उव्विग्गो ॥

## [6] द्वोर्द्वारे ॥ १–४–५२ ॥

---

[1] **द्वादशादाविति** ॥ द्वादशादिशब्देषु 'लवराम' (प्रा. सू. १-४-७८) इत्यस्य परत्वेऽपि पूर्वस्यैव 'कगटड' (प्रा. सू. १-४-७७) इत्यस्य प्रवृत्त्या दकारस्यैव लुक्। ततः 'प्रत्यूषदिवसदशपाषाणे तु हः' (प्रा.सू. १-३-८८) इति शस्य हत्वे वादह इति रूपम् ॥

[2] **वावीसेति** ॥ द्वाविंशतिशब्दे पूर्वप्रदर्शितरीत्या 'कगटड' (प्रा. सू. १ ४-७७) इत्यादिना दलोपे 'विंशत्यादिषु त्या श्लोपल' (प्रा. सू. १-१-४८) इत्यनेन बिन्दोः तिशब्दस्य च लोपे तस्य शित्त्वात्पूर्वस्य दीर्घे 'शोस्सल' (प्रा. सू. १-३८७) इति शस्य सादेशे वावीसेति रूपम् ॥

[3] **वातीसेति** ॥ द्वात्रिंशच्छब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुग्बोध्यः । शेषं द्वाविंशतिशब्दवत् ॥

[4] **द्वितीयादावित्यादि** ॥ इदं च द्वितीयादिशब्देषु 'कगटड' (प्रा. सू. १-४-७७) 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्यनयोः पर्यायेण प्रवृत्त्यभ्यनुग्राहकम् । द्वितीयादिशब्देषु दकारवकारयोः पर्यायेण लोपो वाच्य इत्यर्थः । तेन द्वितीयशब्दे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना दलोपपक्षे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारयकारयोर्लोपे विईओ इति रूपम् । 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वकारलोपपक्षे तु 'द्विनीक्षुप्रवासिषु' (पा. सू. १-२-४९) इतीकारस्योत्वे दुईओ इति रूपं बोध्यम् । द्विगुणशब्दे 'प्रायो लुक्' (पा. सू. १-३-८) इत्यादिना गकारलुग्बोध्यः ॥

[5] **उद्दिग्गो उव्विग्गो इति** ॥ उद्विग्नशब्दे पूर्वोक्तरीत्या दलोपपक्षे वकारस्य शेषद्वित्वे 'मनयाम्' (प्रा. सू. १-४-७९) इति नकारस्य लुकि गकारस्यापि शेषद्वित्वे उव्विग्गो इति रूपम् । तत्रैव वलोपपक्षे तु दकारस्य शेषद्वित्वे पूर्ववन्नकारस्य लुकि गकारस्य द्वित्वे च उद्दिग्गो इति रूपम् ॥

[6] **द्वोर्द्वार इति**॥ एतत्सूत्रात्पूर्वं धात्रीचन्द्रादिशब्देषु रेफस्य वैकल्पिकलुग्विधानेन धत्ती धारी धाई, चन्द्रो चन्दो इति रूपसाधकं 'धात्रीद्रे रस्तु' (प्रा.सू. १-४-८०) इत्येकं

पर्यायेण लुग्वा स्यात्। दारं वारम्। [1]पक्षे दुवारम्। 'वा ऽद्भ्र' (प्रा. सू. १-४-१०९) इत्यादिना वात् प्रागुत्वम् ॥

इति संयुक्तावयवलुक्प्रकरणम्.

---

## अथ द्वित्वप्रकरणम्.

### [2]रितो द्वित्वल् ॥१-४-५३॥

लित्त्वान्नित्यम्। करणीयं--[3]करणिज्जम् ॥

---

सूत्रं, तथा मध्याह्नविज्ञानशब्दयोः हकारञकारयोः वैकल्पिकलुग्विधानेन मज्झण्णो मज्झण्हो, जाणं णाणं इति रूपद्वयसाधकं 'हस्य मध्याह्ने' (प्रा. सू. १-४-८१) 'ज्ञो जोऽविज्ञाने' (प्रा.सू. १ ४-८२) इति सूत्रद्वयं चाधिकं सूत्रपाठे दृश्यते। सूत्रे द्वोरित्यस्य दकारवकारयोरित्यर्थः ।

[1] पक्ष इति ॥ दकारवकारयोरुभयोर्लुको वैकल्पिकतया तदुभयाभावपक्ष इत्यर्थः॥

इति संयुक्तावयवलुक्प्रकरणम्.

---

अथ द्वित्वप्रकरणम्.

[2] रितो द्वित्वलिति ॥ एतत्सूत्रात्पूर्वं रात्रिशब्दे संयुक्तलुग्विधानेन राई रत्ती इति रूपद्वयसाधकं 'रात्रौ' (प्रा. सू. १-४-८४) इत्येकं सूत्रं दृश्यते। प्रकरणादादेशव्यञ्जनस्येति लभ्यते। 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इति परिभाषणान्नित्यमिति लभ्यते। रित आदेशव्यञ्जनस्य नित्यं द्वित्वं भवतीति प्रकृतसूत्रस्यार्थः। उत्तरत्र 'वा से' (प्रा. सू. १-४-९०) इति सूत्रेण समासे द्वित्वस्य वैकल्पिकतया विधानात् तद्बाधनाय रित्कादेशव्यञ्जनविषये नित्यत्वार्थमत्र द्वित्वलिति लित्करणं कृतम्। अत्र मुद्रितत्रिविक्रमवृत्तिटिप्पणे रितो द्वित्वलित्यस्य 'परिभाषाप्रकरणमनादृत्य अत्र पाठे मूलं मृग्यम्' इत्युक्तिश्चिन्त्या। एतत्सूत्रस्य द्वित्वविधायकतया द्वित्वलित्यस्योत्तरत्रानुवृत्त्यर्थं च लाघवात् द्वित्वप्रकरणपाठस्यैवोचितत्वात् ॥

[3]करणिज्जमिति ॥ करणीयशब्दे य-इत्यस्य अनीयप्रत्ययसंबन्धितया 'यो जर्तीयानीयोत्तरीयकृद्येषु' (प्रा. सू. १-३-६८) इत्यनेन जरादेशे रेफस्येत्वान्निवृत्तौ रित्त्वादादेशस्य प्रकृतसूत्रेण द्वित्वे 'संयोगे' (प्रा. सू. १-२-४०) इति पूर्वस्य ह्रस्वे करणिज्जमिति रूपं बोध्यम्। नन्वत्र जस्यादेशतया 'शेषादेशस्य' (प्रा. सू. १-४-८६)

## शेषादेशस्याह्रोऽचोऽखोः ॥१–४–५४ ॥

[1] युक्तस्य हलः कगटडादेर्लोपे योऽवशिष्यते स शेषः तस्य, संयुक्तादेशस्य च द्वे स्तः । भुक्तं–[2] भुत्तम् । अद्य–[3] अज्ज । अह्र एव, विह्वलः–[4] विहणो । 'लवराम' (प्रा. सू. १-४-७८) इति लुक् । धात्री–धारी । 'धात्रीद्रे रस्तु' (प्रा. सू. १-४-८०) इति [5] रलुगभावे तलुक् । अचः किम् ? कांस्यं कंसं । अखोः किम् ? एष स्खलितः–एस खलिओ ॥

## दीर्घान्न ॥ १–४ ५५ ॥

---

इत्यादिनैव द्वित्वसिद्ध्या 'रितो द्वित्वल्' (प्रा. सू. १-४-८५) इत्यस्य कथसिद्धमनन्यथासिद्धमुदाहरणमिति चेन्न । 'ऊत्वं सुभगदुर्भगे वः' (प्रा. सू. १-३-१८) इत्याद्यसंयुक्तादेशविषये द्वित्ववारणाय शेषादेशस्येत्यत्रत्यादेशपदस्य संयुक्तादेशपरत्वात्तेनात्र द्वित्वस्याप्राप्तिरित्याशयात् । समासे 'वा से' (प्रा. सू. १-४-९०) इति प्राप्तविकल्पबाधनार्थं च प्रकृतसूत्रे लित्करणमिति बोध्यम् ॥

[1] **युक्तस्येत्यादि** ॥ शेषश्चादेशश्च अनयोस्समाहारः, तस्येति विग्रहः, एवमह्र इत्यत्र ह् र् इत्यनयोस्समाहारः, ततो नञ्समासात् षष्ठी, हकाररेफान्यतरभिन्नस्येति तदर्थः । इदं अनादेरित्यर्थकमखोरितिपदं च शेषादेशस्येत्यनेन समानाधिकरणम् । अच इति पञ्चम्यन्तम्, 'तस्मादित्युत्तरस्य' (पा. सू. १-१-६७) इति पाणिनीयानुरोधेन परस्येति लभ्यते । तथा च हकाररेफान्यतरभिन्नस्य अनादेः अचः परस्य शेषादेशान्यतरस्य द्वित्वं भवतीति सूत्रार्थो बोध्यः ॥

[2] **भुत्तमिति** ॥ इदं च शेषस्येत्यस्योदाहरणम् । भुक्तशब्दे 'कगटड' (प्रा.सू. १-४-७७) इत्यादिना ककारस्य लुकि शिष्टस्य तकारस्य प्रकृतसूत्रेण द्वित्वे भुत्तमिति रूपम्॥

[3] **अज्जेति** ॥ अद्यपदे द्य–इत्यस्य 'द्ययर्यां जः' (प्रा.सू. १-४-२४) इति जादेशे तस्यासंयुक्तादेशत्वेन प्रकृतसूत्रेण द्वित्वे अज्जेति रूपम् । आदेशस्य द्वित्वोदाहरणमेतत् ॥

[4] **विहणो इति** ॥ विह्वलशब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वकारस्य लुकि हकारस्य शिष्टत्वेऽप्यत्र सूत्रे अह्र इति पर्युदासात् तस्य द्वित्वाभावे विहलो इति रूपं बोध्यम् । अत्र विहणो इति णकारघटितरूपोदाहरणे प्रमाणं मृग्यम् । त्र्यादावपि विहलो इत्येवोदाहृतं च । अस्यैव विह्वलशब्दस्य 'वश्च विह्वले' (प्रा. सू. १-४-१२) इति सूत्रेण संयुक्तावयववस्य भादेशच्छादेशयोरपि पाक्षिकत्वेन प्रवृत्त्या विब्भलो विच्छलो इत्यन्यदपि रूपद्वयं बोध्यम् ॥

[5] **रलुगभाव इति** ॥ रलुक्पक्षे तु शिष्टस्य तकारस्य द्वित्वेन धत्तीति रूपं बोध्यम्॥

निश्वासः [1] णीसासो। पार्श्वं-[2] पासम् ॥

(वा) अमात्यादिषु [3] प्रागेव ह्रस्वो वाच्यः ॥

अमच्चो। दीर्घः-[4] दिग्घो। व्याघ्रः-[5] वग्घो ॥

## वा से ॥ १-४-५६ ॥

समासे द्वित्वमुक्तं वा स्यात्। [6] हरस्कन्दौ-हरक्खन्दा हरखन्दा। समासे [7] अवश्यवाच्याद्वृत्तवार्तिककृतपदविकल्पादेव उक्तरूपद्वयनिष्पत्तिसम्भवाद्व्यर्थोऽयं योग इति ध्येयम् ॥

---

[1] णीसासो इति ॥ निश्वासशब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वलुगनन्तरं 'शोर्लुप्तयवरशोर्दिः' (प्रा. सू. १-२-८) इति इकारस्य दीर्घे दीर्घात्परत्वेन लुकि शिष्टस्य 'दीर्घान्न' (प्रा. सू. १-४-८७) इति द्वित्वनिषेधात् द्वित्वाभावे 'शोस्सल्' (प्रा. सू. १-४-७८) इति शस्य सत्वे 'नः' (प्रा. सू. १-३-५२) इति नकारस्य णत्वे च णीसासो इति रूपं बोध्यम् ॥

[2] पासमिति ॥ पार्श्वशब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफवकारयोर्लुकि पूर्ववच्छिष्टस्य द्वित्वाभावे शकारस्य सत्वे च पासमिति रूपम् ॥

[3] प्रागेवेति ॥ अमात्यादिषु लक्ष्यानुरोधात् आदेशात्पूर्वमेव प्रकृतिसिद्धसंयोगमादाय 'संयोगे' (प्रा. सू. १-२-४१) इति ह्रस्वे ततः 'त्योऽचैत्ये' (प्रा. सू. १-४-१७) इति चादेशे दीर्घाभावान्निषेधाप्रवृत्त्या आदेशस्य चस्य द्वित्वे अमच्चो इति रूपम् ॥

[4] दिग्घो इति ॥ दीर्घशब्दे पूर्ववत्प्रागेव ह्रस्वे ततो रेफस्य लुकि शिष्टस्य घस्य द्वित्वे पूर्वस्य तद्वर्गीयतृतीयवर्णादेशे दिग्घो इति रूपम् ॥

[5] वग्घो इति ॥ व्याघ्रशब्दे पूर्ववत्प्रागेव ह्रस्वे यकाररेफयोः 'मनयाम्' (प्रा. सू. १-४-७९) 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि शिष्टस्य द्वित्वे पूर्वस्य तद्वर्गीयतृतीयवर्णादेशे वग्घो इति रूपम् ॥

[6] हरक्खन्दौ इत्यादि ॥ हरस्कन्दशब्दे स्क-इत्यस्य 'स्कन्दतीक्ष्णशुष्के तु खोः' (प्रा. सू. १-४-१०) इति खत्वे प्रकृतसूत्रेण द्वित्वस्य वैकल्पिकत्वादादेशस्य द्वित्वपक्षे पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे हरक्खन्दा इति, द्वित्वाभावपक्षे च हरखन्दा इति च रूपम् ॥

[7] अवश्यवाच्यादित्यादि ॥ सभिक्खू सभिक्खू, सजणो सज्जणो, तगुणा तग्गुणा इत्यादिरूपसिद्धये त्रिविक्रमदेवेन 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५)

## [1] प्रमुक्तगे ॥ १-४-५७॥

द्वित्वं वा स्यात् । [2] पम्मुक्को पमुक्खो । 'कश्शक्तमुक्त' (प्रा.सू. १-४-४) इत्यादिना कः । त्रैलोक्यवद्धफलशिखरखण्डसपिपासप्रतिकूलसपरिताप-दर्शनो[3]त्पलपलाशपरवशप्रफुल्लसपरिहासाः । एषु द्वितीयपदादेर्द्वित्वम् ॥

---

इति सूत्रे समासे समुदायस्य खण्डद्वयस्य च पदत्वमिति विवक्षाभेदेन लक्ष्यानुरोधा-दङ्गीकर्तव्यमित्युक्त्या तद्वदत्रापि समुदायस्यैव पदत्वमिति विवक्षायां हरस्कन्द-शब्दस्यैकपदत्वेन संयुक्तस्य स्कस्य अनादित्वात् 'शेषादेशस्य' (प्रा. सू. १-४-८६) इति द्वित्वप्रवृत्त्या हरक्खन्दा इति रूपस्य, खण्डद्वयस्यापि पदत्वविवक्षापक्षे समा-सावयवस्कन्दशब्दस्यापि पदत्वात् तद्गतस्य स्क्—इति संयोगस्य आदितया अनादे-रित्यर्थकादखोरिति पर्युदासाद्द्वित्वाप्रवृत्त्या हरखन्दा इति रूपस्य च सिद्ध्या समासे द्वित्वविकल्पविधेरन्यथासिद्ध्या 'वा से' (प्रा. सू. १-४-९०) इति समासे द्वित्व-विकल्पविधायकमिदं सूत्रं व्यर्थमित्याशयः ॥

[1] प्रमुक्तग इति ॥ 'गो गणपरः' (प्रा. सू. १-१-१०) इति सूत्रेण ग-शब्दस्य गणबोधकतया प्रमुक्तादिगण इत्यर्थलाभः । 'रितो द्वित्वल्' (प्रा.सू. १-४-८५) इत्यतः द्वित्वपदस्य 'वा से' (प्रा. सू. १-४-९०) इति सूत्रस्य चानुवृत्तिः । सूत्रे उद्देश्य-वर्णविशेषानुपादानात् प्रमुक्तादिगणघटकसपिपासादिशब्देषु शेषादेशरूपव्यञ्जनाभावाच्च त्रिविक्रमदेवोक्तरीत्या यथालक्ष्यदर्शनं व्यञ्जनस्य द्वित्वमिति लभ्यते । तथा च प्रमुक्तादि-गणघटकशब्दघटकयावद्व्यञ्जनस्य यथालक्ष्यदर्शनं द्वित्वं वा भवतीत्येतत्सूत्रार्थः ॥

[2] पम्मुक्खो इति ॥ अत्र खत्वविधायकशास्त्रानुपलम्भात् 'कश्शक्तमुक्त' (प्रा. सू. १-४-४) इत्यादिना संयुक्तस्य 'क्त' इत्यस्य कादेशस्यैव विधानात् त्रिविक्रम-वृत्तिचन्द्रिकादावपि कद्वयघटितस्यैवोदाहरणाच्च खकारघटितलेखनं लेखकप्रमाद-जनितमिति भाति । ततश्च प्रमुक्त इत्यत्र 'कः शक्त' (प्रा. सू. १-४-४) इत्यादिना क्तस्य कादेशे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे प्रकृतसूत्रेण मकारस्य द्वित्वे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफलोपे च पम्मुक्को इति रूपम् । अत्र 'स्तौ' (प्रा. सू. १-२-६६) इत्युत ओत्वं तु न प्रवर्तते, बहुलग्रहणात् । स्थूलशब्दे चन्द्रिकायां तथा दर्शनादिति भाति । एतत्सूत्रविहितद्वित्वस्य वैकल्पिकतया तदभावपक्षे पमुक्को इति रूपम् ॥

[3] उत्पलपलाशेति ॥ उत्पलपलाशशब्दौ गणपाठे दृश्येते । त्रिविक्रमवृत्तौ चन्द्रिकायां च न दृश्येते । प्रफुल्लसपरिहासशब्दौ च प्रमुक्तादेराकृतिगणत्वात्संग्राह्याविति

## दैवगेऽखौ ॥ १-४-५८ ॥

[1] दैवादिष्वनादेर्व्यञ्जनस्य द्वित्वं वा स्यात् । दैवं- [2] देव्वम् ॥

[3] व्याकुलमूकव्याहृतनिहितैकनीडतूष्णीककुतूहलसेनास्थाणुनख—स्त्यानभृतमृदुत्वादि । एष्वन्त्यस्य । अस्मदीयः—अत्र [4] ककारस्य, अम्हकेरो । स एव—[5] अत्र चस्य, सोच्चिअ ॥

---

त्रिविक्रमवृत्तावुक्तं दृश्यते । तेल्लोक्कं तेलोक्कं, बद्धप्फलो बद्धफलो, सिहरक्खंडं सिहरखंडं, सप्पिवासो सपिवासो, पडिक्कूलं पडिकूलं, सप्परितावो सपरितावो, अद्दंसणं अदंसणं, परव्वसो परवसो, पप्फुल्लं पफुल्लं, सप्परिहासं सपरिहासं, इति त्रैलोक्य-बद्धफल—शिखरखण्डसपिपास—प्रतिकूल—सपरिताप—अदर्शन—परवश—प्रफुल्ल-सपरिहास-शब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

[1] दैवादिष्वनादेरिति ॥ 'गो गणपरः' (प्रा. सू. १-१-१०) 'आदिः खुः' (प्रा, सू. १-१-९) इति सूत्राभ्यां ग-खु-शब्दयोर्यथाक्रमं गणाद्यर्थकतयाऽयमर्थो लभ्यते ॥

[2] देव्वमिति ॥ दैवशब्दे ऐकारस्य 'ऐच एङ्' (प्रा. सू. १-२-१०२) इत्येकारे प्रकृतसूत्रेण वकारस्य द्वित्वे देव्वमिति रूपम् ॥

[3] व्याकुलेत्यादि ॥ वाउल्लो वाउलो, मुक्को मूओ, वाहित्तं वाहिअं, णिहित्तो णिहिओ, एक्को एओ, णेड्डं णेड्डं, तुण्हक्को तुण्हीओ, कोडहल्लं कोडहलं, सेनाशब्द-स्थाने वृत्त्यादौ सेवाशब्दपाठात् सेवा सेव्वा, खण्णू खाणू, णक्खो णहो, थिण्णं थीणं, भृतशब्दस्थाने हूतशब्दस्य वृत्तिचन्द्रिकादौ पाठात् हुत्तं हूअं, माउक्कं माउअं, इति व्याकुलादिशब्दानां प्राकृते प्रत्येकं द्वे द्वे रूपे बोध्ये ॥

[4] ककारस्येति ॥ नन्वस्मदीयशब्दे ककारादर्शनात्कथमेतदिति वाच्यम् । 'केर इदमर्थे' (प्रा. सू.२-१-८) इति सूत्रेणेदमर्थकस्य छप्रत्ययस्य केरादेशविधानात् केरादेशानन्तरं ककारसत्त्वादेतदुक्तिसाङ्गत्यात् ॥

[5] अत्र चस्येति ॥ ननु स एवेत्यत्र चकारादर्शनात्कथमेतदिति चेत् । 'णइ-चेअ-चिअ-च्च एवार्थे' (प्रा. सू. २-१-३४) इति सूत्रेण एवार्थे चिअ-चेअ इति प्रयोगात् तयोश्च दैवादित्वाभ्यनुज्ञानात तत्र च चकारसत्त्वादेतदुक्तिसाङ्गत्यमिति भावः । तथा च स एवेत्यर्थे सोच्चिअ सोचिअ, सोच्चेअ सोचेअ, इति प्राकृते प्रयोग उपपन्न इति बोध्यम् ॥

[1]स्थूले लस्यैव, न तु रस्य, थुल्लम् थोरम् । 'स्थूले रल्लूतश्चौत्' (प्रा. सू. १-३-८३) ॥

[1] स्थूले लस्यैवेति ॥ स्थूलशब्दे लकारस्यैव प्रकृतसूत्रेण द्वित्वं भवतीत्यर्थः । अत्र च

व्याकुलमूकव्याहृतनिहितैककुतूहलनडेषु ।
तूष्णीकनीडसेवास्थाणुनखस्त्यानहूतेषु ॥
दैवमृदुत्वेऽन्त्यस्य ह्यथास्मदीये तु कस्यैव ।
स्थूले लस्यैव स एवेत्यत्र तु चस्य हि द्वित्वम् ॥

इति गणपाठ एव प्रमाणम् । ननु स्थूलशब्दे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सकारस्य लुकि अनादिव्यञ्जनं लकार एव नान्य इति व्यावर्त्यालाभात् लस्यैवेति किमर्थमिति चेन्न । 'स्थूले रल्लूतश्चौत्' (प्रा. सू. १-३-८३) इति स्थूलशब्द-गतलकारस्य रत्वविधानेन तद्व्यावृत्त्यर्थत्वस्य सुवचत्वात् । नन्वेवं तस्य रादेशस्य लित्त्वेन 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इत्यनेन नित्यत्वबोधनात् स्थूलशब्दे लकारस्य नित्यतया रादेशेनापहाराल्लकारस्यैवाभावेन वचनमिदं निरवकाशमेवेति चेन्न । एवं सति दैवादौ स्थूलशब्दपाठः 'स्थूले लस्यैव' इति वचनं चानर्थकं स्यादिति तद्बलेन 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इत्यत्र प्रायग्रहणात् 'स्थूले रल्लूतः' (प्रा. सू. १-३-८३) इति विहितलादेशस्य वैकल्पिकत्वाभ्यनुज्ञानात् । तद्विहितमोत्वं तु रत्वसंनियोगशिष्टमिति सर्वाभ्युपगतं च । ततश्च रत्वाभावे ओत्वं न प्रवर्तेत इति सिध्यति । एवं च स्थूलशब्दे रादेशाभावपक्षे लकारस्यैव सत्त्वात्प्रकृतवचनेन तस्य द्वित्वं, न तु रादेशानन्तरं तस्य रेफस्येत्येतदर्थमेतद्वचनं सङ्गतं भवति । ततश्च स्थूलशब्दे 'कगटड' (प्रा.सू. १-४-७७) इत्यादिना सकारस्य लुकि प्रकृतसूत्रेण लस्य द्वित्वे 'संयोगे' (प्रा.सू. १-२-४०) इति पूर्वस्य ऊकारस्य ह्रस्वे थुल्लो इति रूपम् । अत्र उकारस्य 'स्तौ' (प्रा. सू. १-२-६६) इत्योत्वं बहुलाधिकारान्नेति चन्द्रिकायाम् । द्वित्वस्य वैकल्पिकतया तदभावपक्षे 'स्थूले रल्लूतश्चौत्' (प्रा. सू. १-३-८३) इत्यनेन लस्य रादेशे तत्संनियोगेन ऊकारस्य ओत्वे च थोरो इति रूपम् । अनुपदप्रदर्शितरीत्या रत्वस्यापि वैकल्पिकत्वेन द्वित्व-रत्वोभयाभावपक्षे सकारलुकि थूलो इति च रूपं बोध्यमित्ययं चन्द्रिकानुयायी पन्थाः ॥

त्रिविक्रमदेवस्तु—'दैवगेऽखौ' (प्रा. सू. १-४-९२) इति सूत्रे 'स्थूले लस्यैव' इति वचनमननुमन्वानो दैवादिगणे स्थूलशब्दपाठः तद्गतलकारस्य द्वित्वविधानमात्रेण चरितार्थस्सन् द्वित्वाभावे लकारस्य नित्यतया प्रवर्तमानं रेफादेशं विकल्पयितुं न प्रभव-तीत्यभिप्रेत्य द्वित्वाभावे लस्य नित्यतया रत्वे तत्संनियोगेन ऊकारस्य ओत्वे थोरो इति, द्वित्वपक्षे च 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वेन लकाराभावान्न रत्व-

## तैलादौ ॥ १-४-५९ ॥

[1] नित्यं स्यात् । [2] तेळ्ळं । [3] व्रीडाविचकिलरप्रभूतमण्डूकप्रेम-ऋजुस्रोतः । [4] एष्वन्त्यस्य । उलूखलं, अत्र खस्य । यौवनं, अत्र वस्य ॥

इति द्वित्वप्रकरणम्.

---

मपीति थुल्लो इति च रूपद्वयमेव साध्वित्यभिमत्य 'स्थूले रलूतः' (प्रा. सू. १-३-८३) इत्यत्र थूलशब्दासिद्धिमाशङ्क्य स्थूलशब्दपर्यायं स्थूरशब्दमुररीकृत्य तत्रत्य-रेफस्य 'हरिद्रादौ' (प्रा. सू. १-३-७८) इति लत्वाभिप्रायेण 'थूलभद्दो इति तु स्थूलस्य हरिद्रादित्वे भविष्यति' इत्यभिदधौ । मुद्रितत्रिविक्रमवृत्तिगतटिप्पणीकारस्तु अनुपदप्रदर्शितं त्रिविक्रमदेवाशयमजानानः 'स्थूले रल्' (प्रा. सू. १-३-८३) इति रेफस्य लित्त्वात् स्थूलशब्दस्य थोरो इति रूपादन्यदसाधु । अतोऽत्र स्थूरः—थूलो थुल्लो इति साधु । स्थूलशब्दसमानार्थकवृत्तिकृदभिमतस्थूरशब्दगतरेफस्य 'हरिद्रादौ' (प्रा. सू. १-३-८) इति लत्वम् । ततोऽनेन द्वित्वमित्यस्मदाशयः" इति 'दैवादौ' (प्रा. सू. १-४-९२) इति सूत्रे 'स्थूलः' इति पदं 'स्थूरः' इति संशोध्य स्वाशयमाविश्चकार । अत्र च दैवादावुक्तरीत्या अलाक्षणिकस्थूलशब्दपाठस्याप्युपपत्तेस्तत्र लाक्षणिकस्थूलशब्दस्यैव पाठ इत्यभ्युपगमे प्रमाणं गवेषणीयम् ॥

[1] **नित्यं स्यादिति** ॥ यदीदमपि वैकल्पिकं स्यात्तर्हि तैलादीनामपि दैवादावेव पाठेनेष्टसिद्ध्या पृथगेतत्सूत्रारम्भणमेव विफलं स्यात् । तस्मादेतत्सूत्रस्य पृथगारम्भादेव इदं द्वित्वं नित्यमिति ज्ञायत इति भावः ॥

[2] **तेल्लमिति** ॥ तैलशब्दे प्रकृतसूत्रेण लकारस्य द्वित्वे 'ऐच एङ्' (प्रा. सू. १-२-१०२) इत्यैकारस्य एत्वे तेल्लमिति रूपम् ॥

[3] **व्रीडेत्यादि** ॥ विड्डा वेइल्लं पहुत्त मण्डुक्को पेम्मं उज्जू सोत्तं इति व्रीडादिशब्दानां प्राकृते सिद्धरूपाणि बोध्यानि ॥

[4] **एष्वन्त्यस्येत्यादि** ॥ तैलव्रीडाविचकिलप्रभूतेषु ऋजौ द्विता ।
मण्डूके स्रोतसि प्रेम्णि स्यादन्त्यस्यैव यौवने ।
वस्यैवोलूखले खस्यैवेष्टा तैलादिके गणे ॥

इत्येतत्तैलादिगणीयकारिकाबलात्, त्रिविक्रमवृत्तौ 'तैलादिषु यथादर्शनमन्त्यस्यानन्त्यस्य च द्वित्वं भवति' इति ग्रन्थदर्शनाच्च व्रीडादिष्वन्त्यस्यैव उलूखले खस्यैव यौवने वस्यैव द्वित्वमिति भावः । ततश्च उलूखले खस्य द्वित्वे ओक्खलमिति यौवने वस्य द्वित्वे जोव्वणमिति च प्राकृते सिद्धरूपं बोध्यम् ॥

इति द्वित्वप्रकरणम्.

# अथागमप्रकरणम्.

## प्राक् श्लाघाप्लक्षशार्ङ्गे ङ्लोऽत् ॥ १-४-६० ॥

एषु लात् ङाच्च प्रागत्वं स्यात् । [1] सलाहा । [2] पलक्खो । सारङ्गं ॥

## क्ष्मारत्नेऽन्त्यहलः ॥ १-४-६१ ॥

[3] प्रागत्वं स्यात् । [4] छमा । [5] रअणम् ॥

## [6] स्नेहाग्न्योर्वा ॥ १-४-६२ ॥

---

### अथागमप्रकरणम्.

[1] सलाहेति ॥ श्लाघाशब्दे प्रकृतसूत्रेण लकारात्प्रागकारागमे शकारस्य 'शोस्सल्' (प्रा. सू. १-३-८१) इति सत्वे 'खघथधभाम्' (प्रा. सू. १-३-२०) इति घस्य हादेशे च सलाहेति प्राकृते रूपम् ॥

[2] पलक्खो इति ॥ प्लक्षशब्दे प्रकृतसूत्रेण लकारात्प्रागकारागमे 'क्षः' (प्रा. सू. १-४-८) इति सूत्रेण क्षस्य खकारादेशे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे च पलक्खो इति रूपं बोध्यम् ॥

[3] प्रागिति ॥ अन्त्यहल इत्यादिः । पूर्वसूत्रात् प्राक् अत् इति पदद्वयमनुवर्तते । क्ष्मारत्नशब्दयोरन्त्यहलः प्रागत्वं स्यादित्येतत्सूत्रार्थः ॥

[4] छमेति ॥ क्ष्माशब्दे प्रकृतसूत्रेण मकारात्प्रागत्वे 'क्षमायां कौ' (प्रा. सू. १-४-२०) इति सूत्रे लाक्षणिकस्य क्ष्माशब्दस्याप्यविशेषाद्ग्रहणेन क्षस्य छकारादेशे छमा इति रूपम् । यद्यप्यस्य छमेति रूपस्य क्षमाशब्दावलम्बनेन 'क्षमायां कौ' (प्रा. सू. १-४-२०) इति सूत्रेणैव सिद्धिः, तथाऽपि क्ष्माशब्दस्याप्येतदेव रूपं स्यादित्येतत्सूत्रारम्भ इत्यवसीयते ॥

[5] रअणमिति ॥ रत्नशब्दे प्रकृतसूत्रेण नकारात्प्रागकारागमे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारस्य लुकि 'नः' (प्रा. सू. १-३-५२) इति नकारस्य णकारादेशे च रअणमिति रूपम् ॥

[6] स्नेहाग्न्योरिति ॥ पूर्वसूत्राभ्यां अन्त्यहलः प्राक् अत् इति पदत्रयमनुवर्तते । स्नेहाग्न्योरन्त्यहलः प्रागत्वं वा भवतीत्येतत्सूत्रार्थः । स्तोरित्यधिकृत्य तस्य संयुक्तसंज्ञकत्वेन तस्य चान्त्यपदार्थान्वयेन न स्नेहशब्दे हकारात्प्रागत्वापत्तिरिति बोध्यम् ॥

[1] सणेहो । अगणी । पक्षे–[2]णेहो । अग्गी ॥

## शर्षतप्तवज्रेष्वित् ॥ १–४–६३ ॥

[3] अन्त्यस्य हलः प्रागित्वं वा स्यात् । र्श, दर्शः–[4] दरिसो दासो । 'शोर्लुप्त' (प्रा. सू. १-२-८) इति दीर्घः । र्ष, वर्ष–[5] वरिसं वासं । तप्तः–[6] तपिओ तत्तो । वज्रं–[7] वज्जं वइरं । अत्र जलोपः ॥

---

[1] सणेहो अगणी इति ॥ स्नेहाग्निशब्दयोः प्रकृतसूत्रेण संयुक्तान्त्यनकारात्प्रागकारागमे नकारस्य 'नः' (प्रा.सू. १-३-५२) इति णकारादेशे सणेहो अगणीति रूपम् ॥

[2] णेहो अग्गी इति ॥ स्नेहाग्निशब्दयोरन्त्यहलः प्रागकारागमस्य वैकल्पिकतया तदभावपक्षे 'कगटड' (प्रा. सू. १-४-७७) 'मनयाम्' (प्रा. सू. १-४-७९) इति सूत्राभ्यां यथाक्रमं सकारनकारयोर्लुकि स्नेहशब्दगतनकारस्य 'नः' (प्रा. सू. १-३-५२) इति णत्वे अग्निशब्दे च लुकि शिष्टस्य गकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे च णेहो अग्गीति रूपम् ॥

[3] अन्त्यस्य हलः प्रागिति ॥ 'प्राक् श्लाघा' (प्रा. सू. १-४-९५) 'क्ष्मारत्ने' (प्रा. सू. १-४-९६) इति सूत्राभ्यां प्रागिति अन्त्यहल इति चात्रानुवर्तत इति भावः ॥

[4] दरिसो दासो इति ॥ दर्शशब्दे प्रकृतसूत्रेण अन्त्यहलः शकारात्प्रागकारागमे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शकारस्य सत्वे दरिसो इति, प्रकृतस्येकारागमस्य वैकल्पिकत्वात्तदभावपक्षे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रस्य लुकि 'शोर्लुप्त' (प्रा. सू. १-२-८) इत्यादिना पूर्वस्याकारस्य दीर्घे पूर्ववत् शकारस्य सत्वे दासो इति च रूपं बोध्यम् ॥

[5] वरिसं वासमिति ॥ वर्षशब्दे प्रकृतसूत्रेण अन्त्यहलः षकारात्प्रागिकारागमे 'शोस्सल्' (प्रा. सू. १-३-८७) इति षकारस्य सत्वे वरिसमिति, प्रकृतेकारागमस्य वैकल्पिकतया तदभावपक्षे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रलुकि 'शोर्लुप्त' (प्रा. सू. १-२-८) इत्यादिना तत्पूर्वस्य दीर्घे वासमिति च रूपम् ॥

[6] तपिओ तत्तो इति ॥ तप्तशब्दे संयुक्तान्त्यहलस्तकारात्प्राक्प्रकृतसूत्रेणेकारागमे तपिओ इति, इकारागमस्य वैकल्पिकत्वेन तदभावपक्षे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना संयुक्तावयवस्य पकारस्य लुकि शेषस्य तकारस्य द्वित्वे च तत्तो इति रूपम् । चन्द्रिकात्रिविक्रमवृत्त्योस्तु तप्तशब्दे 'पो वः' (प्रा. सू. १-३-५५) इत्यनेन पकारस्य वकारादेशाभिप्रायेण तविओ इत्युदाहृतं दृश्यते ॥

[7] वज्जं वइरमिति ॥ प्रकृतस्येकारागमस्य पाक्षिकतया तदभावपक्षे वज्र-

[1] हर्षामर्षश्रीह्रीक्रियापरामर्शकृत्स्नदिष्टयार्हे ॥ १-४-६४ ॥

एषु ह्रस्संयोगे चान्त्यहलः प्रागित्वं [2] नित्यं स्यात्। [3] हरिसो। अमरिसो। सिरी। हिरी। किरिआ। परामरिसो। [4] कसिणं। अत्र [5] तलोप इव न च्छ इति वाच्यम्। [6] दिट्ठिआ। र्हे, बर्हः–बरिहो। अर्हः–अरिहो ॥

---

शब्दे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि शेषस्य जकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे च वज्जमिति रूपम्। इकारागमपक्षे तु जकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि वइरमिति रूपम्। एवं द्राविडभाषायामपि वज्ररूपार्थे वइरमिति पदं प्रयुज्यते ॥

[1] हर्षेत्यादि ॥ सूत्रे हर्षादिर्हान्तानां समाहारद्वन्द्वो बोध्यः ॥

[2] नित्यं स्यादिति ॥ यदीदमपि पाक्षिकमिष्टं स्यात्तर्हि पूर्वसूत्र एव हर्षादीनपि पठेत्, तदपहाय पृथक्सूत्रारम्भादिदं नित्यमिति सिध्यतीति भावः ॥

[3] हरिसो इत्यादि ॥ हर्षामर्षश्रीपरामर्शशब्देषु अन्त्यहलः प्रागिकारागमे शषयोः 'शोस्सल' (प्रा. सू. १-३-८७) इति सत्वे च हरिसो अमरिसो सिरी परामरिसो इति रूपाणि ॥

[4] कसिणमिति ॥ कृत्स्नशब्दे प्रकृतसूत्रेण संयुक्तान्त्यहलो नकारात्प्रागिकारागमे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना तकारस्य लुकि 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यनेन ऋकारस्याकारादेशे 'नः' (प्रा. सू. १-३-५२) इति नकारस्य णत्वे च कसिणमिति रूपम् ॥

[5] तलोप इवेति ॥ अत्र 'तलोप एव' इति पाठस्समीचीन इति भाति ॥ कृत्स्नशब्दे 'थ्यश्चत्सप्सामनिश्चले' (प्रा.सू. १-४-२३) इति सूत्रेण त्सस्य स्थाने छादेशस्य, तथा 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना तकारलुकश्च प्रसक्तौ 'अनुक्तमन्यशब्दानुशासनवत' (प्रा. सू. १-१-२) इत्यत्र शास्त्रे परिभाषणात्पाणिनीयव्याकरणानुरोधेन 'विप्रतिषेधे परं कार्यम्' (पा. सू. १-४-२) इत्यनेनात्र परत्वात्तलोप एव भवति, न छादेश इति भावः ॥

[6] दिट्ठिआ इति ॥ दिष्टयाशब्दे अपवादत्वेन 'कगटड' (प्रा. सू. १-४-७७) इति बाधित्वा 'ष्टः' (प्रा. सू. १-४-१४) इति सूत्रेण ष्ट्–इति संयुक्तस्य ठादेशप्रवृत्तौ तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य ठस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना टकारादेशे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना यकारस्य लुकि च दिट्ठिआ इति रूपं सिध्यति ॥

## स्याद्भव्यचैत्यचौर्यसमे यात् ॥ १-४-६५ ॥

[1]एषु [2]चौर्यसमेषु च [3]संयुक्तस्य यकारात्प्रागित्वं भवति। स्याद्वादः—[4]सिआवाओ । [5]भविओ । [6]चेइओ । [7]चोरिआ । अञ्जल्यादिपाठाच्चौर्यशब्दस्य वैकल्पिकं स्त्रीत्वम् । [8]पक्षे चोरिअं । [9]आकृतिगणोऽयम् ॥

---

[1] एष्विति ॥ स्याद्भव्यचैत्यशब्देष्वित्यर्थः ॥

[2] चौर्यसमेष्विति ॥ चौर्यशब्दसदृशेष्वित्यर्थः । र्यशब्दघटितत्वेन सादृश्याभ्युपगमात् प्रयोक्तृभेदाद्यधीनभेदाभ्युपगमात् 'सागरः सागरोपमः' इत्यादाविव सादृश्यस्य भेदाघटितत्वाभिप्रायेण वा चौर्यशब्दस्यापि चौर्यशब्दसदृशत्वं बोध्यमिति भावः ॥

[3] संयुक्तस्येति ॥ अत्र स्तोरित्यधिक्रियते । तच्चात्र शास्त्रे संयुक्तार्थे सङ्केतितमिति भावः ॥

[4] सिआवाओ इति ॥ स्याद्वादशब्दे प्रकृतसूत्रेण यकारात्प्रागिकारागमे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना संयुक्तावयवदकारस्य लुकि 'दीर्घान्न' (प्रा. सू. १-४-८७) इति निषेधात् शेषस्य 'शेषादेशस्य' (प्रा. सू. १-४.८६) इत्यादिना द्वित्वाप्रवृत्तौ 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना यकारदकारयोर्लुकि प्रायोग्रहणात्प्रयोगानुरोधेनात्र वकारस्य लुगभावे च सिआवाओ इति रूपम् ॥

[5] भविओ इति ॥ भव्यशब्दे प्रकृतसूत्रेण यकारात्प्रागिकारागमे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना यकारस्य लुकि च भविओ इति रूपम् ॥

[6] चेइओ इति ॥ चैत्यशब्दः पुंलिङ्गोऽपीत्यभिप्रायेणेदम् । त्रिविक्रमवृत्तौ तु चेइअमिति क्लीबमेवोदाहृतं दृश्यते । चैत्यशब्दे प्रकृतसूत्रेण यकारात्प्रागिकारागमे तकारयकारयोः 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि 'ऐच एङ्' (प्रा. सू. १-२-१०२) इत्यैकारस्य एकारादेशे चेदं रूपं सिद्धम् ॥

[7] चोरिआ इति ॥ चौर्यशब्दे प्रकृतसूत्रेण यकारात्प्रागिकारागमेऽस्य अञ्जल्यादिपाठेन 'स्त्रियामिमाञ्जलिगाः' (प्रा. सू. १-१-५३) इति सूत्रेण पाक्षिकस्त्रीत्वे 'ऐच एङ्' (प्रा. सू. १-३-१०) इत्यौकारस्य ओकारादेशे यकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इति लुकि च चोरिआ इति प्राकृते सिद्धरूपं बोध्यम् ॥

[8] पक्ष इति ॥ 'स्त्रियामिमाञ्जलिगाः' (प्रा. सू. १-१-५३) इत्यस्य पाक्षिकतया स्त्रीत्वाभावपक्ष इत्यर्थो बोध्यः ॥

[9] आकृतिगणोऽयमिति ॥ तेन पर्यङ्काचार्यादिशब्दानामप्येतद्गणपठितत्वाभ्यूहनं प्रयोगानुरोधात्सिद्धमिति बोध्यम् ॥

गाम्भीर्यधैर्यभार्यासौन्दर्यब्रह्मचर्यवीर्यचर्याचार्यशौर्यवर्यस्थैर्यसूर्यपर्यङ्काः ॥

## [1] लादक्लीबेषु ॥ १-४-६६ ॥

स्तोर्लात्प्रागित्वम् । क्लिन्नं-किलिण्णं । [2] क्लिष्टक्लान्तप्लुष्टप्लोपाम्लश्लेपक्लेशशुक्लम्लानक्लेद । अक्लीबेषु किम्? क्लीबः [3] कीवो । क्लम वेक्लव-प्लव [4] शुक्लपक्ष । [5] उभयं तिङन्तेऽपि समानम् । क्लिश्यते-किलिज्जइ । उत्प्लाव्यते-उप्पावइज्जइ ॥

## [6] स्निग्धे त्वदितौ ॥ १-४-६७ ॥

अच्च इच्च अदितौ । इमौ स्निग्धशब्दे नात्प्राग्विकल्पेन स्याताम् ।

---

[1] लादक्लीबेष्विति ॥ मुद्रितत्रिविक्रमवृत्तिकोशे तु 'लादक्लवेषु' इति सूत्रपाठो दृश्यते । अत्र चाक्लीबेष्विति बहुवचनादाद्यर्थावगतिः । 'स्तोः' (प्रा. सू. १-४-१) इत्यधिक्रियते । तच्च संयुक्तस्येत्यर्थकम् । 'शर्षे' (प्रा. सू. १-४-९८) इत्यादिसूत्रादिदिति चानुवर्तते । तथाच क्लीबादिशब्दघटितसंयुक्तावयवलकारात्प्रागिकारागमो भवतीति सूत्रार्थः ॥

[2] क्लिष्टेत्यादि ॥ लकारघटितसंयुक्तोदाहरणमेतत् ॥

[3] कीवो इति ॥ प्रकृतसूत्रे अक्लीबेष्विति निषेधात् क्लीबशब्दे लकारात्प्रागिकारागमाप्रवृत्त्या 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लकारस्य लुकि शिष्टस्य ककारस्यादिभूततया द्वित्वाभावेन 'बो वः' (प्रा. सू. १-३-६१) इति बकारस्य वत्वे च कीवो इति रूपम् ॥

[4] शुक्लपक्षेति ॥ उदाहरणे शुक्लशब्ददर्शनात्प्रत्युदाहरणे समस्तः शुक्लपक्षशब्दो बोध्यः ॥

[5] उभयमिति ॥ विधिर्निषेधश्चोभयमित्यर्थः । तेन क्लीबादौ प्लवशब्दस्य प्रातिपदिकस्य पाठेऽपि तिङन्तेऽपि निषेधादिकारागमाप्रवृत्त्या उप्पावइज्जइ इत्यादि सिध्यति ॥

[6] स्निग्धे त्वदिताविति ॥ एतत्सूत्रात्पूर्वं स्वप्नशब्दे नकारात्प्रागिकारागमविधानेन सिविणो इति रूपसाधकं 'नात्स्वप्ने' (प्रा.सू. १-४-१०२) इति सूत्रं सूत्रपाठेऽधिकं दृश्यते । ततोऽनुवृत्त्यभिप्रायेणैवात्र वृत्तावपि नात्प्रागित्युक्तम् ॥

[1] सणिद्धो सिणिद्धो। [2] पक्षे 'कग' (प्रा. सू. १-४-७७) इति सलोपे णिद्धो ॥

## [3] कृष्णे वर्णे ॥ १-४-६८ ॥

[4] कसणं कसिणं। [5] पक्षे कण्हो। [6] विष्णौ तु कण्ह एव ॥

---

[1] सणिद्धो सिणिद्धो इति ॥ स्निग्धशब्दे प्रकृतसूत्रेण नात्प्रागकारेकारागमयोः 'नः' (प्रा. सू. १-३-५२) इति नस्य णत्वे गकारस्य 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना लुकि शिष्टस्य धस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे च सणिद्धो सिणिद्धो इति रूपम् ॥

[2] पक्ष इत्यादि ॥ सूत्रेऽस्मिन् वार्थकतुशब्दसत्त्वात् अदितोरुभयोरपि वैकल्पिकतया तदुभयाभावपक्षे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना सकारस्य लुकि 'नः' (प्रा. सू. १-३-५२) इति नस्य णत्वे च णिद्धो इति चास्य स्निग्धशब्दस्य तार्तीयीकं रूपं बोध्यम् ॥

[3] कृष्णे वर्णे इति ॥ पूर्वसूत्रात् त्वदिताविति 'क्ष्मारत्नेऽन्त्यहलः' (प्रा. सू. १-४-९६) इत्यतोऽन्त्यहल इति चानुवर्तते। स्तोरित्यधिक्रियते। तथा च वर्णे यः कृष्णशब्दः वर्णवाचीति यावत्, तादृशकृष्णशब्दघटकसंयुक्तान्त्यहलः प्रागदितौ वा भवत इति सूत्रार्थः संपद्यते ॥

[4] कसणं कसिणमिति ॥ प्रकृतसूत्रेण कृष्णशब्दे अन्त्यहलो णकारात्प्रागकारेकारागमयोः 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यनेन ऋकारस्याकारादेशे च कसणं कसिणं इति च रूपद्वयं सिध्यति ॥

[5] पक्षे कण्हो इति ॥ प्रकृतसूत्रविहितयोरकारेकारागमयोरुभयोर्वैकल्पिकतया तदुभयाभावपक्षे 'श्नष्णस्न' (प्रा. सू. १-४-६९) इत्यादिना ष्णस्य ण्हादेशे कण्हो इत्यपि कृष्णशब्दस्य तृतीयं रूपमिति भावः ॥

[6] विष्णौ त्विति ॥ सूत्रे वर्णवाचिनः कृष्णशब्दस्यैव ग्राह्यतया विष्णुवाचके कृष्णशब्दे तयोरप्रवृत्त्या 'श्नष्णस्न' (प्रा. सू. १-४-६९) इत्यादिना ष्णस्य ण्हादेशे कण्हो इत्येव रूपमिति भावः ॥

## [1]अर्हत्युच्च ॥ १–४–६९ ॥

अर्हतिधातावुत् चात् अदितौ च स्युः । अर्हः–अरुहो अरहो अरिहो । एवं [2]अर्हन्नर्हन्तीत्यादावपि ॥

## तन्व्याभे ॥ १–४–७० ॥

तन्वीतिवदुदन्तत्वङीवन्तत्वयणादेशवन्तः तन्व्याभाः । तेषु [3]उत्स्यात् । तन्वी–तणुवी । लघ्वी [4]वह्वीत्यादि ।

## (वा) पृथ्व्या वावचनम् ॥

[5]पिहुवी पिच्छी ॥

---

[1]अर्हत्युच्चेति ॥ मुद्रितचन्द्रिकाकोशे तु 'अर्हत्यु च' इति सूत्रपाठो दृश्यते । पूर्वसूत्रवदत्रापि स्तोरित्यादीनां सम्बन्धो बोध्यः ॥

[2]अर्हन्नर्हन्तीति ॥ सूत्रे अर्हतेर्धातोर्ग्रहणात् तत्प्रकृतिकप्रत्ययान्ते सर्वत्रैते आगमाः प्रवर्तन्त इति भावः ॥

[3]उत्स्यादिति ॥ पूर्वसूत्रवदत्रापि स्तोः अन्त्यहलः प्राक् इति पदत्रयं संबध्यते । अदितौस्तु पूर्वसूत्रे चानुकृष्टत्वात् 'चानुकृष्टं' इति पाणिनीयन्यायानुसरणात् अत्र न संबन्ध इति भावः ॥

[4]वह्वीत्यादीति ॥ आदिपदात् गुर्वीमृद्व्यादीनां ग्रहणम् ॥

[5]पिहुवी पिच्छीति ॥ पृथ्वीशब्दे तन्वीशब्दसदृशतया प्रकृतसूत्रेण अन्त्यहलो वकारात्प्रागुकारागमे 'खघथधभाम्' (प्रा. सू. १-३-२०) इति सूत्रेण थस्य हत्वे कृपादित्वात् 'इल् कृपगे' (प्रा. सू. १-२-७६) इति ऋकारस्येत्वे पिहुवीति, अत्र सूत्रे 'पृथ्व्या वावचनम्' इति वचनादुकारागमस्य वैकल्पिकतया तदभावपक्षे 'त्वथ्वद्ध्वां' (प्रा. सू. १-४-६५) इत्यादिसूत्रेण थ्वशब्दस्य छत्वे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना तस्य द्वित्वे पूर्वस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे पूर्ववदृकारस्य इत्वे पिच्छीति च रूपम् । अस्यैव पृथ्वीशब्दस्य ऋत्वादावपि पाठादृकारस्योत्वपक्षे पुहुवीत्यन्यदपि रूपं बोध्यम् ।

## [1] एकाचि श्वस्स्वे ॥ १-४-७१ ॥

[2] अनयोरुत्स्यात् । श्वः- [3] सुवो । स्वं-सुवं । एकाचि किम् ? स्वजनः सजणो ॥

## वा च्छद्मपद्ममूर्खद्वारे ॥ १-४-७२ ॥

[4] छम्मो छदुमो [5] इत्यादि ॥

---

चन्द्रिकायां तु 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना वलोपाभिप्रायेण पिहुई पुहुई इति रूपमुदाहृतं दृश्यते ॥

[1] एकाचीति ॥ एतत्सूत्रात्पूर्वं सुघ्नशब्दे रात्पूर्वमुकारागमविधानेन सुरुघ्नमिति रूपसाधकं 'सुघ्ने रात्' (प्रा. सू. १-४-१०७) इत्येकं सूत्रमधिकं सूत्रपाठे दृश्यते ॥

[2] अनयोरुत्स्यादिति ॥ 'प्राक् श्लाघा' (प्रा. सू. १-४-९५) 'क्ष्मारत्ने' (प्रा. सू. १-४-९६) इत्यादिसूत्राभ्यां प्रागिति अन्त्यहल इति चानुवर्तते । 'स्तोः' (प्रा. सू. १-४-१) इति चाधिक्रियते । तथाच एकाच्कश्वस्स्वशब्दान्यतरघटित-संयुक्तावयवान्त्यहलः प्रागुकारागमो भवतीति सूत्रार्थः ॥

[3] सुवो इति ॥ श्वस् इत्यव्यये 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यन्त्यहलो लोपे प्रकृतसूत्रेण संयुक्तान्त्यहलो वकारात्प्रागुकारागमे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सत्वे च सुवो इति रूपम् ॥

[4] छम्मो छदुमो इति ॥ छद्मन्शब्दे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यनेन नकारलोपे प्रकृतसूत्रविहितोकारागमस्य वैकल्पिकतया एतदभावपक्षे 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना दकारस्य लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना शिष्टस्य मकारस्य द्वित्वे 'स्नमदाम' (प्रा. सू. १-१-४९) इत्यादिना प्राकृतेऽस्य पुंलिङ्गतया छम्मो इति रूपम् । प्रकृतसूत्रेणोकारागमपक्षे तु छदुमो इति रूपम् ॥

[5] इत्यादीति ॥ अत्र पद्ममूर्खद्वारशब्दानामुकारागमतदभावपक्षयोः पउमं पोम्मं, मुरुक्खो मोक्खो, दुवारं दारं, इति प्रत्येकं प्राकृते रूपद्वयं बोध्यम् ॥

## [1] ईल् ज्यायाम् ॥ १-४-७३ ॥

[2] जीआ ॥

इति आगमप्रकरणम्.

स्तोर्विधिः पूर्णः ॥

इति श्रीमद्दक्षिणसमुद्राधीश्वरचोक्कनाथभूपालप्रियसचिव-सज्जनावलम्ब-
ब्रह्मण्यबिरुदाङ्क-चिनबोम्मभूपहृदयकुहरविहरमाण-
साम्बशिवप्रेरितेनाप्पयदीक्षितेन कृते
प्राकृतमणिदीपे प्रथमाध्यायस्य
चतुर्थः पादः.
[3] प्रथमोऽध्यायस्समाप्तः ॥

---

[1] ईलि न ॥ पूर्वसूत्रे नेति दर्शनादत्र तदसंबन्धाय नित्यत्वार्थमत्र लित्करणं कृतम् । 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इति ह्यत्र शास्त्रे परिभाषितं दृश्यते ॥

[2] जीआ इति ॥ ज्याशब्दे प्रकृतसूत्रेणान्त्यहलो यकारात्प्रागीकारागमे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना यकारस्य लुकि जीआ इति रूपं बोध्यम् ॥

इति आगमप्रकरणम्.

## अथ वर्णव्यत्ययप्रकरणम्.

[3] एतदध्यायान्ते महाराष्ट्र-आलान-वाराणसी-करेणु-ललाट-हृद-अचलपुर-ह्य-लघुक-हरिताल-दर्वीकर-निवह-शब्देषु वर्णव्यत्ययविधानेन मरहट्ठो आणालो वाणारसी कणेरू णडालं द्रहो अलयपुरं गुय्हं हलुओ हलिआरो दव्वीरओ णिहवो इति रूपसाधकानि 'हश्च महाराष्ट्रे होर्व्यत्ययः' (प्रा. सू. १-४-१११) 'लनोरालाने' (प्रा. सू. १-४-११२) 'वाराणसी करेण्वां रणोः' (प्रा. सू. १-४-११३) 'ललाटे डलोः' (प्रा. सू. १-४-११४) 'हृदे दहयोः' (प्रा. सू. १-४-११५) 'चलयोरचलपुरे' (प्रा. सू. १-४-११६) 'ह्ये ह्योर्वा' (प्रा. सू. १-४-११७) 'लघुके लहोः' (प्रा. सू. १-४-११८) 'रलोर्हरिताले' (प्रा. सू. १-४-११९) 'दर्वीकरनिवहौ दव्वीरअणिवहौ तु' (प्रा. सू. १-४-११०) इतीमानि दश सूत्राणि एतत्प्राकृतमणिदीपानुपात्तान्यधिकानि सूत्रपाठे दृश्यन्ते ॥

इति वर्णव्यत्ययप्रकरणम्.

## अथ निपातनप्रकरणम्.

तथाऽन्तिमं ग्राह्यादिशब्दानां 'गहिआ' इत्यादिरूपनिपातकं 'गहिआद्याः' इत्येकं सूत्रमप्यधिकं सूत्रपाठे दृश्यते । ते च शब्दा यथा-

गहिआ–ग्राह्या

णंदिणी–धेनुः

पडिणाओ–घर्घरकण्ठः (प्रतिनादः)

वइरोडो अविणयवई छिण्णो अणडो छिच्छओ–छिण्णालो–जारः. (रुट स्तेये, पतिवञ्चकत्वात वइरोडो) (अविनयपतिः–अविणअवई) (स्मरशरच्छिन्नः–छिण्णो) (अजडः–अणडो) (अशिक्षतः–छिच्छओ) (आचारच्छिन्नादाता–छिण्णालो).

अत्तिहरी संचारी मदोली पेम्मणआली मराली सहउत्थिआ–दूती.

पडिसोत्तो पडिक्खरो (पडिज्झरो) प्रतिकूलः (प्रतिस्रोतः).

जोओ दोसारअणो समुद्दणवणीअं दोसणिजंतो–चन्द्रः. (द्योतः–जोओ) (दोषारत्नं–दोसारअणो) (समुद्रनवनीतं–समुद्दणवणीअं) (दोषायन्त्रः–दोसणिजन्तो).

किमिघरवसणं–कौशेयम् (क्रिमिगृहवसनत्वात्).

मुहरोमराई–भ्रूः (मुखरोमराजित्वात्)

विसारो–सैन्यम् (विसरणशीलत्वात्)

चिरिचिरिआ, चिलिचिलिआ–धारा (चिरिचिर्यादिशब्दवत्त्वात्).

समुद्दहरं–अम्बुगृहम्

तम्बकुसुमं–कुरुवकं कुरण्टकं च (ताम्रकुसुमत्वात्).

पाओ, पअलाओ–फणी (पापकारित्वात् पापः) (पदलायः–पदानिलाययतीति व्युत्पत्त्या पदनिगूहकत्वाच्च).

अहिअलो–क्रोधः. (अहिवल्लति नाशयतीति, अहिवलः).

सिहिणं स्तनः. (शिखिवच्चूचुकवत्त्वात्)

थिरणामो–अस्थिरः. (यतः स्थिरं नास्त इति स्थिरनासः).

जोइक्खो, सूरंगो–दीपः.(ज्योतीरूपत्वात्) (सूरस्य अङ्गवदङ्गयुक्तत्वाच्च).

थेवो–बिन्दुः. स्तोकत्वात

पासावओ–गवाक्षः. पासो चक्षुः, तदापद्यत इति.

कोप्पो–अपराधः

उम्मुहो, उद्दणो, पहट्ठो–उद्धतः(उन्मुखः, उद्धदनः, प्रहृष्टः, ऊर्ध्वमुखत्वात् उद्धदनत्वात् प्रहृष्टत्वात्).

जणउत्तो–ग्रामप्रधानः. (जनपुत्रत्वात् जनपुत्रः).

जण्णहरो-राक्षसः. (यज्ञहरत्वात् यज्ञहरः.)

आरनाळं, थेरोसणं, बम्हहरं–अम्बुजम्, (आरनालं, स्थविरासनं, ब्रह्मगृहं आरानालवत्त्वात् स्थविरब्रह्मासनत्वात् ब्रह्मगृहत्वाच्च).

कंदोट्टं, कलमं–उत्पलम्, (कन्दादुट्टीकते के उदके लीयत इति च).

रअणिद्धअं, चन्दोज्जं–कुमुदम्, (रजनीध्वजत्वात् चन्द्रेणोद्द्योतितत्वाच्च रजनीध्वजः).

**दूमद्धअमहिसी–कृत्तिका.** (धूमध्वजस्याग्नेर्महिषीत्वात् धूमध्वजमहिषी).

**अवहोओ–विरहः**

**लंबा वेल्ली वेल्लरिआ–वल्लरी केशश्च**

**घरअंदं–मुकुरः** (गृहचन्द्रः)

**आआसतअं–हर्म्यपृष्ठम्** (आकाशतलम्)

**गूरद्धओ–दिवसः** (गूरध्वजः)

**आणंदवसो–प्रथमरजस्वलारक्तवस्त्रम्** 'आणन्दवडो' इति त्रैविक्रमे। (आनन्दवसनम्).

**अच्छिवडणं–निर्मीलनम्.** (अक्षिपतनम्)

**पल्लविअं–लाक्षारक्तम्.** (पल्लवितम्)

**णीसंको–पृष्टम्.** 'वृषः' इति त्रैविक्रमे। (निश्शङ्कः).

**एलविलो–धनी वृषश्च.** (ऐलबिलः)

**सुहरओ–दारिकागृहं चटकश्च।** (सुखरतः.)

**णिम्मीसुओ–निश्मश्रुयुवा** (निश्श्मश्रुकः)

**हट्ठमहट्ठो–स्वस्थः** (हृष्टमहार्थः)

**णिहुअं–सुरतम्.** (निधुवनम्)

**जहणरोहो–ऊरुः** (जघनारोहः)

**अच्छुद्धसिरी** (अब्बुद्धसिरी) **मनोरथाधिकफलप्राप्तिः** (अबुद्धश्रीः).

**पलट्टजीहो, अगुज्झहरो–रहस्यभेदी** (पर्यस्तजिह्वः, अगुह्यहरः).

**परेओ–पिशाचः** (परेतः)

**बहुजाणो–चोरो धूर्तश्च**

**जोई–विद्युत्** (ज्योतिः)

**उज्जल्लो–प्रबलः** (उज्ज्वलः)

**।भिंगं–नीलं, स्वकृतं चेति चन्द्रिकादौ**

**णिअद्धणम्–परिधानम्** णिअंधणमिति- त्रैविक्रमे (निबन्धनम्).

**जहणोसअं, चलणअं–जघनांशुकम्.** जहणूसअमिति त्रैविक्रमे (जघनांशुकं, चलनकम्).

पाउरणं–कवचम् (प्रावरणम्)

ओअल्लो–कम्पः, अपचारश्च

चपेटा–करावातः

रइलक्खं–जघनम् (रतिलक्ष्यम्)

गोसण्णो–मूर्खः (गोसंज्ञः)

वावडो–कुटुम्बी (व्यापृतः)

पुरिल्लो–दैत्यः (पुरोभवाः)

परभत्तो–भीरुः (परभक्तः)

चच्चिक्को–स्थासकः (चर्चिका)

कालं–तमिस्रम् (कालम्)

भट्टिओ–विष्णुः (भर्तृकः)

इंदग्गिधूमो–तुहिनम् (इन्द्राग्निधूमः)

पत्थरं–पादताडनं (प्रस्तरः)

ओवाअओ–अपातपः

पिउच्छा, माउआ–सखी (पितृष्वसा) (मातृका).

पोरत्थो–मत्सरी (पौरस्त्यः)

दोसो–कोपः (दोषः)

चच्चा–तलाहतिः

पम्हलो–केसरः (पक्ष्मलः)

खंदलट्ठी, खंधमसो–(स्कन्धयष्टिः स्कन्धमृशः).

तंबकिमी, अग्गिअओ–इन्द्रगोपः, अग्निकायः).

विहडणो–अनर्थः (विघाटनः)

जोअणो, जोअडो–खद्योतः

जोइओ–खद्योतः (ज्योतिष्कः)

दरवल्लहो–कातरः (दरवल्लभः)

**भोइओ–ग्रामेशः (भौगिकः)**
**पंडरंगो–महेशः (पाण्डरङ्गः)**
**संकरो–रथ्या (संकीर्यतेऽत्रेति संकरः)**
**सग्गहो–मुक्तः (स्वग्रहः)**
**पअरो–अर्थपरः (अर्थदर इति चन्द्रिकायाम्).**
**मइमोहिणी–सुरा (मतिमोहिनी)**
**धारावासो–दर्दुरकी (धारावास:)**
**कमलं–आस्यं पटहश्च**
**वेणुसाओ, दुवराओ–भ्रमरः (वेणुनादः, ध्रुवरागः).**

इति निपातनप्रकरणम्.

इति महिशूरराजकीयप्राच्यकोशालयविदुषः तिरु. तिरु. श्रीनिवासगोपालाचार्यस्य कृतौ प्राकृतमणिदीपटिप्पण्यां दीधित्यभिख्यायां प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ प्रथमाध्यायः समाप्तः ॥

---

# अथ तद्धितप्रकरणम्.

## मन्त-मण-वन्त-मा-आलु-आल-इर-इल्ल-उल्ल-इन्ता मतुपः ॥ २-१-१ ॥

मतुपः स्थाने एते दश यथादर्शनं स्युः । मन्त-श्रीमान्-[1] सिरिमन्तो । मण-धनवान्-[2] धणमणो । वन्त-भक्तिमान्-[3] भत्तिवन्तो । मा-हनुमान्-[4] हणुमा । अयमाकारान्तः । आलु-दयावान्-दयालू । आल-शब्दवान्-[5] सद्दालो ॥

## (वा) [6] एवमादौ सन्धिर्नित्यो वाच्यः ॥

---

### अथ तद्धितप्रकरणम्.

[1] **सिरिमन्तो इति** ॥ श्रीमच्छब्दे 'हर्षामर्ष' (प्रा. सू. १-४-९९) इत्यादिना रेफात्पूर्वमिकारागमे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शकारस्य सत्वे 'क्विपः' (प्रा. सू. २-२-४७) इतीकारस्य ह्रस्वे प्रकृतसूत्रेण मतुपो मन्तादेशे च सिरिमन्तो इति रूपं बोध्यम् ॥

[2] **धणमणो इति** ॥ धनशब्दे नकारस्य 'नः' (प्रा. सू. १-३-५२) इति णकारो बोध्यः ॥

[3] **भत्तिवन्तो इति** ॥ भक्तिशब्दे संयोगे ककारस्य 'कगटड' (प्रा. सू. १-४-७७) इत्यादिना लुकि शिष्टस्य तकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वं बोध्यम् ॥

[4] **हणुमेति** ॥ हनुशब्दे नकारस्य 'नः' (प्रा. सू. १-३-५२) इति णत्वं बोध्यम्॥

[5] **सद्दालो इति** ॥ शब्दवान् इत्यत्र शब्दशब्दे बकारस्य 'वबयोरभेदः' इति न्यायाश्रयणेन वकाराभेदात्तस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि शिष्टस्य दकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे शकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वे प्रकृतसूत्रेण मतुप्प्रत्ययस्य आलादेशे च सद्दालो इति रूपम् ॥

[6] **एवमादावित्यादि** ॥ शब्दवान् इत्यत्र मतुपः प्रकृतसूत्रेण आलादेशे 'सन्धिरस्वपदे' (प्रा. सू. १-१-१९) इति प्राकृते एकपदे सन्धेर्निषेधेन सद्दालो

इर–गृहवान्–[1] गहिरो । इल्ल–शोभावान्–[2] सोहिल्लो । उल्ल–विकार-वान्–[3] विआरुल्लो । इन्त–मानवान्–[4] माण इन्तो ॥

(वा) [5] एवमादिष्वसन्धिरेव वाच्यः ॥

मतुप इति किम् ? [6] धणी अत्थी ॥

---

इत्यत्र कथं सवर्णदीर्घ इत्याशङ्कायामिदं वार्तिकं प्रवृत्तमिति बोध्यम् । वस्तुतस्तु–गृहवान्–गहिरो इत्यादौ 'अनुक्तमन्य' इत्यादिन्यायेन 'यस्येति च' (पा. सू. ६-४-१८) इति पाणिनीयसूत्रेण अकारलोपस्याभ्युपगन्तव्यतया आल्वालयोरपि तेनैवाभिमतरूपसिद्ध्या वार्तिकस्यास्य नातीव प्रयोजनमिति भाति । अत एव चन्द्रिकायां 'गर्ववान्–गव्विरो' इत्यत्र 'अनुक्तन्यायेन यस्येति चेत्यकारलोपः' इत्युक्तम् । एतद्रीत्यैव 'दर्पवान्–दप्पुलो' इत्यत्रापि सिद्ध्या चन्द्रिकायां डित्करणाभावेऽपि बहुलग्रहणादकारलोपः' इत्यभिधानं समाधानान्तरपरतया योज्यमिति भाति । अत एव बहुलग्रहणात् माणइन्तो इत्यत्र 'यस्येति च' (पा. सू. ६-४-१८) इत्यकारलोपाभावोऽपि साधनीयः ॥

[1] गहिरो इति ॥ गृहवान्–इत्यत्र आदेः ऋकारस्य 'ऋतोऽत्' (प्रा. सू. १-२-७४) इत्यत्वे प्रकृतसूत्रेण मतुप इरादेशे 'यस्येति च' (पा. सू. ६-४-१८) इति हकारोत्तरवृत्त्यकारस्य लोपे गहिरो इति रूपम् ॥

[2] सोहिल्लो इति ॥ शोभावानित्यत्र 'खघथधभाम्' (प्रा. सू. १-३-२०) इति भकारस्य हकारादेशो, मतुपः प्रकृतसूत्रेणेल्लादेशश्च बोध्यः ॥

[3] विआरुल्लो इति ॥ विकारवानित्यत्र 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यनेन ककारस्य लुक् प्रकृतसूत्रेण मतुप उल्लादेशश्च बोध्यः ॥

[4] माणइन्तो इति ॥ मानवानित्यत्र नकारस्य 'नः' (प्रा. सू. १-३-५२) इति णत्वं, मतुपः प्रकृतसूत्रेण इन्तादेशो, बहुलग्रहणात् 'यस्येति च' (पा. सू. ६-४-१८) इत्यकारलोपाभावश्च बोध्यः ॥

[5] एवमादिष्वित्यादि ॥ 'एवमादौ सन्धिर्नित्यो वाच्यः' इति पूर्वप्रदर्शित' वार्तिकेन सन्धौ प्राप्ते तन्निषेधार्थोऽयमारम्भः । तथाच 'माणइन्तो' इत्यत्र 'आद्गुणः-(पा. सू. ६-१-८७) इति गुणे प्राप्ते अनेन तन्निषेधात् माणइन्तो इत्येव रूपमिति भावः ॥

[6] धणीत्यादि ॥ 'मन्तमणवन्त' (प्रा, सू. २-१-१) इति सूत्रे मतुप इत्यनेन मतुप्प्रत्ययस्यैव ग्रहणं, न तु तदर्थकप्रत्ययस्येत्यर्थः । ततश्च धनी अर्थी

## [1] वतुपो डित्तिअ एतल्लुक्चैतद्यत्तदः ॥ २-१-२ ॥

एतद्यत्तद्भ्यः परस्य परिमाणार्थस्य वतुपो डिद्दित्तिअः स्यात् । एतदश्च लुक् । एतावान्-इत्तिओ । यावान्- [2] जित्तिओ । तावान्-तित्तिओ ॥

## किमिदमश्च डेत्तिअडित्तिलडेद्दहम् ॥ २-१-३ ॥

किमिदंभ्यां चादेतद्यत्तद्भ्यश्च वतुपो डित एते स्युः । कियान्-केत्तिओ कित्तिलो केद्दहो । इयान्-एत्तिओ इत्तिलो एद्दहो । अत्राप्येतल्लुक् । एतावान्-एत्तिओ इत्तिलो एद्दहो । यावान्-जेत्तिओ, इत्यादि ॥

## [3] हित्थहास्त्रलः ॥ २-१-७ ॥

---

इत्यादौ मत्वर्थीयस्य इनिप्रत्ययस्य मन्तादय आदेशा न भवन्तीति सिध्यति । इत्थं च धनीत्यत्र इनेर्मन्ताद्यादेशाभावेन नकारस्य 'नः' (प्रा. सू. १-३-५२) इति सूत्रेण णकारादेशे धणीत्येव रूपम् । एवं अर्थीत्यत्रापि इनेः प्रकृतादेशाभावेन तत्रत्यरेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि शिष्टस्य थकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य थस्य 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयप्रथमवर्णादेशे च अत्थीति रूपम् ॥

[1] **वतुपो डित्तीत्यादि ॥** चन्द्रिकादौ 'वतुपो डित्तिअमिदमेतल्लक्चैतद्यत्तदः' इति सूत्रपाठो दृश्यते । ननु इदमः परस्य वतुपो डित्तिआदेशस्य विधानाभावेन पाठोऽयं कथं संगच्छत इति चेत्, अत एवोत्तरार्थमिदंग्रहणमिति त्रिविक्रमदेवेनाभ्यधायि । ननु तत्रैवेदं क्रियतामिति चेत् । एतत्सूत्रात् एतल्लुगितिपदानुवृत्तेरावश्यकतया लाघवादत्रैवेदंग्रहणमपि कृतमिति त्रिविक्रमदेवाशयः स्यादिति भाति ॥

[2] **जित्तिओ इति ॥** यावान् इत्यत्रत्यस्य वतुपः प्रकृतसूत्रेण डित्तिआदेशे डस्येत्त्वेन डित्वाट्टिलोपे 'आदेर्जः' (प्रा. सू. १-३-७४) इति यकारस्य जकारादेशे जित्तिओ इति रूपम् ॥

[3] **हित्थहास्त्रल इति ॥** एतत्सूत्रात्पूर्वं पान्थसर्वाङ्गीणशब्दद्वयगततद्धितयोरिकादेशविधानेन पहिओ सव्वंगिओ इति रूपसाधकं 'इकः पथो णस्य' (प्रा. सू. २-१-४) 'खस्य सर्वाङ्गात्' (प्रा. सू. २-१-५) इति सूत्रद्वयं, तथा आत्मीयशब्दगतच्छप्रत्ययस्य णअ-इत्यादेशविधानेन अप्पणअं इति रूपसाधकं 'छस्यात्मनो णअः'

यत्र–[1] जहि जत्थ जह । तत्र–तहि तत्थ तह ॥

केर इदमर्थे ॥ २–१–८ ॥

[2] परस्येदं परकेरम् ॥

[3] वर्वतेः ॥ २–१–११ ॥

उपमानार्थस्य वतेः वर स्यात । रित्त्वाद्द्वित्वम् । मधुरावत्–[4] महुरव्व ॥

त्वस्य तु डिमात्तणौ ॥ २–१–१३ ॥

भावार्थस्य त्वप्रत्ययस्य डित् इमा त्तणश्च वा स्यात । पीनत्वं-

---

(प्रा. सू. २-१-६) इत्येकं च सूत्रं चन्द्रिकादौ दृश्यते । चन्द्रिकायां 'हिल्हहास्त्रलः' इत्यपि पाठो दृश्यते ॥

[1] जहीत्यादि ॥ यत्रेत्यत्र यकारस्य 'आदेर्जः' (प्रा. सू. १-३-७४) इति जकारादेशे हित्थहादेशेषु जहि जत्थ जह इति रूपाणि ॥

[2] परस्येदमित्यादि ॥ परस्येदमित्यर्थे 'गहादिभ्यश्च' (पा. सू. ४-२-१३८) इति सूत्रविहितस्य छप्रत्ययस्य प्रकृतसूत्रेण केरादेशे परकेरमिति रूपमिति भावः । वस्तुतस्तु—उत्तरत्र 'राजपराड्डिक्कडक्कौ च' (प्रा. सू. २-१-९) इत्यनेन केरादेशविधानात्प्रतिपदोक्तत्वेन परकेरमित्यस्य तत्सूत्रोदाहरणत्वौचित्यादत्र युष्मदीयः–तुम्हकेरो, अस्मदीयः–अम्हकेरो. इत्याद्युदाहरणमुचितमिति भाति ॥

[3] वर्वतेरिति ॥ एतत्सूत्रात्पूर्वं राजकीयशब्दस्य प्राकृते राइक्कं राअक्कं राअकेरं इति' तथा परकीयशब्दस्य पारिक्कं पारक्कं पारकेरं इति रूपसाधकं 'राजपराड्डिक्कडक्कौ च' (प्रा. सू. २-१-९) इत्येकं सूत्रं, यौष्माकास्माकशब्दयोः तुम्हेच्चअं अम्हेच्चअं इति प्राकृतरूपसाधकं 'डेच्चओ युष्मदस्मदो णः' (प्रा. सू. २-१-१०) इत्यपरं च सूत्रं सूत्रपाठे दृश्यमानं चन्द्रिकात्रिविक्रमवृत्त्योरुपादाय व्याकृतं दृश्यते ॥

[4] महुरव्वेति ॥ मधुरावत इत्यत्र वतिप्रत्ययस्य प्रकृतसूत्रेण वर्-इत्यादेशे तस्य रित्वात् 'रितो द्वित्वम्' (प्रा. सू. १-४-८५) इति द्वित्वे धकारस्य 'खघथधभाम्' (प्रा. सू. १-३-२०) इति हकारादेशे 'संयोगे' (प्रा. सू. १-२-४०) इत्याकारस्य ह्रस्वे च महुरव्वेति रूपं बोध्यम् ॥

**पीणिमा[1] पीणत्तणं । पक्षे–[2] पीणत्तं [3] पीणदा ॥**

## दोत्तो तसः ॥ २–१–१४ ॥

**तसप्रत्ययस्य एतौ [4] वा स्तः। [5] सर्वतः–सव्वदो सव्वत्तो । [6] पक्षे– सव्वओ । कुतः–कुदो कुत्तो । [7] सिद्धावस्थात् कुदो ॥**

---

[1] **पीणिमेति** ॥ पीनत्वशब्दे नकारस्य 'नः' (प्रा. सू. १-३-५२) इत्यनेन णत्वे प्रकृतसूत्रेण त्वप्रत्ययस्य डिमा–इत्यादेशे डित्वाट्टेरकारस्य लोपे पीणिमेति, त्तण- इत्यादेशे च पीणत्तणमिति च रूपं बोध्यम् ॥

[2] **पीणत्तमिति** ॥ डिमात्तणयोरुभयोरप्यादेशयोर्वैकल्पिकत्वात्तदुभयाभाव- पक्षे पीणत्वमित्यत्रत्यसंयुक्तावयववकारस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि शिष्टस्य तकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पीणत्तमिति रूपं बोध्यम् ॥

[3] **पीणदेति** ॥ इतः पूर्वं 'त्वस्येति किम् ? इति ग्रन्थो गलित इति भाति। एवं च मूलेऽस्मिन् भावार्थकत्वप्रत्ययस्यैव डिमात्तणादेशयोर्विधानात् 'पीनता' इत्यत्र त्वप्रत्ययस्याभावेन प्रकृतादेशयोरप्रवृत्त्या पीणदेत्येव रूपमिति भावः । अत्र तलस्त- कारस्य दकारादेश इति वृत्तिकृदाशय इति भाति ॥

[4] **वा स्त इति** ॥ 'तु विकल्पे' (प्रा. सू. १-१-१३) इति वार्थे संकेतितस्तु- शब्दः पूर्वसूत्रादनुवर्तत इति भावः ॥

[5] **सव्वदो सव्वत्तो इति** ॥ सर्वत इत्यत्र प्रकृतसूत्रेण तसिल्प्रत्ययस्य दो- त्तो–इत्यदेशयोः 'लवराधश्च' (प्रा सू. १-४-७८) इति रेफस्य लुकि शिष्टस्य वकारस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे सव्वदो सव्वत्तो इति रूपम् ॥

[6] **पक्ष इति** ॥ सर्वत इत्यत्र प्रकृतस्य दो–त्तो–इत्यादेशद्वयस्यापि वैकल्पिकतया तदुभयाभावपक्षे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारस्य लुकि पूर्ववद्रेफवकारयोर्लुग्द्वित्वयोः सव्वओ इति रूपं बोध्यमिति भावः ॥

[7] **सिद्धावस्थादित्यादि** ॥ कुत इति संस्कृते परिनिष्ठितां प्रकृतित्वेन परिगृह्य तत्रत्यस्य तसिलो दो–इत्यादेशो बोध्य इति भावः । अन्यथा किं+तस् इति प्रक्रि- यावस्थायाः परिग्रहे विभक्तिज्ञानसापेक्षात् 'कु तिहोः' (पा. सू. ७-२-१०४) इति

## [1]स्वार्थे तु कश्च ॥ २-१-१८ ॥

**[2]नाम्नः स्वार्थे कः स्यात् । चात् डिल्लोल्लडौ च वा । चन्द्रः-[3]चंदओ । डिल्लः, पल्लवं पल्लविल्लं । उल्लड्, मुखं-[4]मुहुल्लं । [5]क्वचिद्द्विरपि कः स्यात् । बहु-बहुअअं ॥**

---

सूत्रविहितक्कादेशात्पूर्वमेव दो-इत्यादेशस्य प्रवृत्त्या तकारादिप्रत्ययपरकत्वाभावेन 'कु तिहोः' (पा. सू. ७-२-१०४) इति सूत्रेण क्कादेशस्यानवकाशात् कुदो इति रूपं न सिध्येदिति भावः ॥

[1] **स्वार्थ इत्यादि** ॥ एतत्सूत्रात्पूर्वं एकदाशब्दस्य एक्कसि एक्कसिअ एक्कइआ इति रूपत्रयसाधकं 'एकादः सिसिअइआः' (प्रा. सू. २-१-१५) इत्येकं सूत्रं, तथा कृत्वसुच्प्रत्ययस्य हुत्त(हुन्त)मित्यादेशविधानेन शतकृत्व इत्यादौ सअहुत्त (हुन्त)मित्यादिरूपसाधकं 'हुत्तः(हुन्तं)कृत्वसुचः' (प्रा. सू. २-१-१६) इत्यपरं सूत्रं, तथा भवार्थे डितोरिल्लोल्लयोर्विधानेन पुरो भवमित्यर्थे पुरिल्लमित्यादि रूपनिष्पादकं 'डिल्लोल्लडौ' (प्रा. सू. २-१-१७) इत्यन्यच्च सूत्रं चन्द्रिकात्रिविक्रमवृत्त्योर्विवृतं दृश्यते ॥

[2] **नाम्नः स्वार्थ इति** ॥ यद्यपि स्वार्थिककप्रत्ययान्ते चन्द्रक इत्यादौ 'प्रायो लुक्' (प्रा सू. १-३-८) इत्यनेन कलोपे चन्दओ इति रूपं सिध्यति, तथापि स्वार्थ एव विहिताभ्यां कप्रत्ययस्य बाधो मा भूदित्यर्थं प्राकृतेऽपि स्वार्थे कप्रत्ययविधानं सार्थकमिति बोध्यम् ॥

[3] **चन्दओ इति** ॥ चन्द्रशब्दात् प्रकृतसूत्रेण स्वार्थे कप्रत्यये ककारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि रेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि च चन्दओ इति रूपम् । यद्यपि 'स्वार्थे तु कश्च' इत्यस्मिन् सूत्रे 'अश्च' इत्यकारप्रत्ययविधाने 'प्रायो लुक्' (प्रा. सू. १-३-८) इति ककारलुगकरणप्रयुक्त-लाघवमपि संभवति, तथाऽपि पैशाच्यां ककारलुकोऽप्रवृत्त्या तत्र ककारश्रवणार्थमत्र कप्रत्ययस्यैव विधानमिति भाति ॥

[4] **मुहुल्लमिति** ॥ मुखशब्दात् स्वार्थे प्रकृतसूत्रेण उल्लडि खकारस्य 'खघथध-भाम्' (प्रा. सू. १-३-२०) इति हकारादेशे डित्त्वाट्टिलोपे च मुहुल्लमिति रूपं बोध्यम् ॥

[5] **क्वचिद्द्विरपीति** ॥ स्वार्थिककप्रत्ययान्तात्पुनरपि कप्रत्यय इष्ट इति भावः । तेन बहुशब्दात्कप्रत्यये तदन्तात्पुनः कप्रत्यये च 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना ककारद्वयस्यापि लुकि बहुअअं इति रूपमिति भावः ॥

## [1]शनैसो डिअं ॥ २-१-२२ ॥

शनैः-[2] सणिअं । स्वार्थ एव ॥

## [3]रो दीर्घात् ॥ २-१-२४ ॥

स्वार्थ एव वा स्यात् । दीर्घः-[4] दीहो-दीहरो । दिग्घो इत्यप्युक्तम् ॥

---

[1] शनैसो इति ॥ एतत्सूत्रात्पूर्वं उत्तरीयमित्यर्थे उवरिल्लमिति रूपसाधकं 'उपरेस्संव्याने ल्लः' (प्रा सू. २-१-१९) इत्येकं सूत्रं, तथा नवैकशब्दयोः नवल्लो एकल्लो इति रूपसाधकं 'नवैकाद्वा' (प्रा. सू. २-१-२०) इत्यन्यत्सूत्रं, तथा मिश्रशब्दस्य मीसालिअमिति रूपसाधकं 'मिश्रालिअश्' (प्रा. सू. २-१-२१) इत्यपरं च सूत्रं सूत्रपाठोपात्तं चन्द्रिकात्रिविक्रमवृत्त्योर्विवृतं दृश्यते । अत्र सूत्रे नित्यत्वार्थं लित्त्वमित्यभिप्रायेण चन्द्रिकात्रिविक्रमवृत्त्योः 'शनैसो लिडअम्' इति सूत्रपाठ आदृतः । एतत्प्रकरणपरिशीलनेन प्रत्ययस्यास्य तद्धितत्वादेतदादिभूतस्य लकारस्य 'अतद्धिते' इत्युक्तत्वेऽपि बहुलाधिकारादित्त्वं कल्पनीयमिति तदाशय इति भाति । वस्तुतस्त्वत्रोत्तरत्र 'मनाको डअं च वा' (प्रा. सू. २-१-२३) इति सूत्रे वाग्रहणेऽनुवर्तमाने तत्र पुनर्वाग्रहणबलात्तत्पूर्वसूत्रभूतेऽस्मिन् वाग्रहणानुवृत्त्यभावस्य कल्पनेनैव नित्यत्वे सिद्धे तदर्थमत्र लित्करणमपि नातीव सफलं भवतीति भाति ॥

[2] सणिअमिति ॥ शनैश्शब्दात् स्वार्थे डिअमि डित्वात् ऐस् इत्यस्य टेर्लोपे शकारस्य 'शोस्सल्' (प्रा. सू. १-३-८७) इति सत्वे नकारस्य 'नः' (प्रा. सू. १-३-५२) इति णत्वे सणिअमिति रूपं बोध्यम् ॥

[3] रो दीर्घादिति ॥ एतत्सूत्रात्पूर्वं मनाक्शब्दस्य मणअं मणिअं इति रूपद्वय-साधकं 'मनाको डअं च वा' (प्रा. सू. २-१-२३) इत्येकं सूत्रं सूत्रपाठोपात्तं चन्द्रिकात्रिविक्रमवृत्त्योर्विवृतं दृश्यते ॥

[4] दीहो इत्यादि ॥ दीर्घशब्दे संयुक्तस्य 'न वा तीर्थदुःखदक्षिणदीर्घे' (प्रा. सू. १-४-६३) इत्यनेन हकारादेशे प्रकृतसूत्रेण रप्रत्यये दीहरो इति, रप्रत्ययस्यास्य वैकल्पिकत्वात्तदभावपक्षे दीहो इति, हकारादेशस्य रप्रत्ययस्य च वैकल्पिकत्वात्तदुभया-भावपक्षे प्रयोगानुरोधात्पूर्वमेव 'संयोगे' (प्रा. सू. १-२-४०) इति ईकारस्य ह्रस्वे ततो 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि शिष्टस्य घस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे पूर्वस्य 'पूर्वमुपरि'

(प्रा. सू. १-४-९४) इत्यादिना तद्वर्गीयतृतीयवर्णादेशे दिग्वो इति रूपम्। अत्र हृत्वा-भावपक्षे रप्रत्ययस्य प्रवृत्तिपक्षे दिग्घरो इति रूपं भवति न वेति विमर्शनीयम् ॥

## [1] डुमअडमऔल् भ्रुवः ॥ २-१-२५ ॥

डलावितौ । भ्रूः–[2] भुमआ भमआ ॥

## लो वा विद्युत्पत्रपीतान्धात् ॥ २-१-२६ ॥

स्वार्थ एव । विद्युत्–[3] विज्जुला [4] विज्जू ॥

इति तद्धितप्रकरणम्.

---

[1] डुमअ-इत्यादि ॥ 'ल्डुमअडमऔ भ्रुवः' इति त्रिविक्रमवृत्तौ चन्द्रिकायां चैतत्सूत्रपाठ उपलभ्यते । 'लो वा विद्युत्पत्र' (प्रा. सू. २-१-२६) इत्येतदुत्तरसूत्रे वाग्रहणादेवात्र सूत्रे वाग्रहणानुवृत्तेर्विच्छेदसंभवेनात्र लित्करणं नातीवोपयुक्तमिति बोध्यम् ॥

[2] भुमअ-इत्यादि ॥ भ्रूशब्दात्स्वार्थे डुमअडमअप्रत्यययोः डित्त्वात् पूर्वस्यो-कारस्य लोपे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति संयुक्तावयवरेफस्य लुकि शिष्टस्य भकारस्य आदिभूततया 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यत्र अखोरित्यु-क्तत्वाद्दीर्घाभावे च भुमआ भमआ इति रूपं बोध्यम् ॥

[3] विज्जुला इति ॥ विद्युच्छब्दे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यन्त्यस्य तकारस्य लोपे प्रकृतसूत्रेण स्वार्थे लप्रत्यये 'द्यय्यर्यां जः' (प्रा. सू. १-४-२४) इति द्य-इत्यस्य जकारादेशे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इति द्वित्वे 'अनुक्तमन्य' (प्रा. सू. १-१-२) इत्यादिना पाणिनीयानुरोधेनादन्ततया 'अजाद्यतष्टाप्' (पा. सू. ४-१-४) इति स्त्रियां टापि विज्जुलेति रूपम् ॥

[4] विज्जू इति ॥ लप्रत्ययस्यास्य वैकल्पिकतया तदभावपक्षे 'द्यय्यर्यां जः' (प्रा. सू. १-४-२४) इति द्य-इत्यस्य जकारादेशे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे विज्जू इति रूपं बोध्यम् ॥

इति तद्धितप्रकरणम्.

# अथ द्विरुक्तप्रकरणम्.

## वीप्सार्थादचि सुपो मन्तु ॥ २-२-१ ॥

वीप्सार्थेन द्विरुक्तौ पूर्वपदस्थस्य सुपो मकारो वा स्यादचि परे। एकैकं-[1] एक्कमेक्कं [2] एक्केक्कं। अङ्गे अङ्गे [3] अङ्गमङ्गे ॥

इति द्विरुक्तप्रकरणम्.

---

## अथ द्विरुक्तप्रकरणम्.

[1] एक्कमेक्कमिति ॥ 'नित्यवीप्सयोः' (पा. सू. ८-१-४) इत्येकशब्दस्य वीप्सायां द्वित्वे पूर्वपदस्थस्य सुपः प्रकृतसूत्रेण मादेशे पदद्वयगतककारस्य 'दैवगेऽखौ (प्रा. सू. १-४-९२) इति द्वित्वे एक्कमेक्कमिति रूपं बोध्यम् ॥

[2] एक्केक्कमिति ॥ एकैकमित्यत्रत्यैकशब्दद्वयगतककारद्वयस्य पूर्ववत् 'दैवगेऽखौ' (प्रा. सू. १-४-९२) इति द्वित्वे 'संयोगे' (प्रा. सू. १-२-४०) इति संयोगात्पूर्वयोरेकारैकारयोः प्रयोगानुसारेण प्राकृते क्वचित् ह्रस्वभूतस्य एकारस्य प्रयोग इत्यभ्यनुज्ञानाद्ध्रस्वभूतस्य एकारस्य प्रवृत्तौ एक्केक्कमिति रूपमिति भाति ॥

[3] अङ्गमङ्ग इति ॥ प्राकृते ङेर्म्मिरादेशस्य 'ङेर्म्मिर्' (प्रा. सू. २-२-११) इति सूत्रेण विधानादत्र अङ्गमङ्गम्मि इति पाठेन भाव्यमिति भाति । अङ्गे अङ्गे इत्यत्र पूर्वपदस्थस्य ङेस्सुपो मादेशे अङ्गमङ्गम्मीति रूपं बोध्यम् ॥

इति द्विरुक्तप्रकरणम्.

# अथ सुबन्तप्रकरणम्.

**राम सु इति स्थिते-**

**सोः ॥ २-२-१३ ॥**

[1] अतः परस्य सोर्डिदो स्यात्। रामो ॥

**राम औ इति स्थिते—**

**द्विवचनस्य बहुवचनम् ॥ २-३-३४ ॥**

**राम जस् इति स्थिते—**

**श्लुग्जश्शसोः ॥ २-२-३ ॥**

[2] नाम्नः परयोरनयोः [3] लुक्स्यात्। [4] शित्त्वाद्दीर्घः, रामा ॥

**संबोधने—**

**दे संमुखीकरणे ॥ २-१-५८ ॥**

दे इत्यव्ययं संमुखीकरणे सख्या आमन्त्रणे हे इतिवत्स्यात् ॥

---

अथ सुबन्तप्रकरणम्.

[1] **अतः परस्येत्यादि** ॥ सूत्रेऽस्मिन् 'अतो डा विसर्गः' (प्रा. सू. २-२-१२) इत्यतः अतः डो इति पदद्वयस्याधिकारात् अतः परस्येति डिदो स्यादिति चार्थो लभ्यत इति भावः ॥

[2] **नाम्न इति** ॥ अत्र सूत्रे जश्शसोरित्युक्त्या नाम्न एव जश्शसोर्विधानादत्र नाम्न इत्यर्थतो लब्धम्। 'नाम च धातुजमाह निरुक्ते' इत्यादिभगवत्पतञ्जल्यादिव्यवहारेण नामपदं सुप्प्रकृतिबोधकम् ॥

[3] **लुक्स्यादिति** ॥ पाणिनीये 'प्रत्ययस्य लुक्श्लुलुपः' (पा. सू. १-१-६१) इत्यनेन प्रत्ययादर्शने लुक्पदस्य संकेतितत्वेनात्रापि 'अनुक्तमन्य' (प्रा. सू. १-१-२) इत्यनेन तस्याभ्यनुज्ञानाज्जश्शसोरदर्शनं भवतीत्यर्थः ॥

[4] **शित्त्वाद्दीर्घ इति** ॥ 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति सूत्रेणेति भावः ॥

[1]आमन्त्रणे बब्व ॥ २-१-५७॥

स्पष्टम् । दे राम सु इति स्थिते-

डोश्लुकौ तु संबुद्धेः ॥ २-२-४२ ॥

'सोः' (प्रा. सू. २-२-१३) इति विहितो यो डो, यश्च 'श्लुगनपि सोः' (प्रा.सू. २-२-२९) इति विहितः श्लुक् तौ संबुद्धेर्वा स्याताम् । डोत्वे दे रामो । [2]श्लुकि दे रामा । [3]पक्षे-

सोर्लुक् ॥ २-२-९ ॥

नाम्नः परस्य सोर्लुक्स्यात् । दे राम ॥
राम अम् इति स्थिते-

अमः ॥ २-२-२ ॥

नाम्नः परस्य अमो मः स्यात् । एष [4]सर्वादेशः । रामं ॥

---

[1]आमन्त्रण इति ॥ 'आमन्त्रणे पव्वे च' इति चन्द्रिकादौ सूत्रपाठो दृश्यते ॥

[2]श्लुकीति ॥ संबोधनप्रथमाबहुवचनस्य जसः 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इत्यनेन श्लुकि तस्य शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे दे रामा इति रूपमिति भावः । यद्यपि यथाश्रुतग्रन्थसन्दर्भपर्यालोचनायां संबोधनप्रथमैकवचनस्य सोः 'श्लुगनपि सोः' (प्रा. सू. २-२-२९) इत्यनेन श्लुकि दे रामा इति रूपमिति प्रतीयते, तथाऽपि 'श्लुगनपि सोः' (प्रा. सू. २-२-२९) इत्यत्र इदुत इत्यस्यानुवृत्त्या अकारान्तात्परस्य सोः श्लुकोऽप्रवृत्त्याऽत्र तथाऽर्थवर्णनस्यानुपपत्तिः स्यात । तथैवोत्तरत्र तस्मिन्नेव सूत्रे अनेनैव वृत्तिकृता इदुतः परस्य सोश्शिल्लुक्स्यादित्यर्थो वर्णितः । तथैव त्रिविक्रमदेवादिभिरप्यभिहितम् ॥

[3]पक्ष इति ॥ संबोधनप्रथमैकवचनने 'सोः' (प्रा. सू. २-२-१३) इति विहितस्य डो—इत्यादेशस्य 'डोश्लुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२) इत्यनेन वैकल्पिकत्वबोधनेन डो—इत्यादेशाभावपक्ष इत्यर्थः ॥

[4]सर्वादेश इति ॥ 'अनुक्तमन्य' (प्रा. सू १-१-२) इत्यादिन्यायेन पाणिनीयानुरोधेन अलोन्त्यपरिभाषया 'अलोऽन्त्यस्य' (पा. सू १-१-५२) इति मकारस्य मकारादेशविधाने वैयर्थ्यसंभवादमस्सर्वस्य स्थानेऽयं मकारादेश इत्यर्थः । यद्यप्यनेन

शसि [1] जस्वत् रामा ॥

## शस्येत् ॥ २-२-२० ॥

[2] अतः शसि परे एद्वा स्यात् । [3] रामे ॥
राम टा इति स्थिते—

## टो डेणल् ॥ २-२-१८ ॥

अतः परस्य टावचनस्य [4] डिदेणः स्यात् । [5] लित्त्वान्नित्यं, रामेण । '[6] क्त्वासुपोः' (प्रा. सू. १-१-४३) इति बिन्दौ रामेणं ॥

---

सूत्रेण मादेशविधानाभावेऽपि पाणिनीयानुरोधेन 'अमि पूर्वः' (पा. सू. ६-१-१०) इत्यनेन पूर्वरूपेणाभिमतं रूपं सिध्यति. तथाऽपि अनुक्तस्यैव व्याकरणान्तरस्याभ्यनुज्ञानात्तद्बलादत्रोक्तस्य वैयर्थ्यं नाशङ्कनीयमिति बोध्यम् । ततश्चानेनामम्सर्वस्य मकारादेशे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति मलोपे प्राप्ते 'बिन्दुल' (प्रा. सू. १-१-४०) इति सूत्रेण मकारस्य बिन्दौ 'रामं' इति रूपं बोध्यम् ॥

[1] जस्वदिति ॥ द्वितीयाबहुवचनस्य शसः 'श्लुगजश्शसोः' (प्रा. सू. २-२-३) इत्यनेन श्लुकि शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे च रामा इति रूपमिति भावः ॥

[2] अत इत्यादि ॥ 'अतो डो विसर्गे' (प्रा. सू. २-२-१२) इति सूत्रादत इति 'दिर्वा भ्यसि' (प्रा. सू. २-२-१९) इत्यतो वेति चानुवर्तत इति भावः ॥

[3] रामे इति ॥ एत्वपक्षेऽपि शसः पूर्ववच्छ्लुकि रामे इति रूपमिति भावः ॥

[4] डिदेण इति ॥ अनुक्तमन्यन्यायेन 'आदिर्ञिटुडवः' (पा. सू. १-३-५) इति डेणलि डकारस्येत्संज्ञेति भावः । डित्करणस्यात्र फलं तु 'टेः' (पा. सू. ६-४-१४३) इति टिलोपरूपं बोध्यम् ॥

[5] लित्त्वान्नित्यमिति ॥ 'ङसिसो हि' (प्रा. सू. २-२-१७) इत्येतत्पूर्वसूत्रे वाग्रहणानुवृत्तेरत्र तन्निवृत्तिबोधनाय 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इति नित्यत्वार्थमत्र लित्करणमिति भावः ॥

[6] क्त्वासुपोरिति ॥ क्त्वाप्रत्ययसंबन्धिनः सुप्संबन्धिनश्च सुकाराण्णकाराच्च परो बिन्दुरागमो वा स्यादिति 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति सूत्रस्यार्थो बोध्यः ॥

भिसि—

**हिंहिँहि भिसः ॥ २-२-५॥**

सबिन्दुः सानुनासिकः [1] केवलश्च । रामेहिं रामेहिँ रामेहि ॥

**भिसुभ्यस्सुपि ॥ २-२-२१ ॥**

एष्वत एत्वं [2] नित्यं स्यात्, इत्येत्वम् ॥

**ङसो ङम् ॥ २-३-३५ ॥**

[3] चतुर्थ्याः षष्ठी स्यात् ॥

**तादर्थ्ये ङेस्तु ॥ २-३-३६ ॥**

[4] चतुर्थ्येकवचनस्य [5] षष्ठी वा स्यात्तादर्थ्ये । तथा च, रामस्स पक्षे—रामाय पोप्फाणि । [6] शेषं संस्कृतवदिति वक्ष्यमाणत्वात् ।

---

[1] केवलश्चेति ॥ भिस आदेशा भवन्तीति शेषः ॥

[2] नित्यमिति ॥ एतत्पूर्वभूते 'अस्येत्' (प्रा. सू. २-२-२०) इति सूत्र एव भिस्भ्यस्सुब्ग्रहणमकृत्वा पृथक्सूत्रारम्भसामर्थ्यादिदं लब्धमिति बोध्यम् ॥

[3] चतुर्थ्या इत्यादि ॥ सूत्रेऽस्मिन् 'ङसः' इति 'ङेभ्यांभ्यस्' (पा. सू. ४-१-२) इत्यत्र ङे—इत्यस्य सु-इत्यनेन प्रत्याहारेण चतुर्थीविभक्तिबोधकः, ङमिति च 'ङसोसाम्' (पा. सू. ४-१-२) इत्यत्रत्यङकारस्य तत्रत्यमकारेण सह प्रत्याहारेण षष्ठीबोधक इति भावः ॥

[4] चतुर्थ्येकवचनस्येति ॥ सूत्रेऽस्मिन् 'ङेः' इति षष्ठ्यन्तं ङेप्रत्ययस्येत्यर्थकम् । ततश्च चतुर्थ्येकवचनस्येति लब्धम् ॥

[5] षष्ठीति ॥ पूर्वसूत्रात् ङमिति पदानुवृत्त्या तस्य च षष्ठीविभक्त्यर्थकतयाऽत्र ङेरित्येकस्यैव स्थानिनो ग्रहणात् चतुर्थ्येकवचनस्य षष्ठ्येकवचनरूपो ङसादेशो वा भवतीत्येतत्सूत्रार्थो बोध्यः । तथा च प्राकृते तादर्थ्यचतुर्थ्येकवचनमात्रस्य प्रयोगो, न तु तदितरचतुर्थीविभक्तेरिति सिद्धम् । ततश्च प्राकृते तादर्थ्यविवक्षायां 'रामाय रामस्स वा पोप्फाणि' इति प्रयोगस्सिद्धः ॥

[6] शेषमित्यादि ॥ प्राकृतेऽस्मिन् तादर्थ्यचतुर्थ्येकवचनस्याभ्युपगमेऽपि तत्र प्रक्रियाविशेषाकथनेन 'शेषं संस्कृतवत्' (प्रा. सू. २-४-७१) इत्यनुक्तस्थले संस्कृतप्रक्रियादर्शनेन च तत्र संस्कृतवत् रामायेत्येव रूपमिति भावः ॥

ङसौ —

## हिंतोत्तोदादु ङसिस् ॥ २-२-६ ॥

[1] पञ्चम्या एते चत्वारः स्युः ॥

## दिर्दोत्तोदुङसौ ॥ २-२-८ ॥

**पञ्चम्यादेशेषु [2] पञ्चम्येकवचने च पूर्वस्य अचो [3] दीर्घः स्यात्। रामाहिंतो। [4] अत्रैकवचनत्वाद्दीर्घः। [5] संयोगे (प्रा. सू. १-२-४०) इति ह्रस्वः, रामत्तो [6] रामाओ रामाउ ॥**

---

[1] **पञ्चम्या** इति ॥ सूत्रेऽस्मिन् ङसिस् इति 'ङसिभ्यांभ्यस्' (पा. सू. ४-१-२) इत्यत्रत्यस्य ङसीत्यस्य भ्यसित्यत्रत्यसकारेण सह प्रत्याहारेण पञ्चमीविभक्तिबोधकम्। तच्च षष्ठ्यर्थकप्रथमान्तमिति भावः। हिंतो त्तो दो दु-इत्यत्र समाहारद्वंद्वो बोध्यः।

[2] **पञ्चम्येकवचन** इति ॥ सूत्रेऽस्मिन् ङसौति पञ्चम्येकवचनबोधकमिति भावः॥

[3] **दीर्घ इति** ॥ सूत्रस्थं दिरिति पदं 'दिर्दीर्घः' (प्रा. सू. १ १ ६) इत्यत्र दीर्घरूपेऽर्थे संकेतितमिति भावः ॥

[4] **अत्रैकवचनत्वाद्दीर्घ इति** ॥ हिंतो-इत्ययमादेशः पञ्चम्येकवचनबहुवचनयोः स्थाने विहितः। तत्र बहुवचनविषये 'दिर्वा भ्यसि' (प्रा. सू. २ २-१९) इति वैकल्पिकतया दीर्घविधानादेकवचनादेशविषये प्रकृतसूत्रेण नित्यतया दीर्घ इति भावः। ततश्च पञ्चम्येकवचने हिंतो-इत्यादेशे रामाहिंतो इति, बहुवचने दीर्घपक्षे रामाहिंतो इति, तदभावपक्षे 'सिस्भ्यस्सुपि (प्रा सू. २ २ २१) इत्यनेन एत्वे रामेहिंतो इति च रूपं सिध्यति ॥

[5] **संयोग इति ह्रस्व इति** ॥ नन्वत्र दीर्घानन्तरमपि यदि ह्रस्वस्तर्हि दीर्घविधौ त्तोग्रहणं व्यर्थमिति चेन्न। दीर्घविधौ त्तोग्रहणाभावे भ्यसः स्थानेऽपि 'हिंतोत्तो' (प्रा. सू. २-२-६) इत्यादिना त्तो इत्यादेशस्य प्रवृत्त्या तत्र 'सिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इत्येत्वं प्रवर्तेतेति तद्बाधनाय तत्रापि नित्यतयाऽस्यैव दीर्घस्य प्रवृत्त्यर्थं दीर्घविधौ त्तोग्रहणमित्याशयात् ॥

[6] **रामाओ रामाउ इति** ॥ रामशब्दात् पञ्चम्येकवचने ङसिप्रत्यये तस्य 'हिंतोत्तोदोदु ङसिस्' (प्रा. सू. २-२-६) इति दो-दु इत्यादेशयोः ततः पूर्वस्य प्रकृतसूत्रेण दीर्घे दकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इति लुकि च रामाओ रामाउ इति च रूपद्वयम्। आदेशे दकारोच्चारणं तु भाषान्तरे सफलमिति बोध्यम् ॥

## ङसेः श्लुक् ॥ २-२-१५ ॥

अतः परस्य ङसेः श्लुग्वा स्यात् । रामा । यद्यपि रामादिति सिद्धावस्थात् 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५)इति लोपे 'रामा' इति रूपं सिध्यति, तथाऽपि ङसेः श्लुग्वचनं सिद्धावस्थाद्रूपनिष्पादनमतिक्लिष्टमिति ध्वनयितुम ॥

## ङसिसो हि ॥ २-२-१७ ॥

अतो ङसिसो हि वा स्यात् । [1]दीर्घः, रामाहि । एवमेकवचने पञ्चम्याः [2]षड्रूपाणि । बहुवचने तु—

## दिर्वा भ्यसि ॥ २-२-१९ ॥

अदन्तस्य [3]दीर्घो वा स्यात् भ्यसि आदेशे परे । [4]पक्षे 'भिसभ्यस्सुपि' (प्रा. सू. २-२-२१) इत्येत्वम्, रामाहिंतो रामेहिंतो रामाहि रामेहि । 'दिर्दोत्तोदुङसौ' (प्रा. सू. २-२-८) [5]इति दीर्घ एव

[1] दीर्घ इति ॥ पञ्चम्येकवचनस्य ङसो आदेशे 'दिर्दोत्तोदुङसौ' (प्रा. सू. २-२-८) इति ततः पूर्वस्य नित्यो दीर्घ इत्यर्थः ॥

[2] षड्रूपाणीति ॥ पञ्चम्येकवचनादेशेषु सर्वत्र 'दिर्दोत्तोदुङसौ' (प्रा. सू. २-२-८) इति नित्यतया दीर्घे रामाहिंतो रामत्तो रामाओ रामाउ रामा रामाहि इति षड्रूपाण्येवेति भावः ॥

[3] दीर्घो वेति ॥ 'दिर्दीर्घः' (प्रा. सू. १-१-६) इति दिपदस्य दीर्घे संकेतितत्वादेतत्सूत्रगतदिपदस्य दीर्घ इत्यर्थो लब्ध इति भावः ॥

[4] पक्ष इति ॥ एतत्सूत्रविहितदीर्घस्य वैकल्पिकत्वाद्दीर्घाभावपक्ष इत्यर्थः ॥

[5] इति दीर्घ एवेति ॥ भ्यसादेशेष्वपि दोत्तोदुषु 'दिर्दोत्तोदु' (प्रा. सू. २-२-८) इत्यनेनैव दीर्घः, न तु 'दिर्वा भ्यसि' (प्रा. सू. २-२-१९) इत्यनेन दीर्घ इति भावः । ननु भ्यसादेशेषु दोत्तोदुषु 'दिर्वा भ्यसि' (प्रा. सू. २-२-१९) इत्यनेनैव दीर्घ उचित इति चेन्न । तथा सति एकवचनादेशेषु तेषु ङसिस्वादेव सिद्धतया 'दिर्दोत्तोदुङसौ' (प्रा.सू. २-२-८) इत्यत्र दोत्तोदुग्रहणं व्यर्थं स्यादिति बहुवचनादेशेष्वपि तेषु नित्यतयैव दीर्घप्रवृत्त्यर्थं तच्चारितार्थ्यात् । एवं च बहुवचनादेशेषु दोत्तोदुषु वैकल्पिकदीर्घप्रवृत्तौ दीर्घाभावपक्षे 'भिसभ्यस्सुपि' (प्रा.सू. २-२-२१) इत्येत्वं स्यादिति

रामाओ रामाउ । 'संयोगे' (प्रा. सू. १-२-४०) इति [1] ह्रस्वे रामत्तो । 'दिदोत्तोदु' (प्रा. सू. २-२-८) इत्यत्र दोत्तोदुग्रहणं एत्वबाधनार्थम् ॥

## सुंतो भ्यसः ॥ २-२-७ ॥

[2] पञ्चमीबहुवचनस्य सुंतो इत्यादेशः स्यात् । रामासुंतो रामेसुन्तो । एवं भ्यसि [3] नव रूपाणि ॥

## ङसोऽस्त्रियां सर् ॥ २-२-१० ॥

स्पष्टम् । [4] रित्त्वाद्द्वित्वम् । रामस्स ॥

## णशामः ॥ २-२-४ ॥

आमः षष्ठीबहुवचनस्य णश् स्यात् । [5] शित्त्वाद्दीर्घः । रामाण ।

---

तद्बाधनार्थं तत्रापि दोत्तोदुषु नित्यतया दीर्घप्रवृत्त्यर्थं 'दिदोत्तोदु' (प्रा. सू. २-२-८) इत्यत्र दोत्तोदुग्रहणमिति फलितम् । अत एवोत्तरत्र वक्ष्यते 'दोत्तोदुग्रहणमेत्वबाधनार्थम्' इति ॥

[1] ह्रस्वे रामत्तो इति ॥ नन्वत्र दीर्घानन्तरमपि यदि ह्रस्वस्तर्हि तत्र दीर्घविधानं व्यर्थमिति चेन्न । 'भिसभ्यस्सुपि' (प्रा. सू. २-२-२१) इत्येत्वबाधनार्थं दीर्घविधानस्य चारितार्थ्यमित्याशयात् ॥

[2] पञ्चमीबहुवचनस्येति ॥ प्राकृते चतुर्थीबहुवचनस्याप्रयोगात्परिशेषात्पञ्चमीबहुवचनस्येति लब्धम् ॥

[3] नव रूपाणीति ॥ भ्यसादेशेषु हिंतो–सुंतो इत्यादेशेषु वैकल्पिकदीर्घस्य, तदभावपक्षे, एत्वस्य, तथा दोत्तोदुषु नित्यदीर्घस्य च प्रवृत्त्या रामाहिंतो रामेहिंतो रामासुंतो रामेसुंतो रामाहि रामेहि रामाओ रामत्तो रामाउ इति पञ्चमीबहुवचने नव रूपाणि सिध्यन्तीति भावः ॥

[4] रित्त्वादिति ॥ 'रितो द्वित्वम्' (प्रा. सू. १-४-८५) इति रिदादेशस्य द्वित्वविधानादिति भावः ॥

[5] शित्त्वादिति ॥ 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति शिति परतो दीर्घविधानादिति भावः ॥

बिन्दौ रामाणं।

## ङेम्मिः ॥ २–२–११ ॥

[1] स्पष्टम्। ङित्त्वाट्टित्वम्। राममि। [2] अस्त्रियामेव॥

## ङेर्डे ॥ २–२–१६ ॥

[3] अतो ङेर्डिदे वा स्यात्। [4] रामे। 'भिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इत्येत्वे रामेसु। [5] बिन्दौ रामेसुं॥

एवं वृक्षादयः 'वृश्च रुर्वृक्षे' (प्रा. सू. १-४-७) इति रुत्वरुत्वे। [6] रुक्खो-रुक्खा॥

हे रुक्ख हे रुक्खो हे रुक्खा।

रुक्खं, रुक्खा रुक्खे।

---

[1] बिन्दाविति॥ 'क्त्वासुपोस्तु सुणात' (प्रा. सू. १-१-४३) इत्यनेन सुप्संबन्धिणकारात्परं विकल्पतया बिन्दोर्विधानादिति भावः॥

[2] अस्त्रियामेवेति॥ 'ङसोऽस्त्रियां मः' (प्रा. सू. २-२-१०) इति पूर्वसूत्रादस्त्रियामित्यनुवृत्तेरिति भावः। तेन जाआइ इत्यादौ न ङेम्मिरादेश इति बोध्यम्॥

[3] अतो ङेर्डिदे वेति॥ 'अतो डो विसर्गः' (प्रा. सू. २-२-१२) इत्यतोऽत इति 'वेतत्तदः' (प्रा. सू. २-२-१४) इत्यतो वेति चानुवर्तत इति भावः॥

[4] रामे इति॥ रामशब्दात् सप्तम्येकवचने ङिप्रत्यये तस्य प्रकृतसूत्रेण डे-इत्यादेशे आदेशस्थडकारस्य अनुक्तमन्यन्यायेन 'चुटू' (पा. सू. १-३-७) इतीत्संज्ञायां 'तस्य लोपः' (पा. सू. १-३-९) इति लोपे डित्त्वाट्टेरकारस्य लोपे च रामे इति रूपम्॥

[5] बिन्दाविति॥ 'क्त्वासुपोस्तु सुणात' (प्रा. सू. १-१-४३) इति सूत्रेण सुप्संबन्धिनः सुकारात्परं विकल्पेन बिन्दोर्विधानादिति भावः॥

[6] रुक्खो इति॥ वृक्षशब्दे वृ-इत्यस्य 'वृश्च रुर्वृक्षे' (प्रा. सू. १-४-७) इत्यनेन रुत्वे 'क्षः' (प्रा. सू. १-४-८) इत्यनेन क्ष-इत्यस्य खकारादेशे तस्य 'शेषादेशस्य' (प्रा. सू. १-३-८६) इत्यादिना द्वित्वे 'पूर्वमुपरि' (प्रा. सू. १-४-९४) इत्यादिना पूर्वस्य तद्वर्गीयप्रथमवर्णादेशे रुक्ख इति जाते ततः प्रथमैकवचने सौ रुक्खो इति रामशब्दवद्रूपम्॥

रुक्खेण-रुक्खेणं। रुक्खेहिं रुक्खेहिँ रुक्खेहि।

रुक्खस्स ॥

रुक्खाहिंतो रुक्खत्तो रुक्खाओ रुक्खाउ रुक्खा रुक्खाहि—रुक्खाहिंतो रुक्खेहिंतो रुक्खत्तो रुक्खाओ रुक्खाउ रुक्खाहि रुक्खेहि रुक्खासुंतो रुक्खेसुंतो ॥

रुक्खस्स-रुक्खाण रुक्खाणं ॥

रुक्खम्मि रुक्खे-रुक्खेसु रुक्खेसुं। इत्यादि ॥

इत्यकारान्तपुंलिङ्गसाधारणशब्दाः.

---

## अथ आकारान्तपुंलिङ्गसाधारणशब्दाः.

### (वा) [4] सोमपा इत्यादीनां ह्रस्वो वाच्यः

इति ह्रस्वे रामवद्रूपम्। हणुमा इत्यत्र तु न ह्रस्वः। दीर्घान्तस्यैव तस्य प्राच्यैरुदाहृतत्वात्। अत एवानभिधानस्याप्यभावात् [5] यथा-

---

[3] रुक्खस्सेति ॥ प्राकृते 'तादर्थ्ये ङेस्तु' (प्रा. सू. २-३-३६) इत्यनेन चतुर्थ्येकवचनस्य विकल्पेन षष्ठीविधानात् रुक्खस्स रुक्खाय इति रूपद्वयं बोध्यम् ॥

इत्यकारान्तपुंलिङ्गसाधारणशब्दाः

---

अथ आकारान्तपुंलिङ्गसाधारणशब्दाः.

[4] सोमपा इत्यादीनामिति ॥ इदं च वार्तिकं 'क्विपः' (प्रा. सू. २-२-४७) इति सूत्रे पठितम् ॥

[5] यथालक्षणमप्रयुक्त इत्यादि ॥ इदं च महाभाष्यकृद्वचनं 'त्यान्ता षट्' (पा. सू. १-१-२४) इति सूत्रे दृश्यते। अप्रयुक्तशब्दविषये यथालक्षणं लक्षणमनतिक्रम्य शास्त्रं प्रवर्तत इति तदर्थः प्रतीयते। अस्मिन्नर्थे प्रयुक्तेऽपि लक्षणानतिक्रमदर्शनात् 'अप्रयुक्ते' इति वाक्यशेषासङ्गत्यापत्त्या। यथालक्षणमित्यत्र लक्षणाभावार्थ-

लक्षणमप्रयुक्ते' इति न्यायेन रूपं लभ्यते । '[1]सोर्लुक्' (प्रा. सू. २-२-९) हणुमा । [2]'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) जसि हणुमा । 'स्वरस्य बिन्दुमि' (प्रा. सू. १-२-३९) इति ह्रस्वः । '[3]अमः' हणुमं । हणुमा, [4]अदन्तत्वाभावान्न शस्येत् । टा-हणुमाआ । '[5]अपदे' इति निषेधान्न सन्धिः । हणुमाहिं हणुमाहि हणुमाहिँ । हणुमाहिन्तो हणुमत्तो हणुमाओ हणुमाउ । अदन्तत्वाभावान्न हिश्लुकौ । भ्यसि-हणुमाहिंतो हणुमत्तो हणुमाओ हणुमाउ हणुमासुन्तो । अदन्तत्वाभावान्न हि, न वा एत्वम् । हणुमस्स । 'संयोगे' (प्रा.सू. १-२-४०) इति ह्रस्वः । हणुमाण हणुमाणं । हणुमम्मि हणुमासु हणुमासुं । इत्याद्यूह्यम् ॥

इत्याकारान्तपुंलिङ्गसाधारणशब्दाः

---

कस्य अलक्षणपदस्य यथाशब्देन योग्यतार्थेन 'अव्ययं विभक्ति' (पा. सू. २-१-६) इत्यादिनाऽव्ययीभावे अप्रयुक्ते लक्षणाभावस्यैव योग्यतेति 'यथालक्षणमप्रयुक्ते' इत्यस्यार्थेन प्रकृते हणुमा इत्याकारान्तस्यैव प्राचैरभ्युपगमात्प्रयुक्तत्वस्यैव सत्त्वेन तत्र लक्षणानुरोधेन तत्तत्कार्याणि प्रवर्तनीयानीत्याशयः ॥

[1] सोर्लुगिति ॥ 'सोर्लुक्' (प्रा. सू. २-२-९) इत्यनेन सोर्लुगिति भावः ॥

[2] श्लुगिति ॥ 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इत्यनेन जस्प्रत्ययस्य लुगिति भावः ॥

[3] अम इति ॥ 'अमः' (प्रा. सू. २-२-२) इति सूत्रेण द्वितीयैकवचनस्य अमो मकारादेश इत्यर्थः ॥

[4] अदन्तत्वाभावादिति ॥ 'शस्येत्' (प्रा. सू. २-२-२०) इति सूत्रे अत इत्यनुवृत्त्या अत एव शसि परत एकारविधानान्नात्रैकार इत्यर्थः । ततश्च आकारस्यैत्वाभावेन शसः 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इति लुकि हणुमा इति रूपमिति भावः ॥

[5] अपद इति ॥ 'सन्धिस्त्वपदे' (प्रा. सू. १-१-१९) इति प्राकृते एकपदे सन्धेर्निषेधात् हणुमा+आ इत्यत्र न सवर्णदीर्घसन्धिरिति भावः ।

इत्याकारान्तपुंलिङ्गसाधारणशब्दाः.

# अथ इकारान्तपुंलिङ्गसाधारणशब्दाः.

हरिशब्दे—

## [1] श्लुगनपि सोः ॥ २-२-२९ ॥

इदुतः परस्य सोः शिल्लुक्स्यात्। न तु क्लीबे। हरी। 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) हरी ॥

## पुंसो जसो डउ डओ ॥ २-२-२४ ॥

पुंलिङ्गादिदुतः परस्य जसः अउ अओ इत्येतौ डितौ वा स्तः। हरउ हरओ ॥

## णो शसश्च ॥ २-२-२६ ॥

पुंलिङ्गादिदुतः परस्य शसो जसश्च णो इति वा स्यात्, हरिणो। 'डोश्लुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२) [2] नात्र डो, अनदन्तत्वात्। श्लुकि हे हरी।

---

अथ इकारान्तपुंलिङ्गसाधारणशब्दाः

[1] **श्लुगनपीति** ॥ नप्–इति नपुंसकस्य प्राचां संज्ञा। 'इदुतोर्दिः' (प्रा. सू. २-२-२२) इत्यत इदुतोरित्यनुवर्तते। तस्य च पञ्चम्यन्ततया विपरिणामः। ततश्च अनपुंसके इदुद्भ्यां परस्य सोः श्लुक् स्यादिति सूत्रार्थः ॥

[2] **नात्र डो इति** ॥ 'डोश्लुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२) इत्यनेन अपूर्वतया न डोश्लुकौ विधीयेते, किं तु 'सोः' (प्रा. सू. २-२-१३) 'श्लुगनपि सोः' (प्रा. सू. २-२-२९) इति सूत्रद्वयेन विहितयोः डोश्लुकोः संबुद्धौ वैकल्पिकत्वमात्रमभ्यनुज्ञायते। तथा च 'सोः' (प्रा. सू. २-२-१३) इति सूत्रे 'अतो डो विसर्गः' (प्रा. सू. २-२-१२) इत्यतोऽत इत्यनुवृत्तेरिदन्तस्थले डो इति न प्रवर्तत इत्यर्थः। ततश्च हरिशब्दात्संबुद्धौ 'श्लुगनपि सोः' (प्रा. सू. २-२-२९) इत्यनेन इदुतः परस्य सोर्विहितस्य श्लुकः 'डोश्लुकौ तु संबुद्धेः' (प्रा.सू. २-२-४२) इत्यनेन वैकल्पिकत्वबोधनात् श्लुक्पक्षे तस्य शित्त्वात 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति पूर्वस्येकारस्य दीर्घे हे हरी इति रूपम्। तदेतदाह—श्लुकि हे हरी इति ॥

[1] पक्षे [2] सोर्लुक्, हरि । [3] अमि–हरिं । [4] शसि–हरी हरिणो ॥

## टो णा ॥ २-२-५४ ॥

पुंनपुंसकाभ्यामिदुद्भ्यां परस्य टावचनस्य णा स्यात् । हरिणा ॥

## इदुतोर्दिः ॥ २-२-२२ ॥

इदुतोदीर्घः स्यात् भिसभ्यस्सुपि । हरीहिं हरीहिँ हरीहि । ङसौ- 'हिंतोत्तोदोदु ङसिस्' (प्रा. सू. २-२-६) 'दिर्दोत्तोदुङसौ' (प्रा. सू. २-२-८) हरीहिंतो हरित्तो हरीओ हरीउ ॥

## [5] नृनपि ङसिङसोः ॥ २-२-२७ ॥

णो वा स्यात् ।

(वा) —दिर्दोत्तोदुङसाविति [6] दीर्घो नेति वाच्यम् ।

---

[1] पक्ष इति ॥ इदन्तात्संबुद्धौ लुको वैकल्पिकत्वात्तदभावपक्ष इत्यर्थः ॥

[2] सोर्लुगिति ॥ 'सोर्लुक्' (प्रा. सू. २-२-९) इति सूत्रेण हरिशब्दात्परस्या- स्संबुद्धेर्लुकि 'हे हरि' इति रूपं बोध्यमिति भावः ॥

[3] अमि हरिमिति ॥ हरिशब्दात् द्वितीयैकवचने अम्प्रत्यये 'अमः' (प्रा. सू. २-२-२) इत्यनेन तस्य मादेशे तस्य 'बिन्दुल' (प्रा. सू. १-१-४०) इति बिन्दौ 'हरिं' इति रूपमित्यर्थः ॥

[4] शसि हरी हरिणो इति ॥ हरिशब्दात् द्वितीयाबहुवचने शसि तस्य 'णो शसश्च' (प्रा. सू. २-२-२६) इति णो-इत्यादेशे हरिणो इति, णो–इत्यादेशस्य वैकल्पि- कत्वात्तदभावपक्षे 'लुग्जश्शसोः' (प्रा. सू. २-२-३) इति शसः लुकि तस्य शित्वात्पूर्वस्य दीर्घे 'हरी' इति च रूपं बोध्यम् ॥

[5] नृनपीति ॥ नृ–इति पुंलिङ्गस्य, तथा नप्–इति नपुंसकस्य च संज्ञा प्राचाम् । 'चतुरो वा' (प्रा. सू. २-२-२६) इति सूत्राद्वेति 'इदुतोर्दिः' (प्रा. सू. २-२-२२) इति सूत्रात् पञ्चम्यन्ततया विपरिणतमिदुतोरिति 'णो शसश्च' (प्रा. सू. २-२-२६) इत्यतो णो इति चानुवर्तते। ततश्च पुंलिङ्गे नपुंसकलिङ्गे च वर्तमानादिदुदन्तात्परयोर्ङसि- ङसोः णो इत्यादेशो वा स्यादिति सूत्रार्थः ॥

[6] दीर्घो नेति ॥ ङसेः स्थाने णो इत्यादेशे सति तत्रापि 'दिर्दोत्तोदुङसौ' (प्रा, सू. २-२-८) इति विभक्तेः पूर्वस्य दीर्घे प्राप्तेऽनेन वार्तिकेन निषेध इति भावः ॥

हरिणो। [1] भ्यसि–हरीसुंतो हरीहिंतो हरित्तो हरीओ हरीउ। ङसि — 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) [2] हरिस्स। 'नृनपि ङसिङसोः' (प्रा. सू. २-२-२७) हरिणो। 'णशामः' (प्रा. सू. २-२-४) [3] हरीण हरीणम्। 'ङेर्मिर्' (प्रा. सू. २-२-११) [4] हरिम्मि। हरीसु हरीसुम्। एवं गिर्यादयः॥

इति इकारान्तपुंलिङ्गसाधारणशब्दाः

---

[1] भ्यसीत्यादि॥ हरिशब्दात् पञ्चमीबहुवचने भ्यसि तस्य 'सुंतो भ्यसः' (प्रा. सू. २-२-७) 'हिंतोत्तोदोदु ङसिम्' (प्रा. सू. २-२-६) इति सुंतो-हिंतो-त्तो-दो-दु-इत्यादेशेषु पूर्वस्येकारस्य 'इदुतोर्दिः' (प्रा. सू. २-२-२२) इति दीर्घे च हरीसुंतो हरीहिंतो हरित्तो हरीओ हरीउ इति रूपाणीति भावः। हरित्तो इत्यत्र दीर्घानन्तरमपि 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वो भवत्येव, दीर्घविधानस्यान्यत्र चरितार्थतया तस्य ह्रस्वबाधकत्वासंभवादिति बोध्यम्॥

[2] हरिस्सेति॥ हरिशब्दात् षष्ठ्येकवचने ङस्प्रत्यये तस्य 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) इति सरादेशे तस्य रित्वात् 'रितो द्वित्वल्' (प्रा. सू. १-४-८५) इति द्वित्वे हरिस्सेति रूपम्॥

[3] हरीण हरीणमिति॥ हरिशब्दात् षष्ठीबहुवचने आमि तस्य 'णशामः' (प्रा. सू. २-२-४) इति णशादेशे तस्य शित्वात्तत्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे 'हरीण' इति 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति बिन्दौ च हरीणमिति रूपं बोध्यम्॥

[4] हरिम्मीति॥ हरिशब्दात् सप्तम्येकवचने ङौ तस्य 'ङेर्मिर्' (प्रा. सू. २-२-११) इति मिरादेशे तस्य रित्वात् 'रितो द्वित्वल्' (प्रा. सू. १-४-८५) इति द्वित्वे हरिम्मीति रूपम्॥

[5] हरीसु हरीसुमिति॥ हरिशब्दात् सप्तमीबहुवचने सुपि 'इदुतोर्दिः' (प्रा. सू. २-२-२२) इति विभक्तेः पूर्वस्य दीर्घे 'हरीसु' इति, 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति सुपः परं बिन्दौ हरीसुं इति च रूपं बोध्यम्॥

इति इकारान्तपुंलिङ्गसाधारणशब्दाः.

---

# अथ उकारान्तपुंलिङ्गसाधारणशब्दाः.

एवं तरुशब्दोऽपि । तरू—तरू तरउ तरओ तरुणो ॥

## डवो उतः ॥ २-२-२५ ॥

[1] पुंलिङ्गादुतः परस्य जसो डित् वो वा स्यात् । तरवो । हे तरू हे तरु । तरुं-तरू तरुणो । तरुणा-तरूहिं तरूहिँ तरूहि । तरूहिंतो तरुत्तो तरूओ तरूउ तरुणो । भ्यसि-तरूहिंतो तरुत्तो तरूओ तरूउ तरूसुंतो । तरुस्स-तरुणो । तरूण-तरूणं । तरुम्मि तरूसु तरूसुं । एवं वाय्वादयः ॥

इत्युकारान्तपुंलिङ्गसाधारणशब्दाः

---

# अथ ईदूदन्तपुंलिङ्गसाधारणशब्दाः.

## क्विपः ॥ २-२-४७ ॥

[2] क्विबन्तयोरीदूतोर्ह्रस्वः स्यात् ।

---

### अथ उकारान्तपुंलिङ्गसाधारणशब्दाः.

[1] पुंलिङ्गादित्यादि ॥ 'चतुरो वा' (प्रा. सू. २-२-२३) इत्यतो वेति 'पुंसो जसो डउडओ' (प्रा. सू. २-२-२४) इत्यतः पुंसो जस इति चात्रानुवर्तत वेति भावः। इकारान्तापेक्षया उदन्ते जसि डवो-इत्यादेशे एकं रूपमेवाधिकम्। उकारान्तत्वं परं विशेषः । शिष्टं सर्वमिकारान्तवदेवेति बोध्यम् ॥

इत्युकारान्तपुंलिङ्गसाधारणशब्दाः.

---

### अथ ईदूदन्तपुंलिङ्गसाधारणशब्दाः.

[2] क्विबन्तयोरीदूतोरिति ॥ 'ह्रस्वलीदूतोः' (प्रा. सू. २-२-४६) इति सूत्रमेवानुवर्तत इति भावः । एवमेव त्रिविक्रमदेवेनाप्यभिहितम् । अत एव स-

ग्रामणीः–[1] गामणि । खलपूः–खळउ । शेषं हरिवत्तरुवच्च ॥

इति ईदूदन्तपुंलिङ्गसाधारणशब्दाः.

---

# अथ ऋकारान्तपुंलिङ्गसाधारणशब्दाः.

धातृशब्दे––

## आ सौ वा ॥ २–२–५२ ॥

[2] ऋदन्तस्यात्वमन्तादेशः[3] स्यात् सौ । धाआ । 'आरस्सुपि (प्रा. सू. २-२-४९) 'संज्ञायामरः' (प्रा. सू. २-२-५१) इत्यनयोः प्रवृत्तौ नायं प्रवर्तत इति वाच्यम् ॥

---

वार्तिकसूत्रपाठेऽत्रैव सूत्रे 'ग्रामणी-इत्यादीनां ह्रस्वो वाच्यः' इति वार्तिकदर्शनादीदूतोरित्यस्यात्रानुवृत्तिरेवोचितेति ज्ञायते । चन्द्रिकायां त्वत्र 'ह्रस्वपदमात्रस्यानुवृत्त्या आकारस्याप्यनेन ह्रस्वः, क्विप इति च विच उपलक्षणम्' इत्युक्तम् ॥ ततश्च ईदूदन्तसामान्यस्य ह्रस्वावश्यंभावादिदुदन्तेभ्यस्तेषु वैलक्षण्यं नास्तीति भावः ॥

[1] गामणीति ॥ ग्रामणीशब्दे रेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति लुकि 'क्विपः' (प्रा. सू. २-२-४७) इति ह्रस्वे गामणि इति जाते हरिवद्रूपं बोध्यम् ॥ एवं खलपूशब्दे पकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-६) इति पकारस्य लुकि ऊकारस्य च ह्रस्वे उदन्तवद्रूपं बोध्यम् ॥

इति ईदूदन्तपुंलिङ्गसाधारणशब्दाः.

---

अथ ऋकारान्तपुंलिङ्गसाधारणशब्दाः.

[2] ऋदन्तस्येति ॥ 'उद्दतां' (प्रा. सू. २-२-४८) इत्यतः ऋतामित्यत्रानुवर्तत इति भावः ॥

[3] अन्तादेश इति ॥ 'अलोऽन्त्यस्य' (पा. सू. १-१-५२) इति पाणिनीयबलाल्लब्धमिदम् ॥

## आरस्सुपि ॥ २-२-४९ ॥

ऋदन्तस्य सुप्यार इत्यादेशः स्यात् । [1] अन्तादेश एवायमिष्यते । तथा च [2] धाआरो । रामवत् । विशेषस्तु—

## ऋदन्ताङ्गः ॥ २-२-४३ ॥

ऋदन्तान्नाम्नः परयोः [3] संबुद्धेरत्वं वा स्यात् । ङित्वाट्टिलोपः । हे धाअ । पक्षे—'आ सौ वा' (प्रा. सू. २-२-५२) हे धाआ ॥

## उद्दतां त्वस्वमामि ॥ २-२-४८ ॥

ऋदन्तानामन्त्यस्योत्वं वा स्यात् । सु-अम्-आम्वर्जिते सुपि परे । तथाच [4] तरुवद्रूपम् । यथा—जसि-धाऊ धाअवो धाउणो धाअउ धाअओ । शसि—धाऊ धाउणो इत्यादि । अस्वमामीत्युक्तेस्तद्विषये उकारान्तरूपाभावः । एवं कर्तृहर्तृप्रभृतयो यौगिकाः । ये तु रूढाः पितृभ्रातृजामात्रादयस्तत्र विशेषः 'आ सौ वा' (प्रा. सू. २-२-५२) पिआ । पक्षे—

---

[1] अन्तादेश एवायमिति ॥ अनेकाल्त्वात 'अनेकाल् शित्सर्वस्य' (पा. सू. १-१-४४) इति सर्वादेशत्वे प्राप्ते इदमुक्तम् ॥

[2] धाआरो इति ॥ धातृशब्दे तकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इति लुकि अत्वाभावपक्षे ऋकारस्य 'आरस्सुपि' (प्रा. सू. २-२-४९) इत्यारादेशेऽकारान्ततया रामशब्दवद्रूपं बोध्यम् ॥

[3] संबुद्धेरित्यादि ॥ 'डोश्लुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२) इत्यतस्संबुद्धेरित्यस्य वार्थकतुशब्दस्य चानुवृत्तिरिति भावः । ततश्च असंबुद्धौ सौ धाआ धाआरो इति, संबुद्धौ हे धाआ हे धाअ इति रूपमिति बोध्यम् ॥

[4] तरुवद्रूपमिति ॥ धातृशब्दाज्जसि प्रकृतमन्त्रेण उत्वपक्षे 'श्लुग्जश्शस्सोः' (प्रा. सू. २-२-३) इति श्लुकि शित्वात्पूर्वस्य दीर्घे धाऊ इति, 'ड्वो उतः' (प्रा. सू. २-२-२५) 'णो शसश्च' (प्रा. सू २-२-२६) 'पुंसो जस डउडओ' (प्रा. सू. २-२-२४) इति जस्प्रत्ययस्य ड्वो-णो-डउ-डओ-इत्यादेशेषु धाअवो धाउणो धाअउ धाअओ इति, उत्वाभावपक्षे 'आरस्सुपि' (प्रा. सू. २-२-४९) इत्यारादेशे तकारस्य लुकि च धाआरो इतीत्याहत्य षड्रूपाणि बोध्यानि ॥

## संज्ञायामरः ॥ २–२–५१ ॥

ऋदन्तस्य संज्ञायां [1] रूढत्वे अरः स्यात्। आरस्यापवादः।

## (वा) अयमप्यन्तादेशो वाच्यः॥

तेन पितृशब्दः पिअरः संपद्यते। तत्र रामवद्रूपमूह्यम्। पिअरो [2] पिअरा [3] इत्यादि। संबुद्धौ—

## नाम्नि डरं ॥ २–२–४४ ॥

संज्ञायामृदन्तात्परायाः [4] संबुद्धेः डिदरं वा स्यात्। हे पिअरम्। पक्षे—'ऋदन्ताड्डः' (प्रा. सू. २-२-४३) हे पिअ। उभयाभावे 'आ सौ वा' (प्रा. सू. २-२-५२) सोर्लुक्। (प्रा. सू. २-२-९) हे पिआ। तस्याप्यभावे संज्ञायामर एव स्यात्। हे पिअर। जस्आदौ 'उदृतां त्वस्वमामि' (प्रा. सू. २-२-४८) इत्युक्त्या उकारान्तरूपं च। पिउणो इत्यादि। [5] अत्र सप्तम्येकवचने नास्त्युत्वम्॥

इति ऋकारान्तपुंलिङ्गसाधारणशब्दाः.

---

[1] रूढत्व इति॥ सूत्रे संज्ञाशब्दो रूढ्यर्थक इति भावः॥

[2] पिअरा इति॥ उत्वाभावपक्षे प्रथमाबहुवचनान्तमेतादिति बोध्यम्॥

[3] इत्यादीति॥ पूर्ववत् 'उदृतां' (प्रा. सू. २-२-४८) इत्युत्वपक्षे पिऊ पिओ पिउणो पिअउ पिअओ इत्यपि पञ्च रूपाणीत्यर्थः॥

[4] संबुद्धेर्डिदरं वेति॥ 'डोश्लुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२) इत्यतः 'तु संबुद्धेः' इति पदद्वयानुवृत्त्याऽयमर्थो लभ्यत इति भावः॥

[5] अत्र सप्तम्येकवचने नास्त्युत्वमिति॥ 'उदृतां त्वस्वमामि' (प्रा. सू. २-२ ४८) इत्यनेन प्रथमाद्वितीयैकवचनषष्ठीबहुवचनेष्वेव 'अस्वमामि' इत्युत्व-निषेधात् तथैव वृत्तिचन्द्रिकादावप्युक्तत्वेन सप्तम्येकवचने उत्वस्य निर्विवादतया अत्र 'प्रथमाद्वितीयैकवचनषष्ठीबहुवचनेषु नास्त्युत्वम्' इत्यर्थकग्रन्थेन भाव्यमिति भाति॥

इति ऋकारान्तपुंलिङ्गसाधारणशब्दाः.

# अथ आकारान्तस्त्रीलिङ्गसाधारणशब्दाः

अथ स्त्रीलिङ्गेषु 'सोर्लुक्' (प्रा. सू. २-२-९) गङ्गा। 'स्भुग्जश्शसोः' (प्रा. सू. २-२-३) गङ्गा।

## शोशु स्त्रियां तु ॥ २-२-३२ ॥

स्त्रियां जश्शसोः शोशू वा स्तः।

(वा)-[1]न यथासङ्ख्यमिति वाच्यम्।

गङ्गाओ गङ्गाउ। [2]बुद्ध्यादौ शित्वमर्थवत्।

## टापो डे ॥ २-२-४५ ॥

टावन्तात्परस्याः [3]संबुद्धेर्डिदेत्वं वा स्यात्। हे गङ्गे। [4]पक्षे-

---

अथ आकारान्तस्त्रीलिङ्गसाधारणशब्दाः

[1] न यथासङ्ख्यमिति ॥ 'शिशिशिङ् जश्शस्' (प्रा. सू. २-२-३१) इति पूर्वसूत्रात् जश्शस्–इत्यस्यानुवृत्त्या उद्देश्यद्वयसंभवादत्र 'शोशु' इति विधेयद्वयसत्त्वाच्च 'यथासङ्ख्यमनुदेशः' (पा. सू. १-३-१०) इति पाणिनीयानुरोधेन यथासङ्ख्यप्राप्तौ तन्निवृत्तये वार्तिकमिदमारभ्यते। ततश्चात्र यथासङ्ख्यनिषेधादनेन जश्शसोरुभयोरपीदमादेशद्वयमिति लभ्यते। एवं च जश्शसोः प्रत्येकं गङ्गाओ गङ्गाउ इति रूपद्वयमिति लब्धम् ॥

[2] बुद्ध्यादाविति ॥ यद्यपि गङ्गाशब्दस्य टाबन्ततया स्वतो दीर्घान्तत्वेन ततः परयोर्जश्शसोः ओ-उ-इत्यादेशविधानेऽपि गङ्गाओ गङ्गाउ इति रूपसिद्धेः 'शिति दीर्घः' (प्रा. सू. १-१-९५) इति दीर्घफलकस्य आदेशगतशित्वस्यात्र प्रयोजनाभावः, तथाऽपि बुद्ध्यादिशब्देषु जश्शसोः शो-शु-इत्यादेशे पूर्वस्येकारस्य दीर्घार्थमादेशे शित्करणमिति भावः ॥

[3] संबुद्धेर्डिदेत्वं वेति ॥ 'डोत्सुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२) इत्यतः तु संबुद्धेः इति पदद्वयमत्रानुवर्तत इति भावः ॥

[4] पक्ष इति ॥ एत्वस्यास्य वैकल्पिकत्वात्तदभावपक्ष इत्यर्थः ॥

सोर्लुक् (प्रा. सू. २-२-९) गङ्गा। 'अमि' गङ्गं। 'स्वरस्य बिन्दुमि' (प्रा. सू. १-२-३९) इति ह्रस्वः। [1] शसि–गङ्गा गङ्गाओ गङ्गाउ ॥

## टाङिङसाम् ॥ २–२–३५ ॥

[2] स्त्रियामेषां शशाशिशे स्युः। [3] श इत् ॥

## नातश्शा ॥ २–२–३६ ॥

[4] स्त्रियामादन्तात् ङसिटाङिङसां प्राप्तं शात्वं न स्यात्। [5] गङ्गाअ गङ्गाइ गङ्गाए। [6] गङ्गाहिं गङ्गाहिँ गङ्गाहि ॥

---

[1] शसीत्यादि ॥ गङ्गाशब्दात् शसि 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इत्यनेन शसः शो-शु-इत्यादेशयोः गङ्गाओ गङ्गाउ इति, आदेशद्वयस्यापि वैकल्पिकत्वात्तदभावपक्षे 'सोर्लुक्' (प्रा. सू. २-२-९) इत्यनेन शसो लुकि गङ्गा इति च रूपाणीति बोध्यम् ॥

[2] स्त्रियामित्यादि ॥ 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इत्यतः स्त्रियामिति 'ङसः शशाशिशे' (प्रा. सू. २-२-३४) इत्यतः शशाशिशे इति चानुवर्तत इति भावः ॥

[3] श इदिति ॥ पाणिनीयवदत्रापि 'लशक्वतद्धिते' (पा. सू. १-३-८) इत्यनेन शकारस्य इत्संज्ञा प्रवर्तत इत्यर्थः। इदं 'तस्य लोपः' (पा. सू. १-३-९) इत्यस्याप्युपलक्षणम्। शित्त्वं त्विकारान्तेषु सफलमिति बोध्यम् ॥

[4] स्त्रियामित्यादि ॥ 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इत्यतः स्त्रियामिति, 'ङसः शशाशिशे' (प्रा. सू. २-२-३२) इत्यतः ङसेरिति, 'टाङिङसाम्' (प्रा. सू. २.२-३५) इति सूत्रं चात्रानुवर्तत इति भावः ॥

[5] गङ्गाअ-इत्यादि ॥ गङ्गाशब्दात्तृतीयैकवचने–टाप्रत्यये तस्य 'टाङिङसाम्' (प्रा. सू. १-१-३५) इत्यनेन श-शा-शि-शे-इत्यादेशेषु प्राप्तेषु प्रकृतसूत्रेणादन्तात्परस्य टाप्रत्ययस्य शात्वनिषेधेन शशिशे-इत्यादेशेषु गङ्गाअ गङ्गाइ गङ्गाए इति रूपत्रयमिति भावः ॥

[6] गङ्गाहिमिति ॥ गङ्गाशब्दात् भिसि तस्य 'हिंहिँहि भिसः' (प्रा. सू. २-२-५) इति हिंहिँहि इत्यादेशत्रये गङ्गाहिं गङ्गाहिँ गङ्गाहि इति त्रीणि रूपाणीति भावः ॥

## ङसेः शशाशिशे ॥ २-२-३४ ॥

स्त्रियां ङसेरेते [1] वा स्युः । [2] गङ्गाअ गङ्गाइ गङ्गाए । [3] पक्षे-गङ्गाहिंतो गङ्गत्तो गङ्गाओ गङ्गाउ, सप्त रूपाणि । [4] भ्यसि-गङ्गाहिंतो गङ्गत्तो गङ्गाओ गङ्गाउ गङ्गासुंतो । ङसि-गङ्गाअ गङ्गाइ गङ्गाए। आमि-गङ्गाण [5] गङ्गाणं । ङि-गङ्गाइ गङ्गाअ गङ्गाए । गङ्गासु गङ्गासुं । एवं रमादयः ॥

इत्याकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

---

[1] वा स्युरिति ॥ 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इत्यतो वार्थकस्तुशब्दोऽत्रानुवर्तत इति भावः । अत एव च 'टाङिङसाम्' (प्रा. सू. २-२-३५) इति योगविभागोऽप्युपपद्यत इति बोध्यम् ॥

[2] गङ्गाअ-इत्यादि ॥ गङ्गाशब्दात्पञ्चम्येकवचने तृतीयैकवचनवदेव शाभावस्य निषिद्धत्वेन अवशिष्टेषु श-शि-शे-इत्यादेशेषु त्रीणि रूपाणीति भावः ॥

[3] पक्ष इति ॥ प्रकृतानां श-शि-शे-इत्यादेशानां वैकल्पिकत्वात्तदभावपक्षे 'हिन्तोत्तोदोदु ङसिस्' (प्रा. सू. २-२-६) इति चतुर्ष्वादेशेषु सप्त रूपाणीति भावः ॥

[4] भ्यसीति ॥ 'हिन्तोत्तोदोदु ङसिस्' (प्रा. सू. २-२-६) 'सुन्तो भ्यसः' (प्रा. सू. २-२-७) इति सूत्रद्वयेन भ्यसः हिन्तो-त्तो-दो-दु-सुन्तो-इत्यादेशेषु पञ्च रूपाणीति भावः ॥

[5] गङ्गाणमिति ॥ गङ्गाशब्दात् षष्ठीबहुवचने आमि तस्य 'णशामः' (प्रा. सू. २-२-४) इति णशादेशे 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इत्यनेन णकारात्परं बिन्दुपक्षे गङ्गाणमिति रूपमिति भावः । एवमेव सप्तमीबहुवचने सुप्यपि सुकारात्परं बिन्दौ गङ्गासुमिति रूपं बोध्यम् ॥

इत्याकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

# अथ इकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

'श्लुगनपि सोः, (प्रा. सू. २-२-२९) बुद्धी। शोशु स्त्रियां तु (प्रा. सू. २-२-३२) बुद्धीओ बुद्धीउ। पक्षे-श्लुग्जश्शसोः (प्रा. सू. २-२-३) बुद्धी। [1] डोश्लुकौ तु संबुद्धेः (प्रा. सू. २-२-४२) हे बुद्धी। पक्षे-'सोर्लुक्' (प्रा. सू. २-२-९) हे बुद्धि। अमि-बुद्धिं। शसि जस्वत्, बुद्धीओ बुद्धीउ बुद्धी। 'टाङिङसाम्' (प्रा. सू. २-२-३५) बुद्धीअ [2] बुद्धीआ बुद्धीइ बुद्धीए। [3] बुद्धीहिं। 'ङसेः शशाशिशे' (प्रा. सू. २-२-३४) बुद्धीअ बुद्धीआ बुद्धीइ बुद्धीए। [4] पक्षे—'हिंतोत्तोदु ङसौ' (प्रा. सू. २-२-८) बुद्धीहिन्तो बुद्धित्तो बुद्धीओ बुद्धीउ। अष्टौ रूपाणि। [5] भ्यसि-'इदुतोर्दिः' (प्रा. सू. २-२-२२) बुद्धीहिन्तो बुद्धीसुन्तो बुद्धित्तो बुद्धीओ बुद्धीउ।

---

अथ इकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

[1] डोश्लुकौ त्वित्यादि ॥ अनेन सूत्रेण सूत्रान्तरविहितयोर्डोश्लुकोरेव संबुद्धौ वैकल्पिकत्वमात्राभ्यनुज्ञानात् डोत्वस्य तु 'सोः' (प्रा. सू. २-२-१३) इत्यनेन अदन्तात्परस्य सोरेव विधानात् बुद्धिशब्दात्परस्य सोः स्थाने तदप्रवृत्त्या 'श्लुगनपि सोः' (प्रा. सू. २-२-२९) इत्यनेन विहितस्य श्लुकः प्रकृतसूत्रेण वैकल्पिकत्वबोधनेन श्लुक्पक्षे तस्य शित्वात् 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति पूर्वस्य दीर्घे संबुद्धौ बुद्धिशब्दस्य हे बुद्धी इति, श्लुगभावपक्षे 'सोर्लुक्' (प्रा. सू. २-२-९) इति लुकि हे बुद्धि इति च रूपमिति भावः ॥

[2] बुद्धीआ-इति ॥ 'नातश्शा' (प्रा. सू. २-२-३६) इत्यनेन स्त्रियामादन्तात्परेषामेव टाङसिङसङीनां शादेशनिषेधादिदन्तात्परेषां तेषां शादेशस्यापि प्रवृत्त्या आदन्तापेक्षया बुद्धीआ इत्येकं रूपं टादिष्वधिकमिति भावः ॥

[3] बुद्धीहिमिति ॥ भिसि-बुद्धीहिँ बुद्धीहि इत्यपि रूपद्वयमधिकमत्र बोध्यम् ॥

[4] पक्ष इति ॥ ङसौ 'श-शा-शि-शे-इत्यादेशचतुष्टयस्यापि वैकल्पिकत्वात्तदभावपक्षे हिन्तो-त्तो-दो-दु-इत्यादेशचतुष्टये चाष्टौ रूपाणीति भावः ॥

[5] भ्यसीत्यादि ॥ बुद्धिशब्दात्पञ्चमीबहुवचने हिन्तो-सुन्तो-त्तो-दो-दु-इति भ्यसादेशेषु सत्सु पञ्च रूपाणीति भावः ॥

[1] ङसि–बुद्धीअ बुद्धीआ बुद्धीइ बुद्धीए। [2] एवं ङावपि। [3] आमि–बुद्धीण बुद्धीणं। सुपि–बुद्धीसु बुद्धीसुम्। एवं वल्ल्यादयः॥

(वा) [4] भ्रमिशब्दे सुप्यदीर्घोऽपि वाच्यः।

भमिसु भमीसु। [5] चत्वारि। एवं धेन्वादयोऽपि। धेणू धेणूओ धेणूउ। धेणू। इत्यादि॥

इति इदुदन्तस्त्रीलिङ्गसाधारणशब्दाः.

---

[1] ङसीत्यादि॥ बुद्धिशब्दात् षष्ठीसप्तम्येकवचनयोः 'टाङिङसाम्' (प्रा. सू. २-२-३५) इत्यनेन अ-आ-इ-ए–इत्यादेशेषु शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे च प्रत्येकं चत्वारि रूपाणीति भावः। एवं ङावपि बोध्यम्।

[2] एवं ङावपीत्यादि॥ चन्द्रिकाकृतस्तु ङेर्म्मिरादेशोऽत्राभिमत इति ज्ञायते। 'टाङिङसाम्' (प्रा. सू. २-२-३५) इति विहितानां अ-आ-इ-ए इत्यादेशानां नित्यतया तत्र प्रवृत्त्या 'ङेर्म्मिर' (प्रा. सू. १-२-११) इत्यस्य कथं प्रवृत्तिरिति विमर्शनीयम्। अत एव त्रिविक्रमवृत्तौ 'टाङिङसाम्' (प्रा. सू. २-२-३५) इत्यत्र 'योगविभागान्नित्यं' इत्युक्तं दृश्यते॥

[3] अमीत्यादि॥ बुद्धिशब्दात् षष्ठीसप्तमीबहुवचनयोः 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति णकारात्सुकाराच्च परं बिन्दुतदभावपक्षयोः प्रत्येकं द्वे द्वे रूपे इति भावः॥

[4] भ्रमिशब्द इत्यादि॥ इदं चन्द्रिकात्रिविक्रमवृत्त्योर्न दृश्यते। त्रिविक्रमवृत्तौ तु 'इदुतोर्दिः' (प्रा. सू. २-२-२२) इति दीर्घः क्वचिन्न भवति' इत्युक्त्वा 'दिअभूमिसु दाणजलोल्लिआइ (द्विजभूमिषु दानजलार्द्रितानि) इत्यत्र 'भूमिसु' इत्यदीर्घोदाहरणं दत्तं दृश्यते॥

[5] चत्वारीति॥ भ्रमिशब्दात् सप्तमीबहुवचने 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१ ४३) इति दीर्घतदभावपक्षयोः 'भमिसु भमिसुं भमीसु भमीसुं' इति चत्वारि रूपाणीति भावः। भ्रमिशब्देऽस्मिन् रेफस्य 'लवरामधश्च' (प्रा.सू. १-४-७८) इति लुग्बोध्यः॥

इति इदुदन्तस्त्रीलिङ्गसाधारणशब्दाः.

# अथ ईकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

ईदन्ते विशेषः—

## आदीतस्सोश्च ॥ २-२-३३ ॥

स्त्रियामीकारान्तात् सोर्जश्शसोश्चाद्वा स्यात्। [1] गोरीआ।

## ह्रस्वलीदूतोः ॥ २-२-४६ ॥

ईदूतोर्ह्रस्वो लित्स्यात्संबुद्धौ। हे गोरि। 'सोर्लुक्' (प्रा. सू. २-२-९.) [2] जसि—गोरीआ गोरीओ गोरीउ गोरी, चत्वारि। अमि—[3]गोरिं। शसि-जस्वत्। 'टाङिङसाम्' (प्रा. सू. २-२-३५) टा—गोरीअ गोरीआ गोरीइ गोरीए। भिसि [4] गोरीहिं। 'ङसेश्शशाशिशे' (प्रा. सू. २-२-३४) गोरीअ

---

अथ ईकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

[1] गोरीआ इति॥ गौरीशब्दे औकारस्य 'ऐच एङ्' (प्रा. सू. १-२-१०२) इत्यौकारस्य ओकारो बोध्यः। ततश्च 'आदीतस्सोश्च' (प्रा. सू. २-२-३३) इति सोरात्वपक्षे गोरीआ इति, तदभावपक्षे च 'सोर्लुक्' (प्रा. सू. २-२-९) इति सोर्लुकि गोरी इति चासंबुद्धौ सौ रूपद्वयं बोध्यम्॥

[2] जसीत्यादि॥ गौरीशब्दात् जसि 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इति जसः शो-शु-इत्यादेशद्वयपक्षे गोरीओ गोरीउ इति, तदभावपक्षे 'आदीतः सोश्च' (प्रा. सू. २-२-३३) इत्यात्वपक्षे गोरीआ इति, तस्यापि वैकल्पिकत्वात्तदभावपक्षे 'इलुग्जश्शसोः' (प्रा. सू. २-२-३) इति इलुकि गोरी, इति चत्वारि रूपाणीति भावः॥

[3] गोरिमिति॥ गौरीशब्दाद्द्वितीयैकवचने अमि 'स्वरस्य बिन्द्वमि' (प्रा. सू. १-२-३९) इति ईकारस्य ह्रस्वो बोध्यः॥

[4] गोरीहिमिति॥ अत्र भिसः हि—हिँ- इत्यादेशयोरपि विहितत्वेन गोरीहि गोरीहिँ इत्यपि रूपद्वयं बोध्यम्॥

गोरीआ गोरीइ गोरीए। [1]पक्षे– गोरीहिंतो इत्यादि ४। भ्यसि–गोरीसुंतो [2] इत्यादि। [3]ङसि गोरीअ इत्यादि। [4]आमि गोरीण गोरीणं। ङौ गोरीअ ४। सुपि गोरीसु गोरीसुं। एवं लक्ष्मीप्रभृतयः॥

इति ईकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

---

## अथ ऊकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

वधूशब्दः—

[5]वहू।

---

[1]पक्ष इति॥ 'ङसेश्शशाशिशे' (प्रा. सू. २-२-३४) इत्यस्य वैकल्पिकत्वात्तदभावपक्षे हिंतो-त्तो-दो-दु-इत्यादेशचतुष्टयस्य प्रवृत्तौ गोरीहिंतो गोरित्तो गोरीओ गोरीउ इति चत्वार्यन्यान्यपि रूपाणीति भावः॥

[2]इत्यादीति॥ भ्यसः 'सुंतो भ्यसः' (प्रा. सू. २-२-७) इति सुंतो–इत्यादेशे ङसिवत हिंतो-त्तो-दो-दु-इत्यादेशचतुष्टये च गोरीसुंतो गोरीहिंतो गोरित्तो गोरीओ गोरीउ इति पञ्च रूपाणीति भावः॥

[3]ङसीत्यादि॥ 'टाङिङसाम्' (प्रा. सू. २-२-३५) इति ङस आदेशचतुष्टये गोरीअ गोरीआ गोरीइ गोरीए इति चत्वारि रूपाणीति भावः। एवमेव ङावपि रूपचतुष्टयं बोध्यम्॥

[4]आमीति॥ गौरीशब्दादामः 'णशामः' (प्रा. सू. २-२-४) इति णशादेशे 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति णकारात्परं पाक्षिके बिन्दौ. एवमेव सप्तमीबहुवचने सुपि च सुकारात्परं बिन्दौ प्रत्येकं गोरीण गोरीणं, गोरीसु गोरीसुं, इति रूपद्वयं बोध्यम्॥

इति ईकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

---

अथ ऊकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

[5]वहू इति। वधूशब्दादसंबुद्धौ सौ 'सोर्लुक्' (प्रा. सू. २-२-९) इति सोर्लुकि 'खघथधभाम्' (प्रा. सू. १-३-४०) इति धस्य हत्वे च वहू इति रूपम्॥

[1] हे वहु। [2]जश्शसोः –वहू वहूओ वहूउ। [3]अमि–वहुं। [4]टा–वहूअ वहूआ वहूइ वहूए। [5]वहूहिं। [6]ङसि–वहूअ वहूआ वहूइ वहूए। वहूहिंतो ४। [7]भ्यसि–वहूसुंतो ५। [8]ङसूङ्योष्टावत्, वहूअ ४।

---

[1] हे वहु इति॥ अत्र 'ह्रस्वलीदूतोः' (प्रा. सू. २-२-४६) इति ऊकारस्य ह्रस्वमात्रं पूर्वतो विशेष इति बोध्यम्॥

[2] जश्शसोरिति॥ 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इति जश्शसोः श्लुकि वहू इति, 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इति शो-शु-इत्यादेशद्वयपक्षे वहूओ वहूउ इति च त्रीणि रूपाणीति बोध्यम्॥

[3] अमि वहुमिति॥ 'स्वरस्य बिन्द्वमि' (प्रा. सू. १-२ ३९) इत्यूकारस्य अमि परे ह्रस्वो बोध्यः॥

[4] टा वहूअ इति॥ वधूशब्दात्तृतीयैकवचने टाप्रत्यये तस्य 'टाङिङसाम्' (प्रा. सू. २-२-३५) इत्यनेन श-शा-शि शे-इत्यादेशचतुष्टये वहूअ वहूआ वहूइ वहूए इति चत्वारि रूपाणीति भावः॥

[5] वहूहिमिति॥ वधूशब्दात भिसि तस्य हिँ हि-इत्यादेशद्वयेन वहूहिँ वहूहि इत्यन्यदपि रूपद्वयं बोध्यम्॥

[6] ङसीति॥ वधूशब्दात ङसिप्रत्यये तस्य 'ङसेश्शशाशिशे' (प्रा. सू. २-२-३४) इत्यनेन श-शा-शि-शे-इत्यादेशचतुष्टयपक्षे वहूअ वहूआ वहूइ वहूए इति, तदभावपक्षे च 'हिंतोत्तोदोदु ङसिम्' (प्रा. सू. २-२-६) इत्यनेन हिंतो-त्तो-दो-दु-इत्यादेशचतुष्टये च वहूहिंतो वहुत्तो वहूओ वहूउ इत्यप्यन्यानि चत्वारि रूपाणीति भावः॥

[7] भ्यसीति॥ वधूशब्दात भ्यसि तस्य हिंतो-त्तो-दो-दु-इत्यादेशचतुष्टये 'सुंतो भ्यसः' (प्रा. सू. २-२-७) इति सुंतो-इत्यादेशे च वहूहिंतो वहुत्तो वहूओ वहूउ वहूसुंतो इति पञ्च रूपाणीति भावः॥

[8] ङसूङ्योरिति॥ वधूशब्दात षष्ठीसप्तम्येकवचनयोः 'टाङिङसाम्' (प्रा. सू २-२-३५) इत्यनेन श-शा-शि शे-इत्यादेशचतुष्टये वहूअ वहूआ वहूइ वहूए इति चत्वारि रूपाणीति भावः॥

[1] वहूण वहूणं। वहूसु वहूसुं॥

इति ऊकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

---

# अथ ऋकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

मातृशब्दे—

## मातुराअरा ॥ २-२-५० ॥

मातृशब्दस्य आ अरा इत्येतौ स्तः। [2] अराऽप्यन्तादेश एव. [3] माआ माअरा। सोर्लुगित्यादि गङ्गावत्। संबुद्धौ तु टावन्तत्वाभावान्न टापो ङे। 'नाम्नि डरम्' (प्रा. सू. २-२-४४) पक्षे 'ऋदन्ताड्डुः' (प्रा. सू. २-२-४३) हे माअ। 'आ सौ वा' (प्रा. सू. २-२-४२) हे माआ।

---

[1] वहूणेत्यादि॥ वधूशब्दात् षष्ठीबहुवचने आमि तस्य 'णशामः' (प्रा. सू. २-२-४) इति णशादेशे 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इत्यनेन णकारात्परं बिन्दुतदभावपक्षयोः वहूण वहूणमिति रूपद्वयं बोध्यम्। एवं सप्तमीबहुवचनेऽपि सुकारात्परं बिन्दुतदभावपक्षयोः वहूसु वहूसुं इति रूपद्वयं बोध्यम्॥

इति ऊकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

---

### अथ ऋकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

[2] अराऽप्यन्तादेश इति॥ 'अनेकाल् शित्सर्वस्य' (पा. सू. १-१-५५) इत्यनेन अरादेशस्यानेकाल्त्वात्सर्वादेशत्वे प्राप्ते 'उदृताम्' (प्रा. सू. २-२-८८) इत्यतः ऋतामित्यनुवृत्तिसामर्थ्यादत्र ऋकारस्यान्त्यस्यैवादेश इति भावः॥

[3] माआ इत्यादि॥ मातृशब्दात्परस्य सोः 'सोर्लुक्' (प्रा. सू. २-२-२९) इत्यनेन लुकि प्रकृतसूत्रेण ऋकारस्य आ-अरा-इत्यादेशयोः माआ माअरा इति रूपद्वयं बोध्यम्। अत्र चन्द्रिकायां 'इदुन्मातुः' (प्रा. सू. १-२-८३) इत्यनेन ऋकारस्येत्वोत्वयोः प्रवृत्त्या माई माऊ इत्यपि रूपद्वयमित्युक्त्वा तत्र "यद्यपि 'इदुन्मातुः' इत्यत्र गौणग्रहणानुवृत्तिस्तथाऽपि 'क्वचिद्गौणस्यापि' इति त्रिविक्रमदेववचनात्

(वा)—[1] संबुद्धौ आअराअरआराणां प्रतिषेधः ।

[2] तेन माअरअरं पिअरअरं इत्यादि नास्ति । [3] विस्तरो भाष्ये । अत्राकारान्तस्य जननीवाचित्वं अरान्तस्य देवतावाचित्वमेवेति [4] व्यवस्थेष्यते । [5] 'उद्दतां त्वस्वमामि' (प्रा. सू. २-२-४८) इत्युक्तेर्जसादौ धेनुवत् ।

(वा)—आमि इत्वोत्वे वाच्ये ।

माईण माईणं माऊण माऊणं ।

(वा)—इत्वोत्वविषयेऽप्याअरादेशौ न स्तः ।

स्वसृशब्दे—

स्वसृगाड्डाल् ॥ २-२-४१ ॥

---

'बहुलाधिकारादगौणस्यापि' इति हेमचन्द्रवचनाच्च" इति प्रमाणं च प्रदर्शितम् । एतद्वृत्तिकृत्तु—त्रिविक्रमदेवेन 'क्वचिदगौणस्यापि' इत्युक्त्वा 'माईण माऊण' इत्युदाहरणदर्शनात् 'आमि इत्वोत्वे वाच्ये' इति वार्तिकदर्शनाच्च षष्ठीबहुवचनातिरिक्तविषये 'इदुन्मातुः' (प्रा. सू. १-२-८३) इति न प्रवर्तेत इत्यभिप्रैतीति भाति ॥

[1] संबुद्धावित्यादि ॥ अत्र वृत्तिकारेणानुपदमेव संबुद्धौ 'आ सौ वा' (प्रा. सू. २-२-५२) 'हे माआ' इत्युदाहरणप्रदर्शनेन तत्र आन्वघटितं रूपमभिमतमिति भाति । ततश्च मातृशब्दात्संबुद्धौ 'मातुराअरा' (प्रा. सू. २-२-५०) इत्यनेनात्वे प्राप्ते प्रकृतवार्तिकेन निषेधेऽपि 'आ सौ वा' (प्रा. सू. २-२-५२) इत्यनेनात्वाङ्गीकारे प्रकृतवार्तिके आग्रहणमनुपपन्नं भवेदिति वार्तिकेऽस्मिन् आपदरहितएव पाठः स्यादिति भाति ॥

[2] तेनेत्यादि ॥ अत्र 'माअरा पिअरा इत्यादि नास्ति' इति शुद्धपाठेन भाव्यमिति भाति ॥

[3] विस्तरो भाष्य इति ॥ इदं च भाष्यमेतद्वृत्तिकृत्प्रणीतमेव स्यादिति संभाव्यते । अत एवैतद्वृत्त्यारम्भे 'वार्तिकार्णवभाष्याद्या अप्पयज्व्यकृता अपि' इत्युक्तम् ॥

[4] व्यवस्थेष्यत इति ॥ 'आअरान्तौ जननीदेवतावाचिनाविति व्यवस्था वाच्या' इति वार्तिके यथासङ्ख्यविज्ञानादिति भावः ॥

[5] उद्दतां त्वस्वमामीत्युक्तेरिति ॥ उत्वपक्ष इति शेषः । ततश्च उत्वाभावपक्षे धातृशब्दवदपि रूपाणि बोध्यानीति भावः ॥

[1] स्वस्रादेः स्त्रियां डित् आत्वं लित्स्यात्। [2] ससा गङ्गावत्। संबुद्धौ [3] न डेत्वम्। हे ससा। एवं ननान्दा दुहिता इत्यादयः। धातृशब्दात् स्त्रियां 'ऋन्नेभ्यो ङीप' (पा. सू. ४-१-५)। [4] न त्वारस्तस्य, सुबुत्पत्त्यपेक्षितया विलम्बितत्वेन बहिरङ्गत्वात्। तत्र—

## धात्रीद्रे रस्तु ॥ १-४-८० ॥

धात्रीशब्दे द्रशब्दे च रस्य लुग्वा स्यात्।

(वा) [5] लुकि शेषद्वित्वं वेष्यते।

---

[1] स्वस्रादेरिति ॥ प्रकृतसूत्रे स्वसृगादित्यत्र गशब्दो 'गो गणपरः' (प्रा. सू. १ १-१०) इति गण इत्यर्थेऽत्र शास्त्रे संकेतितत्वेन स्वस्रादेरित्ययमर्थो लभ्यत इति भावः ॥

[2] ससेति ॥ स्वसृशब्दे संयुक्तावयवस्य वकारस्य 'लवरामधश्च' (प्रा. सू १-४-७८) इति लुकि ऋदन्ततया स्त्रियां 'ऋन्नेभ्यो ङीप्' (पा. सू. ४-१-५) इति ङीपो 'न षट्स्वस्रादिभ्यः' (पा. सू. ४-१-१०) इति निषेधे प्रकृतसूत्रेण डाल् प्रत्यये लकारडकारयोरित्संज्ञालोपाभ्यां निवृत्तौ डित्त्वाट्टेः ऋकारस्य लोपे 'सोर्लुक्' (प्रा. सू. २-२-२९) इति सुप्रत्ययस्य लुकि च गङ्गाशब्दवद्रूपाणि बोध्यानीति भावः ॥

[3] न डेत्वमिति ॥ आकारान्तत्वेऽपि टाबन्तत्वाभावात् 'टापो डे' (प्रा. सू. २-२-४५) इत्यनेन संबुद्धौ न डेत्वमिति भावः ॥

[4] न त्वारस्तस्येत्यादि ॥ 'आरस्सुपि' (प्रा. सू. २-२-४९) इत्यनेन आरादेशस्य सुप्प्रत्ययनिमित्तकत्वेन सुपश्च सङ्ख्याविवक्षानिमित्तकत्वेन तद्विवक्षायाश्च लिङ्गविवक्षोत्तरकालिकत्वेन सङ्ख्याविवक्षायाः पूर्वमेव प्रथमोपस्थितलिङ्गविवक्षानिमित्तकस्य ङीपोऽन्तरङ्गत्वात्प्रवृत्तिः। स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमेणोपस्थितिरिति भगवत्पतञ्जलिभाषणादिति भावः ॥

[5] लुकीत्यादि ॥ एतद्वार्तिकसाध्यं फलं धाई धत्ती इति रूपद्वयसिद्धिः। इदं च फलं त्रिविक्रमदेवेनान्यथा साधितम्। तथाहि—धात्रीशब्दे 'धात्रीद्रे रस्तु' (प्रा. सू. १-४-८०) इति रलुकः 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वस्य च प्राप्तौ ह्रस्वात्प्रागेव रलुगभ्युपगमपक्षे रलुगनन्तरं संयोगपरकत्वाभावात् 'संयोगे'

धाई धत्ती। [1]लोपाभावे [2]तलुक्। रस्य न द्वित्वं, 'अह्नः' इत्युक्तेः। धारी गौरीवत्। [3]द्रस्य लोपे समुद्दो। पक्षे समुद्रो इत्यादि। एवं भर्त्री भट्टीत्यादि॥

इति ऋकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

---

## अथ अदन्तनपुंसकलिङ्गसाधारणशब्दाः.

धन सु इति स्थिते—

### मङ्लुगसंबुद्धेर्नपः॥ २–२–३०॥

[1]नपुंसकलिङ्गात्परस्य

---

(प्रा. सू. १-२-४०) इति ह्रस्वस्याप्रवृत्त्या दीर्घस्यैव सत्त्वात 'दीर्घान्न' (प्रा. सू. १-४-८७) इति द्वित्वस्य निषेधात् 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तलोपे धाई इति रूपम्। 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वानन्तरं रलुगङ्गीकारपक्षे 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना शिष्टस्य तकारस्य द्वित्वे धत्ती इति च रूपं सिध्यतीति॥

[1]लोपाभाव इति॥ 'धात्रीद्रे रस्तु' (प्रा. सू. १-४-८०) इति विहितस्य रलुको वैकल्पिकत्वाद्रलुगभावपक्ष इत्यर्थः। शास्त्रेऽस्मिन् लग्लोपपदयोः पर्यायता दृश्यते॥

[2]तलुगित्यादि॥ 'लवरामधश्च' (प्रा. सू. १-४-७८) इति धात्रीशब्दे नित्यतया लुकि प्राप्ते तस्य वैकल्पिकत्वार्थं 'धात्रीद्रे रस्तु' (प्रा. सू. १-४-८०) इत्यारब्धम्। ततश्च रलुगभावपक्षे धात्रीशब्दगततकारस्य 'कगटडतदप' (प्रा. सू. १-४-७७) इत्यादिना तकारस्य लुकि शिष्टस्य रफस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यत्र अह्न इति निषेधात द्वित्वाभावे च धारी इति रूपमिति भावः॥

[3]द्रस्य लोप इत्यादि॥ समुद्रशब्दप्रक्रियानिरूपणस्याप्राकरणिकत्वेऽपि तत्सूत्रविवरणप्रसङ्गादिदमुक्तमिति बोध्यम्॥

इति ऋकारान्तस्त्रीलिङ्गसाधारणशब्दाः.

---

अथादन्तनपुंसकलिङ्गसाधारणशब्दाः.

[4]नपुंसकलिङ्गादिति॥ सूत्रेऽस्मिन दृश्यमानं नप इति नपुंसकलिङ्गार्थकं प्राचीनैः परिभाषितमिति भावः॥

[1]सोर्म[2]कारो ङानुबन्धो लुक्च स्यात्, न तु संबुद्धेः। [3]धणं।
(वा)—[4]अदन्ताल्लुङ्नेति वाच्यम्।
'सोर्लुक्' (प्रा. सू. २-२-९) हे धण। 'सोः' (प्रा. सू. २-२-१३) इति डो नास्ति। तस्य [5]पुंस्येवेष्टिः।

## [6]श्निशिङ्शि जश्शसोः ॥ २–२–३१ ॥

क्लीबाज्जश्शसोः निः, ङिन् इः, केवल इश्च शितः स्युः। धणाणि धणाइँ धणाइ। अमि धणं। शसि जस्वत्। शेषं पुंवत्। एवं [7]गुणवृक्षादयः ॥

इत्यदन्तनपुंसकलिङ्गसाधारणशब्दाः.

---

[1]सोरिति ॥ 'सोर्लुक्' (प्रा. सू. २-२-२९) इति पूर्वसूत्रात्सोरित्यनुवर्तत इति भावः ॥

[2]मकार इति ॥ सूत्रे म इत्यत्र अकार उच्चारणार्थ इति भावः ॥

[3]धणं इति ॥ धनशब्दात्सोः प्रकृतसूत्रेण मकारादेशे 'बिन्दुल' (प्रा. सू. १-१-४०) इत्यनेन मकारस्य बिन्दुरिति भावः ॥

[4]अदन्तादित्यादि ॥ प्रकृतसूत्रेण क्लीबे सोर्विहितो लुक् अदन्तेतरविषय इति भावः ॥

[5]पुंस्येवेष्टिरिति ॥ 'सोः' (प्रा. सू. २-२-१३) इति सूत्रे 'डो पुंस्येवेति वाच्यम्' इति वार्तिकदर्शनादिति भावः ॥

[6]श्नीत्यादि ॥ चन्द्रिकात्रिविक्रमवृत्त्योस्तु 'श्निशिंशिङ् जश्शसोः' इत्येतत्सूत्रपाठो दृश्यते। तत्पर्यालोचनायां सानुस्वारसानुनासिकाविकारौ जस्श्शसोरादेशाविति ज्ञायते। एतद्वृत्तिग्रन्थपरिशीलनायां च सानुनासिकनिरनुनासिकाविकारौ जश्शसोरादेशाविति प्रतीयते ॥

[7]गुणवृक्षादय इति ॥ 'क्लीबे गुणगाः' (प्रा. सू. १-१-५२) इत्यत्र—

'गुणदेवमण्डलाग्राः खड्गो बिन्दुश्च कररुहो वृक्षः'

इति गुणादिगणे गुणदेवमण्डलाग्रखड्गकररुहवृक्षशब्दानां पाठेन तेषां नपुंसकलिङ्गकत्वस्यापि बोधनादिति भावः ॥

इत्यदन्तनपुंसकलिङ्गसाधारणशब्दाः.

# अथ इदुदन्तनपुंसकलिङ्गसाधारणशब्दाः.

इकारान्ते[1]-दहिं दहिँ । 'सोर्लुक्' (प्रा. सू. २-२-९) हे दहि । जश्शसो-दहीणि दहीँ दहीइ । अमि दहिं । 'टो णा' (प्रा. सू. २-२-२८) दहिणा ; [2] दहीहिं ३ । 'नृनपि ङसिङसोः' (प्रा. सू. २-२-२७) [3]दहिणो । पक्षे-दहीहिंतो दहित्तो दहीओ दहीउ । [4] भ्यसि-दहीसुंतो दहीहिंतो इत्यादि । [5]दहिणो दहिस्स । [6]दहीणं दहीण । दहिम्मि । दहीसु दहीसुं ।

---

## अथ इदुदन्तनपुंसकलिङ्गसाधारणशब्दाः.

[1]**दहिं-इति** ॥ दधिशब्दस्येकारान्तनपुंसकलिङ्गतया ततः परस्य सोः 'मङ्लुगसंबुद्धेर्नपः' (प्रा-२-२-३०) इत्यनेन मकारादेशे तस्य बिन्दौ दस्य हादेशे च दहिं इति ' सोः ङ्लुकि दहिँ इति च रूपद्वयमिति भावः ॥

[2]**दहीहिं ३ इति** ॥ दधिशब्दाद्भिसि तस्य ' हिंहिङ्हि भिसः ' (प्रा सू २-२-५) इत्यादेशत्रये धकारस्य 'खघथधभाम्' (प्रा. सू. १-३-२०) इति हकारादेशे च दहीहिं दहीहिँ दहीहि इति रूपत्रयमिति भावः ॥

[3]**दहिणो इत्यादि** ॥ दधिशब्दात् पञ्चम्येकवचने ङसौ तस्य 'नृनपि ङसिङसोः' (प्रा सू. २-२-२७) इति णो-इत्यादेशे धस्य हत्वे दहिणो इति, णो-इत्यादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'हिंतो-त्तो-दो-दु-ङसेः' (प्रा. सू. २-२-६) इति हिंतो-त्तो-दो-दु-इत्यादेशचतुष्टये च दहीहिंतो-दहित्तो दहीओ दहीउ इति च रूपाणीति भावः ॥

[4]**भ्यसीति** ॥ दधिशब्दात् भ्यसि तस्य सुंतो-हिंतो-त्तो-दो-दु-इत्यादेशपञ्चके दहीसुंतो दहीहिंतो-दहित्तो-दहीओ-दहीउ-इति पञ्च रूपाणीति भावः ॥

[5] **दहिणो दहिस्सेति** ॥ दधिशब्दात् षष्ठ्येकवचने ङसि तस्य 'नृनपि ङसिङसोः' (प्रा. सू २-२-२७) इति णो-इत्यादेशे दहिणो इति ' तस्य वैकल्पिकत्वात्तदभावपक्षे 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) इति सरादेशे तस्य रित्त्वाद्द्वित्वे च दहिस्स इति च रूपद्वयं बोध्यम् ॥

[6]**दहीणं दहीणेति** ॥ दधिशब्दादामि तस्य 'णशामः' (प्रा. सू. २-२-४) इति णशादेशे तस्य शित्त्वात्पूर्वस्य दीर्घे 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति बिन्दौ तदभावे च दहीणं दहीणेति रूपद्वयम् । एवं सप्तमीबहुवचनेऽपि बिन्दुतदभावपक्षयो रूपद्वयं बोध्यम् ॥

एवं मधु[1]बिन्द्वादयः। महुं महुँ इत्यादि। [2]महु इति निरनुनासिकोऽपीष्यते॥

इति इदुदन्तनपुंसकलिङ्गसाधारणशब्दाः.

---

## अथ ऋदन्तनपुंसकलिङ्गसाधारणशब्दाः.

धातृशब्दे— [3]'आरस्सुपि, (प्रा. सू. (२-२-४९) धाआरं। धनवत्। संबुद्धौ पुंवत्। [4]हे धाअ इत्यादि॥

इति ऋदन्तनपुंसकलिङ्गसाधारणशब्दाः.

इति सुबन्ते साधारणशब्दप्रकरणम्.

---

[1] बिन्द्वादय इति॥ बिन्दुशब्दस्य गुणादौ पाठेन 'क्लीबे गुणगाः' (प्रा. सू १-१-५२) इति तस्य क्लीबत्वस्यापि बोधनादिति भावः॥

[2] महु-इतीति॥ मधुशब्दात् सौ संस्कृते 'स्वमोर्नपुंसकात' (पा सू. ७-१-२३) इत्यनेन तस्य लुकि मधु इति निष्पन्नं सिद्धावस्थं प्रकृतित्वेनाश्रित्य तस्य प्राकृते 'खघथधभाम्' (प्रा. सू. १-३-२०) इति धस्य हत्वे निरनुनासिकोकारघटितं महु इति रूपमिति भावः॥

इति इदुदन्तनपुंसकलिङ्गसाधारणशब्दाः.

---

अथ ऋदन्तनपुंसकलिङ्गसाधारणशब्दाः.

[3] धाआरमिति॥ नपुंसकाद्धातृशब्दात् सौ परतः 'आरस्सुपि' (प्रा. सू. २-२-४९) इति ऋकारस्य आरादेशे सोः 'मड्लुगसंबुद्धेर्नपः' (प्रा. सू. २-२-३०) इति मादेशे तस्य 'बिन्दुल्' (प्रा. सू. १-१-४०) इति बिन्दौ च धनशब्दवद्रूपमिति भावः॥

[4] हे धाअ इति॥ नपुंसकाद्धातृशब्दात्संबुद्धौ 'ऋदन्ताड्डः' (प्रा. सू. २-२-४३) इति संबुद्धेर्डादेशे डित्त्वाट्टिलोपे 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तलुकि च हे धाअ इति रूपमिति भावः॥

इति ऋदन्तनपुंसकलिङ्गसाधारणशब्दाः.

इति सुबन्ते साधारणशब्दप्रकरणम्.

---

# अथ सुबन्ते विशेषशब्दप्रकरणम्.

हलन्ताना[1]मन्त्यहलो लोपादजन्ततया रूपाण्युक्तप्रायाणि । तत्र विशेषा उच्यन्ते—

## अथ रेफान्तपुंलिङ्गविशेषशब्दः.

चतुर्शब्दे—[2] चऊ चउणो ॥

**चतुरो जश्शस्भ्यां चउरो चत्तारो चत्तारि ॥ २–२–२८ ॥**

स्पष्टम् । चउरो चत्तारो चत्तारि तिष्ठन्ति पश्य वा, इत्यादि वायुवत् ॥

**चतुरो वा ॥ २–२–२३ ॥**

भिसभ्यसस्सुपि दीर्घो वा स्यात् । चउहिं चऊहिं चउहिन्तो चऊहिन्तो, चउसु चऊसु इति विशेषः ॥

इति रेफान्तपुंलिङ्गविशेषशब्दः.

---

## अथ सुबन्ते विशेषशब्दप्रकरणम्.

### अथ रेफान्तपुंलिङ्गविशेषशब्दः.

[1] अन्त्यहलो लोपादिति ॥ 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति सूत्रेणान्त्यस्य हलो लोपविधानादित्यर्थः ॥

[2] चऊ चउणो इत्यादि ॥ चतुर्शब्दस्य नित्यबहुवचनान्ततया तस्माज्जसि रेफस्य 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति लोपे तकारस्य 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना लुकि 'णो शसश्च' (प्रा. सू. २-२-२६) इति जसो णो-इत्यादेशे चउणो इत्येकं रूपं, णो-इत्यादेशाभावपक्षे च 'ऌग्जश्शसोः' (प्रा. सू. २-२-३) इति जसः ऌकि शित्त्वात्पूर्वस्य दीर्घे चऊ इत्यपरं रूपं, तथा 'चतुरो जश्शस्भ्यां' (प्रा. सू. २-२-२८) इति प्रकृतसूत्रेण जस्विशिष्टस्य चउरो चत्तारो चत्तारि इत्यादेशत्रये च त्रीणि रूपाणीत्याहत्य चतुर्शब्दस्य जसि पञ्च रूपाणि बोध्यानि ॥

इति रेफान्तपुंलिङ्गविशेषशब्दः.

# अथ नकारान्तपुंलिङ्गविशेषशब्दाः.

राजन् सु इति स्थिते--

## राज्ञः ॥ २-२-५३ ॥

[1] अस्याकारोऽन्तादेशः स्याद्वा सौ।

(वा) --[2] राज्ञोऽन्त्यहल्लोपानन्तरमदन्तत्वावस्थायामयमाकारोऽन्तादेश इष्यते।

[3] राआ। [1] पक्षे राओ ॥

## पुंस्याणा राजवच्चानः ॥ २-२-६० ॥

---

अथ नकारान्तपुंलिङ्गविशेषशब्दः.

[1] अस्याकारोऽन्तादेशस्स्याद्वेति ॥ 'आ सौ वा' (प्रा. सू. २-२-५२) इति पूर्वसूत्रस्यात्र सम्बन्धेन राजनशब्दस्य सौ परे आकारोऽन्तादेशो वा स्यादित्यर्थो लभ्यत इति भावः ॥

[2] राज्ञोऽन्त्यहल्लोपानन्तरमित्यादि ॥ राजन्शब्दे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यन्त्यहल्लोपापवादतयाऽस्यात्वस्य प्रवृत्तौ एकपदेऽत्र प्राकृते 'सन्धिस्त्वपदे' (प्रा. सू. १-१-१९) इति सन्धेर्निषेधात् राअआ इत्यनिष्टं रूपमापद्येत, इष्यते तु राआ इति। अतो वार्तिकमाह--राज्ञोऽन्त्यहल्लोपानन्तरमित्यादि ॥

[3] राआ इति ॥ राजन्शब्देऽन्त्यहलो नकारस्य 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति लोपानन्तरं 'राज' इत्यकारान्ततायामनेनान्त्यस्यात आकारादेशे 'सोर्लुक्' (प्रा. सू. २-२-५) इति सुप्रत्ययस्य लुकि 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना जस्य लुकि राआ इति रूपमिति भावः ॥

[1] पक्षे राओ इति ॥ प्रकृतस्यात्वस्य वक्ष्यमाणस्य आणादेशस्य च वैकल्पिकत्वात्तदुभयाभावपक्षे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति नकारस्य लोपे जस्य लुकि च रामशब्दवत् राओ इति रूपमिति भावः ॥

**पुंलिङ्गशब्द[1]सम्बन्धिनोऽनित्यस्य आण इत्यादेशः स्याद्वा। [2]पक्षे यथादर्शनं राजवत्कार्यं च स्यात्। तथाचाणादेशे सोरित्यादयः। [3]आणादेशाभावे 'राज्ञः' (प्रा. सू. २-२-५३) 'टोऽणा' (प्रा. सू. २-२-५४) 'जश्शस्ङसिङसां णोश्' (प्रा. सू. २-२-५५) इति प्रवर्तन्ते। तथाचादेशे राआणो॥**

**(वा)—[4]आणादेशे राज्ञ इत्यादेः प्रतिषेधः।**

---

[1] **सम्बन्धिनोऽनित्यस्येति॥** अध्याहृतशब्दस्वरूपविशेषणतया पाणिनीयवन्निर्दिश्यमानपरिभाषया च अन्नन्तशब्दस्वरूपगतनिर्दिश्यमानस्येत्यर्थसम्भवेन तत्फलितार्थतयाऽयमंशस्सिध्यतीति बोध्यम्। अत एव नन्दनादिशब्दगतस्य अनो नानेनाणादेशापत्तिरिति॥

[2] **पक्षे यथादर्शनं राजवत्कार्यमिति॥** राजन्शब्दे विहितकार्याणां अतिदेशमन्तरैव निष्प्रत्यूहतया आणादेशस्य वैकल्पिकतयैतदभावपक्षे राजन्शब्दभिन्नेषु आत्मादिशब्देष्वेवास्यातिदेशस्य फलं बोध्यम्॥

[3] **आणादेशाभावे 'राज्ञः' 'टो णा' 'जश्शस्ङसिङसां णोश्' इति प्रवर्तन्त इति॥** यद्यपि 'णोणाङिष्विदना जः' 'इणमामा' इत्यादिविधयोऽपि राजन्शब्दे विहिताः, तथाऽपि तेषां राजन्शब्दसम्बन्धिजकाररूपं निमित्तमप्यवलम्ब्य विधानादात्मादिशब्देषु जकारस्याभावात्केवलराजन्शब्दमात्रनिमित्तककार्याणामेव राजवत्कार्यातिदेशेनेष्टतया तानि चैतत्सूत्रत्रयविहितान्येवेत्याभिप्रायेणैतत्सूत्रत्रितयमेवोपात्तमिति बोध्यम्। एतदभिप्रायेणैवात्र पूर्वमपि 'यथादर्शनम्' इत्यभिहितम्॥

[4] **आणादेश इत्यादि॥** राजन्शब्दसम्बन्धिनोऽनित्यस्याणादेशेऽप्येकदेशविकृतन्यायादिना आणादेशविशिष्टस्यापि राजन्शब्दतया 'राज्ञः' (प्रा. सू. २-२-५३) इत्यादि विधीनां प्रवृत्त्या तन्निषेधार्थमेतद्वार्तिकमारब्धमिति भावः। तथाचाणादेशपक्षे राजन्शब्दप्रयुक्तकार्याणामप्रवृत्त्या अन्त्यहलो नकारस्य लोपेनाकारान्तत्वात् रामशब्दवद्रूपाणि बोध्यानि। अत एव 'तथाचाणादेशे सोरित्यादयः' इत्यनुपदमेवोक्तमिति बोध्यम्॥ तथा च राजन्शब्दात्प्रथमैकवचने सौ आत्वनलोपाणादेशपक्षेषु राआ राओ राआणो इति त्रीणि रूपाणि सिध्यन्ति॥ मुद्रितषड्भाषाचन्द्रिकागतसवार्तिकसूत्रपाठे तु 'आणादेशे राज्ञ इत्यादिप्रतिशेधं केचिदिच्छन्ति' इत्येतद्वार्तिकं दृश्यते। चन्द्रिकायामेतदभिप्रायेण जसि णोशादेशमाणादेशेऽप्यभिप्रेत्य राआणाणो इत्युदाहृतम्, सौ तु नोदाहृतम्॥

[1] हे राआ। 'डोश्लुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२)। हे राओ हे राअ हे राआण हे राआणो, पञ्च। राअमिति तु [2] शौरसेन्याम ॥

**जश्शस्ङसिङसां णोश् ॥ २–२–५५ ॥**

एषां शित् णो [3] वा स्यात् ॥

**णोणाङिष्विदना जः ॥ २–२–५६ ॥**

राज्ञः अना सहितस्य जस्येकारः [4] स्यात्तु णोणाङिषु। राइणो। [5] तपरत्वान्न दीर्घः।

---

[1] हे राआ इत्यादि ॥ राजन्शब्दात् संबुद्धौ सौ 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यन्त्यहलो नकारस्य लोपानन्तरं 'राज्ञः' (प्रा. सू. २-२-५३) इत्यकारस्य आत्वपक्षे 'डोश्लुकौ तु संबुद्धेः' (प्रा. सू. २-२-४२) इत्यनेन विहितस्य संबुद्धेर्डोत्वस्य वैकल्पिकतया तदभावपक्षे 'सोर्लुक्' (प्रा. सू. २-२-९) इति सोर्लुकि 'प्रायो लुक्' (प्रा. सू. १-३-८) इति जस्य लुकि च राआ इति, आत्व एव संबुद्धेर्डोत्व-पक्षे डित्वादाकारस्य लोपे च राओ इति, आत्वस्य वैकल्पिकत्वात्तदभावपक्षे सोर्लुकि जकारस्य लुकि च राअ इति, अन आणादेशपक्षे संबुद्धेर्डोत्वाभावपक्षे संबुद्धेर्लुकि च राआण इति, आणादेशपक्ष एव संबुद्धेर्डोत्वपक्षे राआणो इति पञ्च रूपाणि बोध्यानि। मुद्रितषड्भाषाचन्द्रिकायां त्वत्र राआण इति रूपप्रदर्शनं गलितमिति भाति ॥

[2] शौरसेन्यामिति ॥ शौरसेनीभाषायां 'मः' (प्रा. सू. ३-२-२२) इत्यनेन संबुद्धौ परतो नकारस्य मकारविधानाद्राजन्शब्दात्संबुद्धौ सौ नकारस्य मकारे जस्य लुकि सोर्लुकि च राअमिति रूपमिति भावः ॥

[3] वा स्यादिति ॥ 'आ सौ वा' (प्रा. सू. २-२-५२) इत्यतो वेत्यस्य 'राज्ञः' (प्रा. सू. २-२ ५४) इत्यतो राज्ञ इत्यस्य चानुवृत्त्या राज्ञः परेषां जसादीनां णोश्वा स्यादित्यर्थ इति भावः ॥

[4] स्यात्त्विति ॥ वेत्यनुवृत्तिलब्धमेतत्, प्राकृतेऽस्मिन् तु इत्यस्य विकल्पार्थ-कत्वात् ॥

[5] तपरत्वादिति ॥ राजन्शब्दाज्जसि तस्य 'जश्शस्ङसिङसां' (प्रा. सू. २-२-५५) इत्यादिना णोशादेशे सति तस्मिन् परतः प्रकृतसूत्रेण जन् इत्यस्य इत्वे सति राइणो इत्यत्र णोशः शित्त्वात् 'शिति दीर्घः' (प्रा. सू. १-१-१५) इत्यनेन दीर्घः प्राप्तोऽपि 'तपरस्तत्कालस्य (पा. सू. १-१-७०) इत्यनेनात्र इदिति तपरतया विधाना-

[1] पक्षे-राआणो । णोत्वाभावे राआ । आणादेशे राआणा, चत्वारि ॥

## इणममामा ॥ २-२-५७ ॥

**राज्ञोऽना सहितस्य जस्य अम्-आम्-इतिविभक्तिभ्यां सह इणं वा स्यात्। [2] राइणं राअं राआणं। [3] शसि राआणो राइणो राआ राए राआणो राआणे, षट् ॥**

---

तत्सामर्थ्यान्न दीर्घस्य प्रवृत्तिरिति भावः। नन्वेवं णोशि शित्करणं व्यर्थमिति चेन्न। तस्य इत्त्वाभावपक्षे राआणो इत्यादौ जसन्ते 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घार्थे चरितार्थत्वादाणादेशपक्षे जसो णोशि राआणाणो इति केषां चित्पक्षेऽपि दीर्घार्थे चरितार्थत्वान्नेत्याशयः। ननु 'णोणाङिञ्चिदना जः' (प्रा. सू. २-२-५६) इति प्रकृतसूत्रे जग्रहणं किमर्थम्? राइणो-इत्यत्र 'प्रायो लुक्' (प्रा. १-३-८) इत्यादिना राआ इत्यत्रेव लुकस्सिद्धत्वादिति चेन्न। जग्रहणाभावे 'राज्ञः' (प्रा. सू. २-२-५३) इत्यादीनामिव 'पुंस्याणो राजवच्चानः' (प्रा. सू. २-२-६०) इत्यनेनान्नन्ते राजवत्कार्यातिदेशादात्मादिशब्देष्वपि प्रकृतस्येत्वस्य दुर्निवारत्वापातात्। जग्रहणे कृते तु अनासहितो जकारो यत्र दृश्यते तत्रैवास्य प्रवृत्त्या आत्मादिशब्देषु अनस्सत्वेऽपि जकाराभावात्तत्रै-तत्प्रवृत्तेर्वारयितुं शक्यत्वादिति प्रतिभाति ॥

[1] **पक्ष इत्यादि ॥** प्रकृतस्येत्वस्य वैकल्पिकत्वादेतदभावपक्षे नकारलोपानन्तरं जसो णोशादेशे णोशः शित्त्वात्तत्पूर्वस्याकारस्य दीर्घे च राआणो इति, णोशो वैकल्पिकत्वात्तदभावपक्षे 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इति जसः श्लुकि तस्य शित्त्वात्पूर्वस्य दीर्घे राआ इति, आणादेशपक्षे पूर्ववज्जसः श्लुकि पूर्वस्य दीर्घे च राआणा इति, चत्वारि रूपाणीति भावः ॥

[2] **राइणमित्यादि ॥** राजन्शब्दात् द्वितीयैकवचनेऽमि प्रकृतसूत्रेण अना अमा च सहितस्य जस्य इणमादेशे बिन्दौ जकारस्य लुकि च राइणं इति, इणमादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'पुंस्याणः' (प्रा सू. २-२-६०) इत्यनेनाणादेशे अमो मकारादेशे बिन्दौ च राआणं इति, आणादेशस्यापि वैकल्पिकत्वात्तस्याप्यभावपक्षे अन्त्यहलो नकारस्य लोपे अमो मकारादेशे बिन्दौ च राअं इति त्रीणि रूपाणीति भावः ॥

[3] **शसीत्यादि ॥** राजन्शब्दात् द्वितीयाबहुवचने शसि तस्य णोशादेशे तत्पूर्वस्य अना सहितस्य जस्य इत्त्वाभावे अन्त्यहलो नकारस्य लोपे जस्य लुकि च णोशश्शित्त्वात्पूर्वस्य दीर्घे राआणो इति, इत्त्वपक्षे राइणो इति, जसो णोशभावपक्षे तस्य श्लुकि राआ इति, तत्रैव शसश्श्लुकि पूर्वस्य एत्वपक्षे राए इति, आणादेशपक्षे एत्वतदभावयोः राआणे, राआणा, इति षड्रूपाणीति भावः ॥

## टो णा ॥ २–२–५४ ॥

[1] राज्ञः टो णा वा स्यात्। [2] इत्वम्। राइणा।

## ङस्ङसिटां णोणोऽडण् ॥ २–२–५९ ॥

[3] राज्ञोऽना सहितस्य डित् अण् वा स्यात्, ङस्ङसिटादेशयोः णो-णा-इत्यनयोः परयोः। डित्वात्पूर्वस्वरलोपः। [4] रण्णा। डणित्त्वयोरभावे राअणा। णात्वस्याप्यभावे राएण राआणेण राएणं राआणेणं। भिसि राएहिं ३।

## भिस्भ्यसाम्सुप्स्वीत् ॥ २–२–५८ ॥

[5] राज्ञोऽना सहितस्य ई वा स्याद्भिसादौ।

---

[1] राज्ञः टो णा वा स्यादिति॥ 'आ सौ वा' (प्रा. सू. २-२-५२) इत्यतो वेति, 'राज्ञः' (प्रा. सू. २-२-५३) इति सूत्रं चानुवर्तत इति भावः॥

[2] इत्त्वमिति॥ राजन्शब्दे 'णोणाङिष्विद्ना जः' (प्रा. सू. २-२-५६) इत्यनेन तृतीयैकवचनस्य टाप्रत्ययस्य णो-इत्यादेशे अना सहितस्य जस्येत्वमित्यर्थः॥

[3] राज्ञोऽना सहितस्येत्यादि॥ 'राज्ञः' (प्रा. सू. २-२-५३) इति सूत्रं 'आ सौ वा' (प्रा. सू. २-२-५२) इत्यतो वेति 'णोणाङिष्विद्ना जः' (प्रा. सू. २-२-५६) इत्यतोऽना जः इत्यस्य चानुवृत्त्याऽयमर्थः सिद्ध इति भावः॥

[4] रण्णेत्यादि॥ राजन्शब्दात्तृतीयैकवचने टाप्रत्यये तस्य णादेशपक्षे तत्पूर्वस्याना सहितस्य जस्येत्त्वे राइणो इति, तत्रैव इत्त्वस्य वैकल्पिकत्वात्तदभावपक्षे प्रकृतसूत्रेण अना सहितस्य जकारस्य डणि तस्य डित्वाट्टेरकारस्य लोपे रण्णा इति, णात्वपक्ष एव डणित्त्वयोरुभयोर्वैकल्पिकत्वात्तदुभयाभावपक्षे अन्त्यहलो नकारस्य लोपे जस्य लुकि राआणा इति, णात्वस्यापि वैकल्पिकत्वात्तस्याप्यभावपक्षेऽन्त्यहलो नकारस्य लोपे जकारस्य लुकि टाप्रत्ययस्य 'टो डेणल्' (प्रा. सू. २-२-१८) इति डेणलादेशे तस्य डित्वात्पूर्वाकारस्य लोपे राएण इति, अत्रैव णात्परं 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति बिन्दुपक्षे राएणं इति, तत्रैवाणादेशपक्षे टाप्रत्ययस्य डेणलि णात्परं बिन्दुपक्षे राआणेणं इति, बिन्द्वभावपक्षे राआणेण इति सप्तरूपाणि निष्पद्यन्त इति बोध्यम्॥

[5] राज्ञोऽनेत्यादि ॥ पूर्ववदत्रापि 'राज्ञः अना जः वा' इति पदानामनुवृत्तिर्बोध्या॥

**राईहि [1]नव। ङसौ डणि रण्णो। इत्त्वे राइणो। उभयाभावे दीर्घः, राआणो। णोत्वाभावे राआहिंतो राअत्तो राआओ राआउ राआ राआहि राआणाहिंतो राआणत्तो राआणाओ राआणाउ राआणा राआणाहि, [2]पञ्चदश। भ्यसि–राआहिंत्तो राईहिंतो राएहिंतो राआसुंतो राईसुंतो राएसुंतो राअत्तो राइत्तो इत्यादि। राआहि राएहि राईहि राआणाहि राआणेहि, [3]चतुर्विंशतिः। ङसि-राइणो रण्णो राआणो राअस्स**

---

[1] **नवेति**॥ राजन्शब्दात्तृतीयाबहुवचने भिसि जस्य लुकि अन्त्यहलो नकारस्य लोपानन्तरं 'भिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इत्यनेन पूर्वाकारस्यैत्वे 'हिं हिँ हि भिसः' (प्रा. सू. २-२-५) इत्यादेशत्रये राएहिं राएहिँ राएहि इति, प्रकृतसूत्रेण अना सहितस्य जस्य ईत्वपक्षे राईहिं राईहिँ राईहि इति, आणादेशपक्षे राआणेहिं राआणेहिँ राआणेहि, इति नव रूपाणि बोध्यानीति भावः॥

[2] **पञ्चदशेति**॥ राजन्शब्दात्पञ्चम्येकवचने ङसौ तस्य 'जश्शस्ङसिङसां णोश्' (प्रा. सू. २-२-५५) इति णोशादेशे पूर्वस्य जन् इत्यस्य 'ङस्ङसिटां णोणोडेण्' (प्रा. सू. २-२-५९) इति डणि डित्वाट्टेराकारस्य लोपे रण्णो इति, डणो वैकल्पिकत्वात्तदभावपक्षे 'णोणाङ्ष्विदना जः' (प्रा. सू. २-२-५६) इत्यना सहितस्येत्त्वपक्षे राइणो इति, डणित्त्वयोरुभयोर्वैकल्पिकत्वात्तदुभयाभावपक्षेऽन्त्यहलो नकारस्य लोपे जकारस्य लुकि णोशश्शित्त्वात्पूर्वस्य दीर्घे च राआणो इति. णोशोऽपि वैकल्पिकत्वात्तस्याप्यभावपक्षे 'हिंतोत्तोदोदु ङसिस्' (प्रा. सू. २-२-६) 'ङसः श्लुक्' (प्रा. सू. २-२-१५) 'ङसिसो हि' (प्रा. सू. २-२-१७) इति सूत्रैः हिंतो—इत्याद्यादेशषट्के राआहिंतो राअत्तो राआओ राआउ राआ राआहि इति, तथाऽऽणादेशेऽप्येवमेवादेशषट्के राआणाहिंतो राआणत्तो राआणाओ राआणाउ राआणा राआणाहि, इति पञ्चदश रूपाणीति भावः॥

[3] **चतुर्विंशतिरिति**॥ राजान्शब्दात्पञ्चमीबहुवचने भ्यस्प्रत्यये तदादेशतया विहितेषु हिंतो—इत्यादिषट्स्वादेशेषु हिंतो इत्यादेशे सति राज्ञोऽन आणादेशपक्षे 'दिदोत्तोदु ङसौ' (प्रा. सू. २-२-८) इति दीर्घपक्षे राआणाहिंतो इति, तत्रैव 'भिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इत्येत्वपक्षे राआणेहिंतो इति, आणादेशाभावपक्षे राज्ञोऽनासहितस्य जस्य 'भिस्भ्यसाम्सुप्स्वीत्' (प्रा. सू. २-२-५८) इतीत्वपक्षे राईहिंतो इति, ईत्वाभावपक्षेऽन्त्यहलो नकारस्य लोपे पूर्ववदकारस्य दीर्घैत्वपक्षयोः राआहिंतो राएहिंतो इति हिंतो-इत्यादेशपक्षे पञ्च रूपाणि। एवं भ्यसादेशेषु त्तो-दो-दु-इत्यादेशेषु

**राआणस्स,** [1] **पञ्च। 'इणममामा'** (प्रा. सू. २-२-५७) [2] **राइणं राईणं राईण राआणाण राआणाणं, पञ्च।**

---

त्रिष्वप्याणादेशत्वनकारलोपपक्षेषु राआणत्तो राआणाओ राआणाउ राइत्तो राईओ राईउ राअत्तो राआओ राआउ इति नव रूपाणि। एवं भ्यसो ह्यादेशपक्षे आणादेशत्वनलोपपक्षेषु राआणाहि राआणेहि राईहि राआहि राएहि इति पञ्चरूपाणि। तथा भ्यसस्सुंनो-इत्यादेशपक्षे आणादेशत्वनलोपपक्षेषु राआणासुंतो राआणेसुंतो राईसुंतो राआसुंतो राएसुंतो इति पञ्चरूपाणीत्याहत्य भ्यसि चतुर्विंशतिरूपाणीति भावः ॥

[1] **पञ्चेति** ॥ राजन्शब्दात् षष्ठ्येकवचने ङसि 'जश्शस्ङसिङसां णोश्' (प्रा. सू. २-२-५५) इति तस्य णोशादेशे 'णोणाङिष्विदना जः' (प्रा. सू. २-२-५६) इत्यना सहितस्य जस्येत्त्वपक्षे राइणो इति, तत्रैव 'ङस्ङसिटां णोणोऽण्' (प्रा. सू. २-२-५९) इत्यना सहितस्य जस्य ङणि ङित्त्वाट्टेराकारस्य पूर्वस्य लोपे च रण्णो इति, ङणित्त्वयोर्वैकल्पिकत्वात्तदुभयाभावपक्षेऽन्त्यहलो नकारस्य लोपानन्तरं जस्य लुकि च णोशश्शित्त्वात्तत्पूर्वस्य दीर्घे राआणो इति, राज्ञेऽन आणादेशपक्षे 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) इति ङसस्सरादेशे तस्य रित्त्वाद्द्वित्वे राआणस्स इति, आणादेशाभावपक्षे णोशो वैकल्पिकत्वात्तदभावपक्षे च राज्ञोऽन्त्यहल्लोपानन्तरं जस्य लुकि च पूर्ववत् ङसस्सरादेशे रित्त्वात्तस्य द्वित्वे च राअस्स इतीत्याहत्य पञ्चरूपाणीति भावः ॥

[2] **राइणमित्यादि** ॥ राजन्शब्दात् षष्ठीबहुवचने आमि 'इणममामा' (प्रा. सू. २-२-५७) इत्याम्विभक्त्याऽना च सहितस्य जस्य इणमादेशे राइणं इति, 'भिस्भ्यसाम्सुप्स्वीत्' (प्रा. सू. २-२-५८) इत्यना सहितस्य जस्येत्वपक्षे 'णशामः' (प्रा. सू. २-२-४) इत्यामो णशादेशे 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति णकारात्परं बिन्दुतदभावपक्षयोः राईणं राईण इति, राज्ञ आणादेशपक्षे चामो णशादेशे तस्य शित्त्वात्तत्पूर्वस्य दीर्घे द्वितीयणात्परं बिन्दुतदभावपक्षयो राआणाणं राआणाण, इतीत्याहत्य पञ्च रूपाणीति भावः। अत्र आणादेशेणमादेशत्वानां त्रयाणामपि वैकल्पिकतयैतत्त्रितयाभावपक्षेऽन्त्यहलो नकारस्य लोऽपे जस्य लुक्यामो णशादेशे णकारात्परं बिन्दुतदभावपक्षयोश्च राआणं राआण इत्यन्यदपि रूपद्वयं प्रदर्शनीयम्। एवमेवोत्तरत्रापि ङौ सुपि च राआणम्मि राआणे, राआणसु राआणसुं इति प्रत्येकं रूपद्वयमधिकं प्रदर्शनीयमिति प्रतिभाति ॥

[1] 'णोणाङिष्विदना जः' (प्रा. सू. २-२-५६) राइम्मि राअम्मि [2] सुपि—राईसु राईसुं राएसु राएसुं। [3] केचिदाणादेशेऽपि 'राज्ञः' (प्रा. सू. २-२-५३) इत्यादिकमिच्छन्ति। तन्मते सौ—राआणा। जसि राआणाणो॥ आणादेशे अना सहितस्य स्थानिनोऽभावात् इत् इणं ईत् डण् इति न स्युः। शसि—राआणाणो राआणा। ङसिङसोः राआणाणो, इत्यपि रूपाणि॥

इति राजन्शब्दः

---

[1] णोणाङीत्यादि॥ इदमुपलक्षणं रूपान्तराणामपि। तथाहि—राजन् शब्दात्सप्तम्येकवचने ङिप्रत्यये राज्ञोऽन आणादेशपक्षे 'ङेर्डे' (प्रा. सू. २-२-१६) इति 'ङेर्डे'न्वे टेरकारस्य लोपे राआणाणे इति डे-इत्यादेशाभावपक्षे 'ङेर्म्मिर्' (प्रा. सू. २-२-११) इति ङेर्म्मिरादेशे रित्त्वात्तस्य द्वित्वे च राआणम्मि इति, आणादेशाभावपक्षे 'णोणाङिष्विदना जः' (प्रा. सू. २-२-५६) इत्यना सहितस्येत्त्वपक्षे पूर्ववत् ङेर्म्मिरादेशे तस्य द्वित्वे च राइम्मि इति, इत्वस्यापि वैकल्पिकत्वात्तदभावपक्षेऽन्त्यहलो नकारस्य लोपे जस्य लुकि ङेर्डे-इत्यादेशे तस्य डित्वात्तत्पूर्वाकारस्य टेर्लोपे राए इति, डे-इत्यादेशाभावपक्षे पूर्ववत् ङेर्म्मिरादेशे तस्य द्वित्वे च राअम्मि इतीत्याहत्य पञ्च रूपाणीति॥

[2] सुपीति॥ राजन्शब्दात्सप्तमीबहुवचने सुपि राज्ञोऽन आणादेशपक्षे 'भिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इति सुपः पूर्वाकारस्य एत्वे सुकारात्परं बिन्दुतदभावपक्षयो राआणेसुं राआणेसु इति, आणादेशाभावपक्षे 'भिस्भ्यसाम्सुप्स्वीत्' (प्रा. सू. २-२-५८) इति राज्ञोऽना सहितस्य जस्य ईत्वे सुकारात्परं बिन्दुतदभावपक्षयो राईसुं राईसु इति, ईत्वस्यापि वैकल्पिकत्वात्तदभावपक्षेऽन्त्यहलो नकारस्य लोपे जस्य लुकि सुपः पूर्वस्याकारस्य एत्वे सुकारात्परं बिन्दुतदभावपक्षयो राएसुं राएसु, इतीत्याहत्य षड्रूपाणीति बोध्यम्॥

[3] केचिदिति॥ 'आणादेशे राज्ञ इत्यादिप्रतिषेधं केचिदिच्छन्ति' इति वार्तिकदर्शनात् 'राज्ञः' (प्रा. सू. २-२-५३) इत्याद्यात्वादिविधीनामाणादेशेऽपि प्रवृत्त्यभ्युपगमवादिन इति भावः। ततश्च राजन्शब्दात्प्रथमैकवचने सौ राज्ञोऽन आणादेशानन्तरमपि 'राज्ञः' (प्रा. सू. २-२-५३) इत्यात्वप्रवृत्त्या राआणा इत्येकमधिकं रूपम्, तथा 'जश्शस्ङसिङसां णोश्' (प्रा. सू. २-२-५१) इति णोशादेशे जश्शस्ङसिङस्सु प्रत्येकमेकैकमधिकं रूपं बोध्यमिति भावः॥

इति राजन्शब्दः

---

**आत्मन्‌शब्दे आणादेशे [1] अप्पाणो-अप्पाणा इत्यादि वृक्षवत्। [2] राजवद्भावे तु 'राज्ञः' (प्रा. सू. २-२-५३) इत्यात्वम्। अप्पा [3] पक्षे अप्पो। हे अप्पा हे अप्पो। जश्शस्ङसिङसां णोश् (प्रा. सू. २-२-५५) [4] अप्पाणो अप्पा। [5] अप्पं। [6] अप्पाणो अप्पा अप्पे।**

---

[1] **अप्पाणो अप्पाणा इत्यादीति** ॥ आत्मन्‌शब्दात् प्रथमैकवचने सौ 'पुंस्याणो राजवच्चानः' (प्रा. सू. २-२-६०) इत्यन आणादेशे आत्माण-इति जाते 'वाऽऽत्मभस्मनि पः' (प्रा. सू. १-४-२०) इति त्म-इति संयुक्तस्य पादेशे तस्य 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना द्वित्वे 'संयोगे' (प्रा. सू. १-२-४०) इति पूर्वस्य ह्रस्वे अप्पाण इति जाते रामशब्दवत् अप्पाणो इत्यादिरूपाणीति भावः ॥

[2] **राजवद्भावे त्वित्यादि** ॥ 'पुंस्याणो राजवच्चानः' (प्रा. सू. २-२-६०) इत्यनेन न्नन्तस्य राजवत्त्वातिदेशेन प्रथमैकवचने सौ. 'राज्ञः' (प्रा. सू. २-२-५३) इत्यात्वपक्षे आकारान्तत्वेन सोर्लुकि च अप्पा इति रूपमिति भावः ॥

[3] **पक्षे अप्पो इति** ॥ 'राज्ञः' (प्रा. सू. २-२-५३) इत्यनेन विहितस्यात्वस्य वैकल्पिकत्वात्तदभावपक्ष इत्यर्थः। आणादेशस्यापि वैकल्पिकत्वात्तस्याप्यभावपक्ष इत्यप्यत्रार्थः। तथा च आत्मन्‌शब्दे आत्वाणादेशोभयाभावपक्षे अन्त्यहलो नकारस्य लोपे त्मस्य पादेशे तस्य द्वित्वे पूर्वस्य ह्रस्वेऽकारान्तत्वेन अप्पो इति रामशब्दवद्रूपं बोध्यम् ॥

[4] **अप्पाणो अप्पा इति** ॥ आत्मन्‌शब्दात्प्रथमाबहुवचने जसि तस्य णोशादेशे अन्त्यहलो नकारस्य लोपे णोशश्शित्त्वात्पूर्वस्य दीर्घे अप्पाणो इति, णोशो वैकल्पिकत्वात्तदभावपक्षेऽन्त्यहलो नकारस्य लोपे 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इति जसः श्लुकि तस्य शित्त्वात्पूर्वस्य दीर्घे अप्पा इत्यपि रूपमिति भावः ॥

[5] **अप्पमिति** ॥ आत्मन्‌शब्दात् द्वितीयैकवचनेऽमि तस्य 'अमः' (प्रा. सू. २-२-२) इति मकारादेशे तस्य बिन्दौ अन्त्यहलो नकारस्य लोपे पूर्ववत्संयुक्तस्य पकारादेशे द्वित्वे ह्रस्वे च अप्पमिति रूपमिति भावः। इदमाणादेशे सति अप्पाणमिति रूपान्तरस्याप्युपलक्षकं बोध्यम्। एवमुत्तरत्राप्याणादेशे रूपान्तरं बोध्यम् ॥

[6] **अप्पाणो इत्यादि** ॥ आत्मन्‌शब्दात् द्वितीयाबहुवचने शस्याणादेशाभावपक्षेऽन्त्यहलो नकारस्य लोपे 'जश्शस्ङसिङसां णोश्' (प्रा. सू. २-२-५५) इति शसो णोशादेशे तस्य शित्त्वात्पूर्वस्य दीर्घे अप्पाणो इति, णोशादेशाभावपक्षे शसः श्लुकि तस्य शित्त्वात्पूर्वस्य दीर्घे अप्पा इति, 'शस्येत्' (प्रा. सू. २-२-२०) इति शस एत्वपक्षे अप्पे

टा—[1] अप्पणा अप्पेण अप्पेणं।

## टो वाऽऽत्मनो णिआ णइआ ॥२-२-६१॥

आत्मनः परस्य टावचनस्य एतौ वा स्तः। अप्पणिआ अप्पणइआ। केचिदाणादेशेऽपि अप्पाणणिआ अप्पाणणइआ इतीच्छन्ति। भिसि [2] अप्पेहिं ३। ङसौ-अप्पाणो अप्पाणाहिंतो [3] इत्यादि। भ्यसि-अप्पासुंतो इत्यादि। [4] ङसि अप्पाणो इत्यादि।

---

इति रूपमिति भावः। एवमत्रैवाणादेशपक्षे अप्पाणा अप्पाणं इत्यपि रूपद्वयं बोध्यम्॥

[1] **अप्पणेत्यादि॥** आत्मन्शब्दात् तृतीयैकवचने टाप्रत्यये आत्मनोऽन्त्यहलो नकारस्य लोपे टाप्रत्ययस्य 'टो णा' (प्रा. सू. २-२-५४) इत्यनेन राजवत्कार्यातिदेशेन णादेशे संयुक्तस्य पादेशे द्वित्वे पूर्वस्य ह्रस्वे च अप्पणा इति, णादेशाभावपक्षे टाप्रत्ययस्य डेणलादेशे णात्परं बिन्दुतदभावपक्षयोः अप्पेणं अप्पेण इति रूपाणीति भावः। एवमाणादेशपक्षे अप्पाणणा अप्पाणेणं अप्पाणेण इत्यपि रूपत्रयमत्र बोध्यम्॥

[2] **अप्पेहिं ३ इति॥** आणादेशपक्षे अप्पाणेहिं अप्पाणेहिँ अप्पाणेहि इत्यपि रूपत्रयं बोध्यम्॥

[3] **इत्यादीति॥** आत्मन्शब्दात्पञ्चम्येकवचने ङसौ तस्य णोशादेशेऽन्त्यहल्लोपादौ च अप्पाणो इति, आणादेशतदभावपक्षयोः ङसेः हिंतोत्तोदोदुहिश्लुगादेशेषु अप्पाणाहिंतो अप्पाणत्तो अप्पाणाओ अप्पाणाउ अप्पाणाहि अप्पाणा अप्पाहिंतो अप्पत्तो अप्पाओ अप्पाउ अप्पाहि अप्पा इति त्रयोदश रूपाणीति भावः। एवं पञ्चमीबहुवचने भ्यसि तस्य हिंतो-सुंतो-ह्यादेशपक्षेषु पूर्वस्य एत्वदीर्घपक्षयोः, तथाऽऽणादेशतदभावपक्षयोश्च अप्पाणेहिन्तो अप्पाणेसुंतो अप्पाणेहि अप्पाणाहिंतो अप्पाणासुंतो अप्पाणाहि अप्पेहिंतो अप्पेसुंतो अप्पेहि अप्पाहिंतो अप्पासुंतो अप्पाहि इति, तथा त्तोदोदुत्वादेशेषु आणादेशतदभावपक्षयोश्च अप्पाणत्तो अप्पाणाओ अप्पाणाउ अप्पत्तो अप्पाओ अप्पाउ इत्याहत्य अष्टादश रूपाणि बोध्यानीति भावः॥

[4] **ङसीति॥** आत्मन्शब्दात् षष्ठ्येकवचने ङसि तस्य णोशादेशपक्षे आणादेशाभावपक्षे च अप्पाणो इति, सरादेशपक्षे अप्पस्स इति, एवमाणादेशपक्षे ङसो णोशादेशसरादेशपक्षयोः अप्पाणाणो अप्पाणस्स इति चत्वारि रूपाणीति भावः।

[1] आमि—अप्पाणं। [2] अप्पम्मि। अप्पे। अप्पेसु, इति [3] दिक्। एवं युवन्शब्दादावूह्यम्। युवानस्संस्कृतेऽपीति केचित्? सुजन्मन्नित्यादौ राजवद्भावे अना युक्ते जकारे सत्यपि [4] इदादयोऽपि न सन्ति।

इति आत्मन्शब्दः

इति नकारान्तपुंलिङ्गविशेषशब्दाः

इति हलन्तपुंलिङ्गविशेषशब्दाः

---

[1] **आमीति** ॥ आत्मन्शब्दात् षष्ठीबहुवचने आमि आणादेशतदभावपक्षयोः आमश्च णशादेशे णात्परं बिन्दुतदभावपक्षयोश्च अप्पाणाणं अप्पाणाण अप्पाणं अप्पाण इति चत्वारि रूपाणीति भावः ॥

[2] **अप्पम्मीत्यादि** ॥ आत्मन्शब्दात् सप्तम्येकवचने ङौ तस्य ङेम्मिरादेशपक्षयोरन आणादेशतदभावपक्षयोश्च अप्पाणे अप्पाणम्मि अप्पे अप्पम्मि इति रूपचतुष्टयम्। तथा सप्तमीबहुवचने सुपि सकारात्परं बिन्दुतदभावपक्षयोरन आणादेशतदभावपक्षयोश्च अप्पाणेसुं अप्पाणेसु अप्पेसुं अप्पेसु इति रूपचतुष्टयमिति भावः ॥

[3] **दिगिति** ॥ तदर्थस्तु आत्मन्शब्दसंबन्धिनसंयुक्तस्य त्म-इत्यस्य 'वाऽऽत्मभास्मनि पः' (प्रा. सू. १-४-४२) इत्यनेन पादेशस्य विकल्पतया विधानात्तदभावपक्षे 'मनयाम्' (प्रा.सू. १-४-७९) इत्यनेन मकारस्य लुकि शेषस्य तकारस्य द्वित्वे पूर्वस्य ह्रस्वे अन्त्यहलो नकारस्य लोपे च अत्ता इति प्रकृतिरूपनिष्पत्त्या ततस्सर्वासु विभक्तिषु प्पशब्दस्थाने त्तशब्दघटितानि पूर्वोक्तानि सर्वाण्यधिकानि रूपाणि बोध्यानीति ॥

[4] **इदादयो न सन्तीति** ॥ 'णोणाङ्ङिष्विदना जः' (प्रा. सू. २-२-५६) इत्यादौ णोणाद्यव्यवहितपूर्वस्य अना अव्यवधानेन सहितस्य जस्येद्भवतीत्यर्थस्य तत्र विवक्षणात् सुजन्मन्शब्दे द्वितीयस्यानो णोणादिप्रत्ययव्यवहितपूर्वत्वेऽपि तस्य अव्यवधानेन जकारसाहित्यं नास्ति, मध्ये मकारेण व्यवधानात्, प्रथमस्याप्यनोऽव्यवधानेन जकारसाहित्येऽपि तस्य णोणादिप्रत्ययाव्यवहितपूर्वत्वं नास्तीति सुजन्मन्शब्दे राजवद्भावेनात्वादिप्रवृत्तावपि 'णोणा' (प्रा. सू. २-२-५६) इत्यादिनेदादयो न प्रवर्तन्त इति भावः ॥

इति आत्मन्शब्दः

इति नकारान्तपुंलिङ्गविशेषशब्दाः

इति हलन्तपुंलिङ्गविशेषशब्दाः

---

### अथ हलन्तस्त्रीलिङ्गविशेषशब्दाः

स्त्रीलिङ्गहलन्तानां [1]आल्विधानाद्गङ्गावत्। दृषत्—[2]दिसआ इत्यादि। विद्युत् [3] विज्जू। [4] धेनुवत् तरुवच्च।

इति हलन्तस्त्रीलिङ्गविशेषशब्दाः

---

## अथ हलन्तनपुंसकलिङ्गविशेषशब्दाः.

दामन्—दाम दामाइ इत्यादि, धनवत्। [5]पुंसीत्युक्तेर्नात्राणादेशराजवद्भावौ॥

इति हलन्तनपुंसकलिङ्गविशेषशब्दाः

---

[1] **आल्विधानादिति** ॥ 'अविद्युति स्त्रियामाल्' (प्रा. सू. १-१-२९) इत्यनेन स्त्रीलिङ्गानां हलन्तानामन्त्यहलो नित्यतया आकारादेशविधानात दृषदादीनां हलन्तस्त्रीलिङ्गानामाकारान्तगङ्गादिशब्दवद्रूपाणि बोध्यानीति भावः॥

[2] **दिसआ इत्यादीति** ॥ दृषच्छब्दात् प्रथमैकवचने सौ तकारस्य पूर्वोक्तरीत्या आत्वे कृपादित्वादृकारस्येत्वे 'शोस्सल्' (प्रा.सू. १-३-८७) इति षकारस्य सत्वे सोर्लुकि च दिसआ इत्यादि गङ्गावद्रूपमिति भावः॥

[3] **विज्जू इति**। विद्युच्छब्दस्य स्वतः स्त्रीलिङ्गतया तकारान्तत्वेऽपि 'अविद्युति स्त्रियामाल्' (प्रा. सू. १-१-२९) इत्यत्राविद्युतीति पर्युदासादात्वाप्रवृत्त्या 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यनेनान्त्यहलस्तकारस्य लोपे 'द्यय्यर्यां जः' (प्रा. सू. १-४-२४) इत्यनेन द्यस्य जत्वे तस्य द्वित्वे च सत्युकारान्तस्त्रीलिङ्गधेनुशब्दवत् विज्जू इति रूपमिति भावः। अस्यैव विद्युच्छब्दसम्बन्धिनस्तकारस्य 'लो वा विद्युत्पत्र' (प्रा. सू. २-१-२६) इत्यादिना लकारादेशपक्षे आकारान्तस्त्रीलिङ्गरमाशब्दवत् विज्जुलेत्यादिकमपि रूपं बोध्यम्॥

[4] **धेनुवत्तरुवच्चेति** ॥ विद्युच्छब्दस्य स्वतः स्त्रीलिङ्गतया धेनुशब्दवद्रूपम्, तथा 'अक्ष्यर्थकुलाद्या वा' (प्रा. सू. १-१-५१) इत्यत्र 'विद्युच्छन्दोभाजनमाहात्म्यं दुःखवचनशकलम्' इति गणसूत्रदर्शनेनास्य विद्युच्छब्दस्य कुलादिगणपठितत्वेन वैकल्पिकतया पुंस्त्वविधानात्पुंलिङ्गतरुशब्दवदपि रूपाणि बोध्यानीति भावः॥

इति हलन्तस्त्रीलिङ्गविशेषशब्दाः

---

### अथ हलन्तनपुंसकलिङ्गविशेषशब्दाः

[5] **पुंसीत्युक्तेरिति** ॥ दामन्शब्दस्य नान्तत्वेऽपि 'स्नमदाम' (प्रा. सू.

# अथ सर्वनामसंज्ञकविशेषशब्दाः

अथ सर्वनामशब्देषु सर्वादयो विशेषा उच्यन्ते—

[1] सव्वो।

## सर्वादेर्जसोऽतो डे ॥ २-२-६२ ॥

अदन्तात्सर्वादेः परस्य जस एत्वं डित् स्यात्। सव्वे। शसि सव्वा सव्वे इत्यादि।

## आमां डेसिम् ॥ २-२-६५ ॥

अतस्सर्वादेरामो डिदेसिं वा स्यात्। बहुवचनात् स्त्रियामपि। सव्वेसिं। पक्षे—सव्वाणं। ङौ—

## ङेस्त्थस्सिंसम्मि ॥ २-२-६३ ॥

अतसर्वादेः ङेः स्थाने त्थस्सिंसम्मि एते स्युः। त्रयोऽप्येते द्विरुक्ताः। सव्वत्थ सव्वस्सिं सव्वम्मि। अतः किम्? अमुम्मि।

## अनितमेतदस्तु किंयत्तदः स्त्रियां च हिं ॥ २-२-६४ ॥

इदमेतद्भिन्नाद्दतस्सर्वादेर्ङेस्थाने हिं वा स्यात्। किंयत्तद्भ्यश्च

---

१-१-४९) इत्यत्र अदामेति पर्युदासान्नपुंसकत्वात् अन्नन्तत्वेऽपि 'पुंस्याणो' (प्रा. सू. २-२-६०) इत्यत्र पुंसीत्युक्त्याऽत्र आणादेशो राजवद्भावश्च न प्रवर्तते। ततश्च अन्त्यहलो नकारस्य लोपे सत्यकारान्ततया नपुंसकलिङ्गधनशब्दवद्रूपाणि बोध्यानीति भावः॥

इति हलन्तनपुंसकलिङ्गविशेषशब्दाः

---

अथ सर्वनामसंज्ञकविशेषशब्दाः

[1] सव्वो इति॥ यद्यपि सर्वशब्देऽस्मिन् 'लवर.मधश्च' (प्रा. सू. १-४-७८) इत्यनेन वकाररेफयोर्लुग्विधानाद्वकारस्यापि लुकः प्राप्तिरस्ति, तथाऽपि सूत्रे वकारात्परं रेफग्रहणात् 'विप्रतिषेधे परं कार्यम्' (पा. सू. १-४-२) इति पाणिनीयप्रक्रियादरणेन रेफस्यैवात्र लुकः प्रवृत्त्या सव्वो इत्यादि रूपं बोध्यम्॥

[2] अतस्सर्वादेर्ङेस्थाने हिं वा स्यादिति॥ 'सर्वादेर्जसोऽतो डे' (प्रा. सू. २-२-६२) इत्यतोऽतस्सर्वादेरिति 'ङेस्त्थस्सिंसम्मि' (प्रा. सू. २-२-६३) इत्यतो ङेरिति चानुवर्तते। सूत्रास्थस्तुशब्दो विकल्पार्थे परिभाषितश्चेति भावः॥

[1] स्त्रियामपि हिं वा स्यात्। सव्वहिम्। पक्षे–सव्वत्थ इत्याद्येव। शेषं रामवत्। एवं विश्वादयः॥

इति सर्वशब्दः

---

यच्छब्दे–[2] जो जे। जं [3] जा जे। टा—

## इदमेतत्किंयत्तद्भ्यष्टो डिणा॥ २-२-७३॥

अदन्तेभ्य एभ्यः परस्य टावचनस्य डिदिणा [4] वा स्यात्। जिणा [5] जेण २।

[6] जेहिं ३॥

---

[1] स्त्रियामपीति॥ एतेन पूर्ववाक्येन अदन्तात्सर्वादेरिदमेतद्भिन्नात ङेस्थाने विहितो हिमादेशः स्त्रियां न भवतीति सिध्यतीति भावः॥

इति सर्वशब्दः

---

[2] जो जे इति॥ यच्छब्दात्सुजसोः यकारस्य 'आदेर्जः' (प्रा. सू. १-३-७४) इति जकारेऽन्त्यहलो दकारस्य लोपे सुजसोर्डे—इत्यादेशे टेरकारस्य लोपे च जो जे इति रूपमिति भावः॥

[3] जा जे इति॥ यच्छब्दाच्छसि तस्य 'शस्येत' (प्रा. सू. २-२-२०) 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इत्येत्वश्लुक्पक्षयोः जा जे इति रूपमिति भावः॥

[4] वा स्यादिति॥ 'ङो तदस्तु' (प्रा. सू. २-२-७२) इत्यतस्त्वित्यनुवर्तत इति भावः॥

[5] जेण २ इति॥ यच्छब्दात् टाप्रत्यये तत्स्थाने प्रकृतस्य डिणादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'टो डेणल्' (प्रा. सू. २-२-१८) इति टो डेणलादेशे जेण इति 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति णात्परं बिन्दुपक्षे च जेणमिति च रूपद्वयमिति भावः॥

[6] जेहिं ३ इति॥ यच्छब्दाद्भिसि तस्य 'हिं हिँ हि भिसः' (प्रा. सू. २-२-५) इति हिमाद्यादेशत्रये जेहिं जेहिँ जेहि इति रूपत्रयमिति भावः॥

## म्हा ङसेः ॥ २-२-७० ॥

अदन्तेभ्यः [1] किंयत्तद्भ्यो ङसेः म्हा [2] वा स्यात्। जम्हा। [3] पक्षे जाहिंतो जत्तो जाओ जाउ जा जाहि। [4] भ्यसि--जेहिंतो जेसुंतो इत्यादि।

## किंयत्तद्भ्यो [5] ङसः ॥ २-२-६७ ॥

[6] सश्वा स्यात्। [7] शित्त्वाद्दीर्घः। जास [8] जस्स। 'आमां डेसिं' (प्रा. सू. २-२-६५) जेसिं जाण जाणम् ॥

## ङेरिआ डाहे डाला काले ॥ २-२-६९ ॥

किंयत्तद्भ्यः परस्य ङेः इआ आदेशः स्यात्, डितौ आहे आला

---

[1] किंयत्तद्भ्य इति ॥ 'किंयत्तद्भ्यो ङसः' (प्रा. सू. २-२-६७) इति सूत्रादिदमनुवर्तत इति भावः ॥

[2] वा स्यादिति ॥ 'डो तदस्तु' (प्रा. सू. २-२-७२) इत्यतस्तुशब्दानुवृत्त्याऽयमर्थो लभ्यत इति भावः ॥

[3] पक्ष इत्यादि ॥ म्हादेशस्यास्य वैकल्पिकत्वात्तदभावपक्षे ङसेः हिंतो-त्तो-दो-दु-लुक् हि--इत्यादेशेषु जाहिंतो इत्यादिरूपषट्कमिति भावः ॥

[4] भ्यसीति ॥ 'सुंतो भ्यसः' (प्रा. सू. २-२-७) इति भ्यसः पाक्षिकस्सुंतो-इत्यादेशः 'भिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इति पाक्षिकं भ्यसः पूर्वस्यात एत्वं चेति भावः ॥

[5] ङस इति ॥ अत्र चन्द्रिकायां सूत्रे 'ङस्' इति पाठमभिप्रेत्य विभक्ति-व्यत्ययेन षष्ठीत्युक्तम् ॥

[6] सश्वेति ॥ 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इत्यतः 'तु' इति, 'किंतद्भ्यां सश्' (प्रा. सू. २-२-६६) इत्यतस्सशिति चानुवर्तत इति भावः ॥

[7] शित्त्वादिति ॥ 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति सूत्रबलादिति भावः ॥

[8] जस्स-इति ॥ सशादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) इत्यनेन ङसस्सरादेशे रित्त्वात्तस्य द्वित्वे यकारस्य जकारादेशे च जस्सेति रूपमिति भावः ॥

इत्येतौ वा स्तः [1]काले वाच्ये। यदा—जइआ जाहे जाला। [2]पक्षे देशादौ च जत्थ जस्सिं जहिं जम्मि। [3]जेसु जेसुम्॥

इति यच्छब्दः

---

तच्छब्दे—

**तस्सौ सोऽक्लीबे तदश्च ॥ २-२-८९ ॥**

[4]एतत्तदोस्तकारस्य सः स्यात्सौ न क्लीबे।

**[5]वैतत्तदः ॥ २-२-१४ ॥**

---

[1] **काले वाच्य इति॥** अधिकरणे सप्तम्यनुशासनेन यदा सप्तम्या काल-रूपमधिकरणं विवक्ष्यते तदा सप्तम्याः 'इअ' इत्याद्यादेशत्रयं विकल्पेन भवतीति भावः॥

[2] **पक्षे देशादौ चेत्यादि॥** सूत्रेऽस्मिन् 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इति सूत्रात्तुशब्दानुवृत्त्या प्रकृतादेशत्रयस्य वैकल्पिकत्वबोधनेन एतदादेशत्रि-तयाभावपक्षे, सप्तम्या देशरूपाधिकरणस्य विवक्षायां च सप्तम्येकवचनस्य 'ङेस्त्थ-स्सिंम्मि' (प्रा. सू २-२-६३) इत्यादेशत्रये 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इत्यादिना हिमादेशे च 'जत्थ' इत्यादिरूपचतुष्टयमिति भावः॥

[3] **जेसु जेसुमिति॥** यच्छब्दात्सप्तमीबहुवचने सुपि 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इति यच्छब्दसंबन्धिनो दकारस्य लोपे 'भिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इत्यत एत्वे यकारस्य जकारादेशे च जेसु इति, तत्रैव सुकारात्परं 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४२) इति बिन्दुपक्षे जेसुमिति च रूपमिति भावः॥

इति यच्छब्दः

---

[4] **एतदिति॥** 'एत्तो एत्ताहे ङसिनैतदः' (प्रा. सू. २-२-८४) इत्यत एतद् इत्यस्यानुवृत्त्या अयमर्थो लभ्यत इति भावः॥

[5] **वैतत्तद इति॥** इदं सूत्रं चन्द्रिकायामनुपात्तमव्याख्यातं च॥

[1] अदन्ताभ्यां [2] परस्य सोर्डो वा स्यात्।
[3] पक्षे-सोर्लुक्, [4] सो स। जसि। [5] ते। तं।

## क्वचित्सुपि तदो णः ॥ २-२-७४ ॥

तदो [6] यथाप्रयोगं सुपि णो वा स्यात्। णं। शसि-ता ते। [7] टो डिणा, तिणा तेण णेण। [8] तेहिं। 'म्हा ङसेः' (प्रा. सू. २-२-७०) तम्हा।

---

[1] अदन्ताभ्यामिति ॥ 'अतो डो विसर्गः' (प्रा. सू. २-२-१२) इत्यतोऽत इत्यनुवृत्त्याऽयमर्थो लभ्यत इति भावः। अत एवानयोः स्त्रीलिङ्गे आकारान्तत्वा-ड्डोत्वस्याप्रवृत्तिः ॥

[2] परस्येति। एतत्तद्भ्यामित्यादिः।

[3] पक्ष इति ॥ डोत्वस्यास्य वैकल्पिकत्वात्तदभावपक्ष इत्यर्थः ॥

[4] सो स इति ॥ तच्छब्दे 'अन्त्यहलोऽश्रदुदि' (प्रा. सू. १-१-२५) इत्यन्त्यस्य दकारस्य लोपे ततस्सोः प्रकृतसूत्रेण डोत्वपक्षे डित्त्वाट्टेरकारस्य लोपे 'तस्सौ सोऽक्लीबे तदश्च' (प्रा. सू. २-२-८८) इत्यनेन तकारस्य सत्वे सो इति, डोत्वाभावपक्षे अन्त्यहलो दकारस्य लोपे 'सोर्लुक्' (प्रा. सू. २-२-९) इति सोर्लुकि स इति च रूपद्वयमिति भावः ॥

[5] ते इति ॥ 'सर्वादेर्जसोऽतो डे' (प्रा. सू. २-१-६२) इत्यनेन जसो डेत्वमिति भावः ॥

[6] यथाप्रयोगमिति ॥ सूत्रस्थक्वचित्पदार्थप्रदर्शनपरमिदम्। अत एव सौ णादेशस्यास्याप्रवृत्तिरिति भावः ॥

[7] टो डिणेत्यादि ॥ तच्छब्दाट्टाप्रत्यये 'इदमेतत्किंयत्तद्भ्यष्टो डिणा' (प्रा. सू. २-२-७३) इत्यनेन टाप्रत्ययस्य डिणादेशे डित्त्वाट्टिलोपे तिणेति रूपम्। डिणादेशस्य वैकल्पिकत्वात्तदभावपक्षे तदो णादेशपक्षे 'णेण' इति, णादेशस्यापि वैकल्पिकत्वात्तदभावपक्षे 'तेण' इति च टायां रूपत्रयमिति भावः ॥

[8] तेहिमिति ॥ 'हिं हिँ हि भिसः' (प्रा. सू. २-२-५) इति भिसो हिं हि इत्यादेशयोरपि विधानात् भिसि तेहिँ तेहि इति, त्रिविक्रमवृत्तौ भिस्यपि तदो णादेशस्याभिमतत्वात् णेहिमितीत्यन्यदपि रूपत्रयं बोध्यम् ॥

[1] पक्षे—ताहिंतो तत्तो ताओ ताउ ता ताहि।

डो तदस्तु ॥ २-२-८२ ॥

तदो ङसेः डिदोत्वं [2] तु स्यात्।

तो। 'तस्मात्ता' (प्रा. सू. ३-२-१३) [3] इत्यव्ययपाठात्ता इत्यप्यस्ति, नव। तेसुंतो तेहिंतो ताहिंतो तासुंतो तेहि ताहि तत्तो ताओ ताउ।
[4] ङसस्सश तास तस्स।

तदिदमेतदां से सिं तु ङसाऽऽमा ॥ २ २-८४ ॥

एषां तु [5] ङसा सह से स्यात्, आमा सह सिं स्यात्। से।

किंतद्भ्यां सश ॥ २-२-६६ ॥

[1] पक्षे ताहिंतो इत्यादि ॥ 'म्हा ङसेः' (प्रा. सू. २-२-७०) इत्यनेन विहितस्य म्हादेशस्य वैकल्पिकत्वात्तदभावपक्षे ङसेः हिन्तो-त्तो-दो-दु-श्लुक्-ह्यादेशेषु ताहिन्तो तत्तो ताओ ताउ ता ताहि इति षड्रूपाणीति भावः ॥

[2] तु स्यादिति ॥ विकल्पेन स्यादित्यर्थः ॥

[3] इत्यव्ययपाठादिति ॥ शौरसेन्यां 'तस्मात्ता' (प्रा. सू. ३-२-१३) इत्यनेन तस्मादित्यर्थे ता इत्यव्ययस्य निपातनेन ता इति अव्ययरूपमेकं बोध्यमिति भावः। ततश्च तच्छब्दात् ङसेः श्लुकि निपातने च ता इत्यानुपूर्व्या ऐक्येऽपि अव्ययत्वानव्ययत्वभेदेन भेद इति वक्ष्यमाणनवत्वसङ्ख्याया उपपत्तिरिति बोध्यम् ॥

[4] ङसस्सशित्यादि ॥ 'किंयत्तद्भ्यो ङसः' (प्रा. सू. २-२-६७) इत्यनेन तच्छब्दात्परस्य ङसस्सशादेशपक्षे अन्त्यहलोपानन्तरं तस्य शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे तास इति, सशो वैकल्पिकत्वात्तदभावपक्षे वक्ष्यमाणस्य शे-इत्यादेशस्याभावपक्षे च 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) इत्यनेन सरादेशे तस्य रित्वात् 'रितो द्वित्वम्' (प्रा. सू. १-४-८५) इति तस्य द्वित्वे तस्स इति रूपमिति भावः ॥

[5] ङसा सह से स्यात्, आमा सह सिं स्यादिति ॥ यथासङ्ख्यपरिभाषालब्धमेतत्। ततश्च तच्छब्दात् ङसि तास तस्स से इति रूपत्रयमिति भावः ॥

[1] आमो वा स्यात्। शित्त्वाद्दीर्घः। [2] तास तेसिं सिं ताणं। [3] काले तदा—तइआ ताहे ताला। पक्षे देशादौ—तत्थ तस्सिं तम्मि तहिं। [4] तेसु तेसुं, [5] तेषु॥

इति पुंलिङ्गस्तच्छब्दः

---

एतच्छब्दे—

'तस्सौ सोऽक्लीबे तदश्च' (प्रा. सू. २-२-८९) 'वैतत्तदः' (प्रा. सू. २-२-१४) एसो।

---

[1] आमो वेति॥ 'आमां डेसिं' (प्रा. सू. २-२-६५) इत्यत आमामिति 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इत्यतो वार्थकस्तुशब्दश्चानुवर्तेत इति भावः॥

[2] तासेत्यादि॥ तच्छब्दात् आम्प्रत्यये तदोऽन्त्यहलो दकारस्य लोपे प्रकृतसूत्रेण आमस्सशादेशपक्षे तस्य शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे तास इति, सशादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'आमां डेसिं' (प्रा. सू. २-२-६५) इति आमो डेसिमादेशे टिलोपे तेसिं इति, डेसिमो वैकल्पिकत्वात्तदभावपक्षे 'तदिदमेतदां' (प्रा. सू. २-२-८४) इत्यादिना आम्विशिष्टस्य तदः सिं-इत्यादेशे सिं इति, सिमादेशस्यापि वैकल्पिकत्वात्तदभावपक्षे 'णशामः' (प्रा. सू. २-२-४) इत्यामो णशादेशे तस्य शित्त्वात्पूर्वस्य दीर्घे च ताणं इतीत्याहत्य रूपचतुष्टयमिति भावः॥

[3] काल इत्यादि॥ तच्छब्दात् ङिप्रत्यये सप्तम्या कालरूपमधिकरणं यदा विवक्ष्यते तदा 'ङेरिआडाहेडाला काले' (प्रा. सू. २-२-६९) इत्यनेन ङेः इआ डाहे डाला इत्यादेशेषु तथा 'अनिदमेतदः' (प्रा. सू. २-२-६४) इत्यादिना ङेर्हिमादेशे च तइआ ताहे ताला तहिं इति रूपचतुष्टयम्। सप्तम्या देशरूपमधिकरणं यदा विवक्षितं तदा 'ङेस्त्थस्सिंम्मि' (प्रा. सू. २-२-६३) इति ङेः त्थ-स्सिं-म्मि-इत्यादेशत्रये तत्थ तस्सिं तम्मि इति रूपत्रयं बोध्यमिति भावः॥

[4] तेसु तेसुमिति॥ 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति सुकारात्परं बिन्दुतदभावपक्षयोरिदं रूपद्वयमिति भावः॥

[5] तेष्विति॥ संस्कृतरूपप्रदर्शनाभिप्रायकमेतत्कथनमिति भाति॥

इति पुंलिङ्गस्तच्छब्दः.

---

## [1] सुनैस इणमो इणं ॥ २-२-८८ ॥

एतदस्सुना सह एते त्रयः स्युः। एस इणमो इणं। एअं। एआ एए। 'टो डिणा' एइणा। एएहिं।

## एत्तोएत्ताहे ङसिनैतदः ॥ २-२-८५ ॥

स्पष्टम्। [2] एत्तो एत्ताहे। [3] पक्षे एआहिंतो एअत्तो एआओ एआउ एआ एआहि। भ्यसि एआसुंतो एएसुंतो [4] इत्यादि। 'तदिद-मेतदां सेसिं तु ङसाऽऽमा' (प्रा. सू. २-२-८४) से एअस्स। आमि एएसा एआण एआणं। तदेतदोरामा सह से आदेशं केचिदिच्छन्ति, से। ङौ--

## [5] त्थे एल् ॥ २-२-८६ ॥

एतद एत्वं लित्स्यात् द्विरुक्ते थकारे परे। एएत्थ

---

[1] सुनैस इति ॥ यद्यप्यनेन सूत्रेण एसादेशविधानाभावेऽपि एतच्छब्दात् सौ डोत्वस्य वैकल्पिकत्वात्तदभावपक्षे मोर्लुकि तकारस्य सकारादेशे च एस इति रूपं सिध्यति, तथाऽपि स्त्रीलिङ्गे टापः प्रवृत्त्या ह्रस्वाकारान्तमिदं रूपं तत्र न स्यादिति तत्रापि ह्रस्वान्तरूपस्यापि सिद्ध्यर्थमत्र एसादेशविधानं सार्थकमिति बोध्यम्। अत्र सूत्रे 'एत्तो एत्ताहे ङसिनैतदः' (प्रा. सू. २-२-८५) इत्यत एतद इत्यस्यानुवृत्ति-र्बोध्या ॥

[2] एत्तो एत्ताहे इति ॥ एतच्छब्दस्य षष्ठ्येकवचनान्तस्य प्रकृतिप्रत्यय-विशिष्टस्य इदमादेशद्वयमिति भावः ॥

[3] पक्ष इति ॥ एत्तो-एत्ताहे-इत्यादेशद्वयस्यापि वैकल्पिकत्वादेतदुभयाभावपक्षे ङसेः हिन्तो-त्तो-दो-दु-लुक्-ह्यादेशानां प्रवृत्त्या एआहिंतो इत्यादीनि षड्रूपाणीति भावः॥

[4] इत्यादीति ॥ भ्यसो हिंतोह्यादेशपक्षे एत्वतदभावपक्षयोः एएहिन्तो ए-आहिन्तो एएहि एआहि इति, त्तो-दो-दु-इत्यादेशेषु एअत्तो एआओ एआउ इति च रूपाणीति भावः ॥

[5] त्थे एलिति ॥ अत्रास्यां वृत्तौ आदेशस्य ङित्त्वानुक्त्या एएत्थ इत्युदाहरणाच्च एतद्वृत्तिकृद्रीत्या 'त्थे एल्' इति सूत्रपाठः स्यादिति गम्यते। एतन्मते एत्थ इति रूपं कथं स्यादिति विमर्शनीयम्। त्रिविक्रमलक्ष्मीधरौ तु 'त्थे डेल्' इति सूत्रपाठं मन्वाते।

[1] एअस्सिं ।

**एतो म्मावादितौ वा ॥ २-२-८७ ॥**

[2] एतद एकारस्य अदितौ वा स्तः म्मौ परे । [3] अअम्मि इअम्मि एअम्मि । एएसु [4] एएसुं ॥

इति पुंलिङ्ग एतच्छब्दः

---

इदंशब्दे—

**इदम इमः ॥ २-२-७६ ॥**

इदमः सुपि इमः स्यात् । इमो ।

**पुंसि सुना त्वयं स्त्रियामिमिआ ॥ २-२-७७ ॥**

स्पष्टम् । अयं । जसि-इमे ॥

**इहेणं ङ्यमा ॥ २-२-८० ॥**

---

एतदः स्थाने रानुबन्धे थकारे परत एत्वं लिङ्गवति, स च ङिद्भवतीत्युक्त्या एतदोऽन्त्यस्य हलो लोपानन्तरमकारस्य अनेन सूत्रेण एत्वे तस्य ङित्वात् ततः पूर्वस्य टिभूतस्य एत् इत्यस्य लोपे एत्थ इति रूपमिति भाति । रानुबन्ध इत्युक्त्या 'रितो द्वित्वल्' (प्रा. सू. १-४-८५) इति सूत्रेण ङेस्थानिकस्य थस्य द्वित्वमित्याशयो ज्ञायते । एतन्मते डेल् इत्यत्र आदिभूतस्य डकारस्य प्रत्ययादित्वाभावात् कथं तस्य इत्संज्ञा स्यादिति चेद्बहुलग्रहणात्साधनीयमित्यशयात्स्यादिति । तस्मात्त्रिविक्रमलक्ष्मीधरौ एएत्थ इति रूपं नानुमन्वाते इति प्रतिभाति । तदिदं सर्वं यथाप्रयोगदर्शनं परिचिन्तनीयम् ॥

[1] एअस्सिमिति ॥ एतदो ङौ 'ङेत्थस्सिंम्मि' (प्रा. सू. २-२-६३) इति ङेः स्सिं-इत्यादेशे 'प्रायो लुक्कगचजतद' (प्रा. सू १-३-८) इत्यादिना तलोपे च एअस्सिं इति रूपम् ॥

[2] एतद इति ॥ 'एत्तो एत्ताहे' (प्रा. सू. २-२-८४) इत्यत एतद इत्यस्यानुवृत्तिरत्र बोध्या ॥

[3] अअम्मि इत्यादि ॥ एतदो ङौ तस्य म्मि-इत्यादेशे प्रकृतसूत्रेण एकारस्य अत्वेत्वपक्षयोः अअम्मि इअम्मि इति, अत्वेत्वयोरुभयोर्वैकल्पिकत्वात्तदुभयाभावपक्षे एअम्मि इति रूपमिति बोध्यम् ॥

[4] एएसुं इति ॥ 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इत्यनेनात्र सुपस्सकारादनन्तरं बिन्दुपक्ष इदं रूपं बोध्यम् ॥

इति पुंलिङ्ग एतच्छब्दः

---

इदमो ङिना सहितस्य इह, अमा सहितस्य इणं वा स्तः। इणं [1] इमं॥

## टाससि णः॥ २--२--७९॥

इदमो णस्तु स्या[2]द्वितीयातृतीययोः। णं। [3] शसि-इमा इमे णा णे। टा-[4]णेण इमेण 'टो डिणा, णिणा इमिणा। [5] भिसि-इमेहिं इमेहिँ इमेहि णेहिं ३॥

## अत्सुस्सिंसाहिस्से॥ २--२--७८॥

इदम अत्वं वा स्यात् सुप् ङि भिस् ङस् इत्येतेषामा[6]देशेषु सु-[7]स्सिं-

---

[1] इममिति॥ इदंशब्दात् अमि इणादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'इदम इमः' (प्रा. सू. २-२-७६) इति इमादेशे इममिति रूपं बोध्यम्॥

[2] द्वितीयातृतीययोरिति॥ सूत्रे टास् इति 'टाभ्यां भिस्' (पा. सू. ४-१-२) इत्यत्र टा-इत्यस्य भिसस्सकारेण प्रत्याहारेण द्वितीयाविभक्तेर्ग्रहणम्, तथा अम् इति अमूऔट्शस्' (पा. सू. ४-१-२) इत्यत्र अमित्यत्रत्याकारस्य शसितिसकारेण प्रत्याहारे सति तृतीयाविभक्तेर्ग्रहणं भवतीति बोध्यम्॥

[3] शसीत्यादि॥ इदंशब्दात् शसि 'इदम इमः' (प्रा. सू. २-२-७६) इति इदंशब्दस्य इमादेशे शसः 'लुग्जश्शसोः' (प्रा. सू. २-२-३) इति लुकि तत्पूर्वस्य 'शस्येत्' (प्रा. सू. २-२-२०) इत्येत्वे इमे इति, एत्वाभावपक्षे शसः लुकि तत्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे इमा इति, एवमिदमो णादेशपक्षे णे णा इति च रूपाणि बोध्यानि॥

[4] णेण-इत्यादि॥ इदमस्तृतीयैकवचने इदम इमादेशणादेशयोः टाया डिणा-डेणलादेशयोश्च इमिणा डिणा इमेण णेण इति चत्वारि रूपाणि॥

[5] भिसीति॥ इदमो भिसि इदम इमादेशणादेशयोः भिसो हिं हिँ हि इत्यादेशेषु च इमेहिं इमेहिँ इमेहि णेहिं णेहिँ णेहि इति षड्रूपाणीति भावः॥

[6] आदेशेष्विति॥ यथासम्भवाभिप्रायमिदम्। अतः सुप आदेशाभावेऽप्य-दोषः। तथा स्थानिनो भ्यमोऽग्रहणेऽपि न क्षतिः। ततश्च सूत्रे हिपदेन भिस्ङसिभ्य-सामादेशभूतस्य ग्रहणम्। अत एवोत्तरत्र ङसिभ्यसोः आहीत्युदाहरिष्यते च॥

[7] स्सिंसहिस्सेति॥ 'ङेस्सिंम्मित्थाः' (प्रा. सू. २-२-६३) इत्यनेन ङेः स्थाने विहितः स्सिं इति, 'हिंहिँहि भिसः' (प्रा. सू. २-२-५) इति 'ङसिसो हि'

हि-स्स-इत्येतेषु परेषु ।

वा—अदिदमः[1] सर्वादेशो वाच्यः ।

[2]एत्वं, एहि । [3]ङसौ—इमाहिंतो इमत्तो इमाओ इमाउ इमा इमाहि । अत्रापि हिपरत्वादत्वे दीर्घे च आहि । भ्यसि—इमासुंतो इमेसुंतो इमाहि इमेहि एहि आहि इमत्तो इमाओ इमाउ इमाहिंतो इमेहिंतो । [4]ङसि—से अस्स इमस्स । [5]आमि—इमाण इमाणं । सिं इमेसिं । ङौ—

न त्थः ॥ २-२-८१ ॥

इदमः त्थो न स्यात् । [6]इमस्सि आस्सि इमम्मि इह ।

---

(प्रा. सू. २-२-१७) इति च भिस्स्थानिको ङसिभ्यस्स्थानिकश्च हि इति 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) इति ङस्स्थानिकः स्स इति चैते आदेशा बोध्याः ॥

[1]सर्वादेश इत्यादि ॥ 'अलोऽन्त्यस्य' (पा. सू. १-१-५२) इत्यनेन अन्त्यस्य स्यादिति तद्वारणार्थमेतदारम्भ इति बोध्यम् ॥

[2]एत्वमिति ॥ 'भिस्भ्यस्सुपि' (प्रा. सू. २-२-२१) इत्यनेनेति भावः ॥

[3]ङसीत्यादि ॥ इदंशब्दात् पञ्चम्येकवचने ङसौ 'हिंतोत्तोदोदु ङसिस्' (प्रा. सू. २-२-६) ङसेः लुक् (प्रा. सू. २-२-१५) 'ङसिसो हि' (प्रा. सू. २-२-१७) इत्येभिर्विहितेषु हिंतो—इत्याद्यादेशेषु इमाहिंतो इमत्तो इमाओ इमाउ इमा इमाहि इति, प्रकृतसूत्रे हिपदनाविशेषात् ङस्यादेशस्यापि ग्रहणेन इदमोऽदादेशे दीर्घे च आहि इति च रूपाणीति भावः । भ्यसि तु सुंतो—इत्यादेशोऽधिकः, एत्वं च तत्र वैकल्पिकमिति विशेषो बोध्यः ॥

[4]ङसीति ॥ इदमो ङसि ङस्सहितस्य 'तदिदमेतदां' (प्रा. सू. २-२-८४) इत्यादिना से आदेशे से इति, 'अत्सुस्सिंहिस्से' (प्रा. सू. २-२-७८) इतीदमोऽदादेशे ङसस्सरादेशे च तस्य रित्त्वाद्वित्वे अस्स इति, 'इदम इमः' (प्रा. सू २-२-७६) इतीमादेशपक्षे च इमस्स इति च रूपाणीति बोध्यम् ॥

[5]आमीति ॥ इदम आमि इदम इमादेशे आमो णशादेशे णकारात्परं बिन्दुतदभावपक्षयोश्च इमाण इमाणं इति, आमो डेसिमादेशपक्षे च इमेसिं इति, आमन्तस्य सिमादेशपक्षे च सिं इति च रूपाणीति भावः ॥

[6]इमस्सिमित्यादि ॥ इदमो ङौ ङेः स्सिमादेशम्म्यादेशपक्षयोः इदमश्च इमादेशादादेशपक्षयोश्च इमस्सिं अस्सिं इमम्मि इति, ङ्यन्तस्य 'इहेणं ङ्यमा' (प्रा. सू. २-२-८०) इति इहादेशपक्षे इह इति च रूपाणीति भावः ॥

[1] इमेसु इमेसुं। अत्वे एत्वे च एसु एसुं ॥

इति पुंलिङ्ग इदंशब्दः.

---

अदश्शब्दे—

**सुप्यदसोऽमुः ॥ २-२-९० ॥**

स्पष्टम्। [2] अमू ॥

**अहद्वा सुना ॥ २-२-९१ ॥**

अदसः सुना सह अहत्स्यात्। [3] तकारः स्त्रियामात्वं निवर्तयति। अह। [4] आमि अमेसिं। ङौ—

**[5] इआऔ म्मौ ॥ २-२ ९२ ॥**

---

[1] इमेस्वित्यादि ॥ इदंशब्दात्सुपि इदम इमादेशे सुपः पूर्वस्यैत्वे सुकारात्परं बिन्दुतदभावपक्षयोः इमेसु इमेसुं इति, इदमोऽदादेशपक्षे च पूर्ववदेत्वे बिन्दुतदभावपक्षयोश्च एसु एसुं इति च रूपमिति भावः ॥

इति पुंलिङ्ग इदंशब्दः

---

[2] अमू इति ॥ अदश्शब्दात्सौ प्रकृतसूत्रेणादश्शब्दस्य अमु-इत्यादेशे 'लुगनपि सोः' (प्रा. सू. २-२-२९) इत्यनेन सोः लुकि शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे अमू इति रूपमिति भावः। अदश्शब्दस्य अमु इत्यादेशानन्तरमुकारान्तत्वात् सुङिभिन्नप्रत्ययेपु सर्वत्र उकारान्ततरुशब्दवदेव रूपाणि बोध्यानि ॥

[3] तकार इत्यादि ॥ 'अहद्वा सुना' इत्यस्मिन् प्रकृतसूत्रे अहत् इत्यत्रत्यस्ताकारो न श्रवणार्थः, अपि तु तस्य 'हलन्त्यम्' (पा. सू. १-३-३) इत्यनेनेत्संज्ञार्थ एव। तत्फलं तु 'तपरस्तत्कालस्य' (पा. सू. १-१-७०) इत्यस्य प्रवृत्त्या समुदायान्तकृतोऽपि स ह्रस्वमात्रस्य श्रधणार्थः। तेन अदश्शब्दस्य स्त्रियामपि टापो न प्रवृत्तिरिति भावः। ततश्चादश्शब्दस्य सौ अह इति उकारान्तेभ्यो विलक्षणमेकं रूपमधिकमिति भावः ॥

[4] आमि अमेसिमिति ॥ अदसोऽम्वादेशानन्तरमुकारान्ततया 'आमां डेसिं' (प्रा. सू. २-२-६५) इत्यत्र अत इत्यनुवृत्त्या कथमत्र डेसिमादेश इति विमर्शनीयम्। अत एव चन्द्रिकादौ अमेसिं इति रूपं नोदाहृतं दृश्यते ॥

[5] इआऔ-इति ॥ इश्च अश्च इआऔ इति विग्रहोऽत्र बोध्यः। प्राकृते पदमध्ये सन्धेरभावादेवं प्रयोगः ॥

अदसो ङिवचनादेशे म्मौ परे इअ अअ इति वा स्तः । [1]इअम्मि अअम्मि । पक्षे--अमुम्मि । शेषं तरुवत् ॥

इति पुंलिङ्गोऽदश्शब्दः.

---

किंशब्दे--

## त्रे तसि च किमो त्कः ॥ २-२-७५ ॥

किमः कस्स्यात्त्रे तसि च [2]सुपि परे । [3]लित्त्वान्नित्यम् । को । के । कं । के का । [4]टो डिणा -- किणा केण केणम् । [5]केहिं ३ । 'म्हा ङसेः' (प्रा. सू. २-२-७०) [6]कम्हा ॥

## किमो डीसडिणो ॥ २-२-७१ ॥

---

[1]इअम्मि अअम्मीति ॥ नन्वत्रादस इअ --इत्यादेशानन्तरमकारान्ततया म्मि-- इत्यादेशस्य ङिस्थानिकतया स्थानिवद्भावेन तस्य ङित्वाच्च 'ङेस्स्थस्सिंम्मि' (प्रा. सू. २-२-६३) इत्यनेन त्थादय आदेशाः कुतो न भवन्तीति चेत्, म्मिसन्निपातेन जातः इआद्यादेशविधिः त्थाद्यादेशप्रवर्तनेन स्वस्यादेशस्य च विद्यमानो यस्सन्निपातः तद्विघातको न भवतीति 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति पाणिनिशास्त्र-सम्मतपरिभाषाविरोधादित्याशयस्स्यादिति ॥

इति पुंलिङ्गोऽदश्शब्दः

---

[2]सुपि परे इति ॥ सूत्रेऽस्मिन् चकारेण 'क्वचित्सुपि तदो णः' (प्रा. सू. २-२-७३) इति पूर्वसूत्रस्थस्य सुपीत्यस्यानुवृत्तिस्सूच्यत इति भावः ॥

[3]लित्त्वादिति ॥ 'प्रायो लिति न विकल्पः' (प्रा. सू. १-१-१४) इत्यस्मिन् शास्त्रे लिता नित्यत्वस्य बोधनादिति भावः ॥

[4]टो डिणेति ॥ किंशब्दात् तृतीयैकवचने टाप्रत्यये तस्य 'इदमेतत्किंयत्त-द्भ्यष्टो डिणा' (प्रा. सू. २-२-७२) इत्यनेन डिणादेशे तस्य डित्त्वाट्टिलोपे च किणा इति, डिणादेशस्य वैकल्पिकत्वात्तदभावपक्षे रामशब्दवत् केण केणं इति च रूपाणीति भावः ॥

[5]केहिं ३ इति ॥ किमो भिसि किमः कादेशे भिसश्च 'हिं हिँ हि भिसः' (प्रा. सू. २-२-५) इत्यादेशत्रये रामशब्दवत् केहिं केहिँ केहि इति त्रीणि रूपाणीति भावः ॥

[6]कम्हा इति ॥ किंशब्दात्पञ्चम्येकवचने ङसिप्रत्यये किमः कादेशे ङसेः 'म्हा ङसेः' (प्रा. सू. २-२-७०) इति म्हादेशे च कम्हा इति रूपमिति भावः ॥

ङसे[1]र्वा स्तः । ङित्त्वाट्टिलोपः । कीस किणो । 'किणो प्रश्ने' (प्रा. सू. २-१-३७) इत्यव्ययपाठात्प्रश्नार्थेऽप्ययम् । [2]पक्षे—काहिंतो कत्तो काओ काउ का काहि । [3]भ्यसि—काहिंतो केहिंतो कासुंतो केसुंतो कत्तो काओ काउ काहि केहि । 'किं यत्तद्भ्यो ङसः' (प्रा. सू. २-२-६७) इति सश्, [4]कास कस्स । '[5]किंतद्भ्यां सश्' (प्रा. सू. २-२-६६) कास केसिं काण काणं । '[6]ङेरिआडाहेडाला काले' (प्रा. सू. २-२-६९) कदा —कइअ काहे काला । [7]पक्षे देशादौ च—कत्थ कस्सिं कम्मि कहिं ।

---

[1] वा स्त इति ॥ 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इत्यतोऽत्र वार्थकस्तुशब्दोऽनुवर्तत इति भावः ॥

[2] पक्ष इत्यादि ॥ किमो ङसेः म्हाडीसडिणादेशानां त्रयाणामपि वैकल्पिकत्वादेतत्त्रितयाभावपक्षे रामशब्दवत् ङसेः हिंतो-त्तो-दो-दु-लुक्-ह्यादेशानां प्रवृत्त्या काहिंतो कत्तो काओ काउ का काहि इत्यपि षड्रूपाणि बोध्यानीति भावः ॥

[3] भ्यसीति ॥ किमः कादेशे सत्यदन्तत्वात् भ्यसि रामशब्दवदेव काहिंतो इत्यादिनवरूपाणीति भावः ॥

[4] कास कस्सेति ॥ किंशब्दात् ङसि किमः कादेशे 'किंयत्तद्भ्यो ङसः' (प्रा, सू. २-२-६७) इति ङसस्सशादेशे तस्य शित्त्वात्पूर्वस्य दीर्घे च कास इति, सशादेशस्यास्य वैकल्पिकतया तदभावपक्षे 'ङसोऽस्त्रियां सर्' (प्रा. सू. २-२-१०) इति ङसस्सरादेशे तस्य रित्त्वाद्द्वित्वे च कस्स इति च रूपमिति भावः ॥

[5] किंतद्भ्यामित्यादि ॥ किंशब्दादामि 'किंतद्भ्यां सश्' (प्रा. सू. २-२-६६) इत्यनेन आमस्सशादेशे तस्य शित्त्वात्तत्पूर्वस्य दीर्घे च कास इति, सशो विकल्पतया तदभावपक्षे 'आमां डेसिं' (प्रा. सू. २-२-६५) इति डेसिमादेशे केसिं इति, डेसिमोऽपि वैकल्पिकतया तदभावपक्षे 'णशामः' (प्रा. सू. २-२-४) इत्यनेन णशादेशे तस्य शित्त्वात्तत्पूर्वस्य दीर्घे णात्परं बिन्दुतदभावपक्षयोः काण काणं इति च रूपाणीति भावः ॥

[6] ङेरिआ-इत्यादि ॥ किंशब्दात् ङौ सप्तम्या कालरूपाधिकरणविवक्षायां 'ङेरिआडाहेडाला काले' (प्रा. सू. २-२-६९) इत्यनेन ङेः इआ-डाहे-डाला इत्यादेशत्रये कइआ काहे काला इति रूपाणीति भावः ॥

[7] पक्षे देशादौ चेत्यादि ॥ ङेरिआद्यादेशत्रयस्य वैकल्पिकत्वात्तदभावपक्षे सप्तम्या देशरूपाधिकरणविवक्षायां च 'ङेस्थर्स्सिम्मि' (प्रा. सू. २-२-६३) इति

[1] केसु केसुं ॥

इति पुंलिङ्गः किंशब्दः.

---

युष्मच्छब्दे—

युष्मत्सुना तुवंतुंतुमंतुहम् ॥ २-३-१ ॥

[2] स्पष्टम् । त्वं—तुवं तुं तुमं तुहं ।
वा—स्वम्भ्यां सह युष्मदस्तं वाच्यः ।
तं, [3] पञ्च ।

जसा हेतुब्भेतुय्हेउय्हेतुब्भ ॥ २-३-२ ॥

युष्मज्जसा सह एवं स्यात् । हे तुब्भे तुय्हे उय्हे तुब्भ ।

---

' अनिदमेतदः किंयत्तदः स्त्रियां च हिं ' (प्रा. सू. २-२-६४) इत्यनेन च ङेः त्थ-स्सिं-म्मि-हिं-इत्यादेशचतुष्टये कत्थ कस्सिं कम्मि कहिं इति चत्वारि रूपाणीति भावः ॥

[1] केसु केसुमिति ॥ किंशब्दात् सुपि किमः कादेशे रामशब्दवत् केसु केसुमिति रूपद्वयमिति भावः ॥

इति पुंलिङ्गः किंशब्दः

---

[2] स्पष्टमिति ॥ सूत्रे युष्मदिति लुप्तषष्ठीकं पदम् । अत एव ' वा ब्भो म्हज्झौ ' (प्रा. सू. २-३-१४) इति सूत्रे युष्मत्पदानुवृत्त्या युष्मदवयवस्येत्यर्थो लभ्यते । ततश्च सुप्रत्ययेन सहितस्य युष्मच्छब्दस्य तुवादयश्चत्वार आदेशाः स्युरिति स्पष्टार्थकं सूत्रमित्यर्थः । एतेनैते आदेशाः प्रकृतिप्रत्ययोभयविशिष्टस्थानिका इति सिद्धम् ॥

[3] पञ्चेति ॥ ' युष्मत्सुना ' (प्रा. सू. २-३-१) इति सूत्रविहिता तुवमित्यादय आदेशाश्चत्वारः ' स्वम्भ्यां सह ' इत्यादिवार्तिकविहितः ' तं ' इत्यादेश एक इत्याहत्य युष्मदस्सौ तुवं तुं तुमं तुहं तं इति पञ्च रूपाणीति भावः । त्रिविक्रमवृत्तौ चन्द्रिकायां च त्वमित्यत्र सिद्धावस्थापेक्षया ' लवरामधश्च ' (प्रा. सू. १-४-७८) इति वकारलोपेन ' तं ' इति रूपं वार्तिकं विनैव साधितं दृश्यते । एवं त्वामित्यत्रापि ॥

## वा ब्भो म्हज्झौ ॥ २-३-१४ ॥

[1]युष्मदादेशावयवस्य [2]ब्भस्य म्ह-ज्झ-इत्येतौ वा स्तः। तुम्हे तुज्झे तुम्ह तुज्झ। [3]नव।

## अमा तुएतुमे च ॥ २-३-२ ॥

युष्मदमा सह एवं [4]वा स्यात्। तुए तुमे। चात्तुवमित्यादि ॥ तथा च—तुवं तुं तुमं तुहं तं। [5]सप्त ॥

## शसा वो च ॥ २-३-४ ॥

---

[1]युष्मदादेशावयवस्येति ॥ 'युष्मत्सुना' (प्रा. सू. २-३-१) इत्यतोऽनुवृत्तस्य युष्मदित्यस्य लक्षणया युष्मदादेश इत्यर्थो ग्राह्यः। न हि युष्मच्छब्दे ब्भो दृश्यते, किं तु तदादेशेषु तुब्भादिष्वेवेत्याशयः ॥

[2]ब्भस्य म्हज्झेति ॥ अत्राकार उच्चारणार्थ इति बोध्यम्। एवं सूत्रे 'म्ह' इत्यत्रापि। अन्यथा 'तुम्हे' इत्याद्यादेशेष्वप्यकारः श्रूयेतेति बोध्यम् ॥

[3]नवेति ॥ युष्मच्छब्दाज्जसि 'जसा हे' (प्रा. सू. २-३-३) इत्यनेन जस्विशिष्टस्य हे तुब्भे तुम्हे उय्हे तुब्भ इति पञ्चादेशाः, तथा 'वा ब्भो म्हज्झौ' (प्रा. सू, २-३-१४) इत्यनेन तुब्भे तुब्भ-इत्यादेशद्वयगतस्य संयुक्तस्य ब्भः म्ह-ज्झ-इति संयुक्तादेशयोस्सतोः तुम्हे तुज्झे तुम्ह तुज्झ इति चत्वार आदेशा इत्याहत्य नव रूपाणीति भावः। अत्र चन्द्रिकायां त्रिविक्रमवृत्तौ च 'जसा हे' इत्यादिसूत्रे 'जस्सा भे' इति पाठमभिप्रेत्य भे इत्युदाहृतं दृश्यते ॥

[4]वा स्यादिति ॥ सूत्रस्थचशब्दफलितार्थकथनमिदम्। अत एवोत्तरत्रापि 'चात्तुवमित्यादि' इति वक्ष्यते ॥

[5]सप्तेति ॥ युष्मच्छब्दात् द्वितीयैकवचने अमि 'अमा तुए तुमे च' (प्रा. सू. २-३-२) इत्यनेन अम्विशिष्टस्य युष्मदः तुए तुमे इत्यादेशयोः, तथा 'युष्मत्सुना' (प्रा. सू. २-३-१) इत्यादिना तुवाद्यादेशचतुष्टये 'स्वम्भ्यां सह' इति वार्तिकेन 'तं' इत्यादेशे च सति तुए तुमे तुवं तुं तुमं तुहं तं इति सप्त रूपाणीति भावः ॥

स्पष्टम् । चात् हे इत्यादिकं च । वो हे तुय्हे तुब्भे उय्हे तुब्भ तुम्हे तुज्झे तुम्ह तुज्झ--[1] दश ।

## टा हेतेदेदितुमंतुमइ ॥ २-३-५ ॥

टावचनेन सह युष्मत् हे ते दे दि तुमं तुमइ इति षोढा स्यात् ॥

## ङिटाभ्यां तुमएतुइतुएतुमाइतुमे ॥ २-३-६ ॥

स्पष्टम् । तकारादयः पञ्चादेशाः । टावचन [2] एकादश ॥

## भिसा हेतुब्भेह्युब्भेह्युय्हेहितुय्हेहि ॥ २-३-१० ॥

युष्मद्भिसा सह एवं स्यात् । हे तुब्भेहि उब्भेहि उय्हेहि तुय्हेहि तुम्हेहि तुज्झेहि उम्हेहि उज्झेहि—[3] नव ॥

## तुब्भतुहिन्तोतुय्ह ङसिना ॥ २-३-७ ॥

युष्मत् ङसिना सह एवं त्रिधा स्यात् । तुब्भ तुहिन्तो तुय्ह तुम्ह तुज्झ--पञ्च ॥

---

[1] दशेति ॥ युष्मदो द्वितीयाबहुवचने शसि 'शसा वो च' (प्रा. सू. २-३-४) इति प्रकृतसूत्रेण शस्विशिष्टस्य युष्मदः वो इत्यादेशपक्षे वो इत्येकं रूपं' तथा प्रकृतसूत्रस्थचानुकृष्टेषु हे तुब्भे तुय्हे उय्हे तुब्भ इति पञ्चस्वादेशेषु पञ्च रूपाणि, तेषु तुब्भे-तुब्भ-इत्यादेशद्वयगतस्य ब्भस्य 'म्हज्झ' इत्यादेशद्वयपक्षे तुम्हे तुज्झे तुम्ह तुज्झ इति चत्वारि रूपाणि, इत्याहत्य दश रूपाणीति भावः ॥

[2] एकादशेति ॥ युष्मदस्तृतीयैकवचने टाप्रत्यये तद्विशिष्टस्य युष्मदः 'टा हेते' (प्रा. सू. २-३-५) इत्यादिना हे ते दे दि तुमं तुमइ इति षट्स्वादेशेषु, तथा 'ङिटाभ्यां' (प्रा. सू. २-३-६) इत्यादिना तुमए तुइ तुए तुमाइ तुमे इति पञ्चस्वादेशेषु च हे ते दे दि तुमं तुमइ तुमए तुइ तुए तुमाइ तुमे इत्येकादश रूपाणीति भावः ॥

[3] नवेति ॥ युष्मदस्तृतीयाबहुवचने भिसि तद्विशिष्टस्य 'भिसा हेतुब्भेहि' (प्रा. सू. २-३-१०) इत्यादिना हे तुब्भेहि उब्भेहि उय्हेहि तुय्हेहि इति पञ्चस्वादेशेषु पञ्चरूपाणि, तथा तेष्वादेशेषु मध्ये तुब्भेहि-उब्भेहि-इत्यादेशद्वयगतस्य ब्भस्य म्हज्झ-इत्यादेशद्वयपक्षे चत्वारि रूपाणीति हे तुब्भेहि उब्भेहि उय्हेहि तुय्हेहि तुम्हेहि तुज्झेहि उम्हेहि उज्झेहि इत्याहत्य नव रूपाणीति भावः । अत्र सर्वत्र 'हे' इत्यादेशस्थाने तत्त-

## तुतइ ङिम्ङसौ ॥ २-३-८॥

युष्मत् सप्तम्यां तु स्यात्, ङसौ तइ स्यात्। तईहिन्तो तइत्तो तईओ तईउ। [1] अलिङ्गत्वात् 'नृनपि ङसिङसोः' (प्रा. सू. २-२-२७) इति णो नास्तीत्याहुः ॥

## तुवतुमतुहतुब्भ ॥ २-३-९॥

युष्मदः तुवादयश्चत्वारः स्युः ङिम्ङसौ। तुवाहिन्तो तुवत्तो तुवाओ तुवाउ तुवा तुवाहि, एवं षड्रूपाणि। एवं तुमाहिन्तो तुहाहिन्तो तुब्भाहिन्तो तुम्हाहिन्तो तुज्झाहिन्तो इति क्रमेण तुमादिषु पञ्चस्वपि प्रत्येकं षड्रूपाणि। त्वत्त इत्यत्र वलोपे 'अतो डो विसर्गः' (प्रा. सू. २-२-१२) इति डोत्वे च सिद्धावस्थात् तत्तो इत्यपि। तदेवं ङसौ [2] षट्चत्वारिंशद्रूपाणि ॥

---

त्सूत्रेषु भे इति पाठाभिप्रायेण भे इत्यादेशमेत्राभिप्रयन्ति चन्द्रिकाकृदादयः ॥

[1] अलिङ्गत्वादिति ॥ यद्यपि युष्मच्छब्दस्य ङसौ परतः 'तइ' इति इकारान्तादेशस्य 'तुतइ' (प्रा. सू २-३-८) इति प्रकृतसूत्रेण विधानात् 'हरिणो' इत्यत्रेवात्रापि 'नृनपि ङसिङसोः' (प्रा. सू. २-२-२७) इत्यनेन ङसो णादेशः प्राप्नोति, तथाऽपि 'अलिङ्गे युष्मदस्मदी' इत्यभियुक्तोक्तेः 'णो' इत्यादेशस्य पुंनपुंसकलिङ्गनिमित्तकतया युष्मदश्चालिङ्गकत्वान्न तस्य प्रवृत्तिरित्याशयः ॥

[2] षट्चत्वारिंशद्रूपाणीति ॥ युष्मच्छब्दात्पञ्चम्येकवचने ङसिप्रत्यये सति तद्विशिष्टस्य युष्मदः 'तुब्भतुहिन्तोतुय्ह ङसिना' (प्रा. सू. २-३-७) इति तुब्भ-तुहिन्तो-तुय्ह-इत्यादेशत्रये तुब्भादेशगतस्य ब्भस्य 'वा ब्भो म्हज्झौ' (प्रा. सू. २-३-१४) इति म्हज्झादेशद्वये च-सति तुब्भ तुहिन्तो तुय्य तुम्ह तुज्झ इति पञ्चरूपाणि, तथा 'तुतइ ङिम्ङसौ' (प्रा. सू. २-३-८) इत्यनेन ङसौ परतः पूर्वस्य प्रकृतिभूतस्य युष्मदः तइ-इत्यादेशे ङसेश्च 'हिन्तोत्तोदोदु ङसिस्' (प्रा. सू. २-२-६) इति हिन्तो-त्तो-दो-दु-इत्यादेशचतुष्टये सति तईहिन्तो तइत्तो तईओ तईउ-इति चत्वारि रूपाणि, तथा 'तुवतुमतुहतुब्भ' (प्रा. सू. २-३-९) इत्यनेन प्रकृतेर्युष्मदः तुव-तुम-तुह-तुब्भ-इत्यादेशचतुष्टये तुब्भादेशगतस्य ब्भस्य 'वा भ्भो म्हज्झौ' (प्रा. सू. २-३-५३) इत्यादेशद्वये ङसेश्च पूर्ववत् हिन्तो इत्यादेशचतुष्टये तुवादीनामकारान्ततया 'ङसेः

## उब्भोय्हतुय्हतुब्भ भ्यसि ॥ २-३-११ ॥

युष्मदः उब्भ उय्ह तुय्ह तुब्भ इति चत्वारः स्युर्भ्यसि । उब्भ-तुब्भयोः म्हज्झावपीति युष्मदोऽष्टावादेशाः स्युः । उब्भाहिन्तो उब्भेहिन्तो उब्भासुन्तो उब्भेसुन्तो उब्भाहि उब्भेहि उब्भत्तो उब्भाओ उब्भाउ। एवमेकैकस्यां प्रकृतौ नवनवरूपाणीति कृत्वा अष्टभिः [1]द्विसप्तति-रूपाणि भवन्ति ॥

## तुब्भोब्भोय्हतुय्हतइतुहिंतुहंतुम्हंतुवतुमंतुमेतुमाइतु-मोदेतेदितुइतुए ङसा ॥ २-३-१२ ॥

---

श्लुक्' (प्रा. सू. २-२-१५) 'ङसिसो हि' (प्रा. सू. २-२-१७) इति श्लुक्-हि-इत्यादेशद्वये च सति तुवाहिन्तो तुवत्तो तुवाओ तुवाउ तुवा तुवाहि, तुमाहिन्तो तुमत्तो तुमाओ तुमाउ तुमा तुमाहि, तुहाहिन्तो तुहत्तो तुहाओ तुहाउ तुहा तुहाहि, तुब्भाहिन्तो तुब्भत्तो तुब्भाओ तुब्भाउ तुब्भा तुब्भाहि, तुम्हाहिन्तो तुम्हत्तो तुम्हाओ तुम्हाउ तुम्हा तुम्हाहि, तुज्झाहिन्तो तुज्झत्तो तुज्झाओ तुज्झाउ तुज्झा तुज्झाहि, इति षट्त्रिंशद्रूपाणि, तथा तसिलन्ते सिद्धावस्थापन्ने 'त्वत्तः' इत्यत्र 'लवरामधश्च' (प्रा. सू. १-४-७८) इति वकारस्य लुकि विसर्गस्य 'अतो डो विसर्गः' (प्रा. सू. २-२-१२) इति डो-इत्यादेशे तस्य डित्त्वात्तत्पूर्वस्य टिभूतस्य अकारस्य लोपे च सति 'तत्तो' इत्येकं रूपमित्याहत्य षट्चत्वारिंशद्रूपाणीति भावः ॥

[1] द्विसप्ततिरूपाणीति ॥ युष्मच्छब्दात्पञ्चमीबहुवचने भ्यस्प्रत्यये प्रकृते-र्युष्मदः 'उब्भोय्हतुय्हतुब्भ भ्यसि' (प्रा. सू. २-३-१०) इति चत्वार आदेशाः, तेषु उब्भतुब्भादेशद्वयगतस्य ब्भस्य म्हज्झादेशयोश्चत्वार आदेशा इत्यष्टौ प्रकृत्यादेशा-स्सम्पन्नाः । भ्यसश्च हिन्तो-त्तो-दो-दु-हि-सुंतो-इति षडादेशाः, तत्र च हिन्तो सुंतो-ष्वादेशेषु परेषु पूर्वस्याकारस्य दीर्घैत्वयोर्वैकल्पिकत्वमित्यष्टसु प्रकृत्यादेशेषु प्रत्येकं नवनव रूपाणीत्याहत्य द्वासप्तती रूपाणि भवन्तीति भावः । तानि च रूपाणि यथा—

(1) उब्भाहिन्तो उब्भेहिन्तो उब्भत्तो उब्भाओ उब्भाउ उब्भाहि उब्भेहि उब्भासुन्तो उब्भेसुन्तो,

(2) उम्हाहिन्तो उम्हेहिन्तो उम्हत्तो उम्हाओ उम्हाउ उम्हाहि उम्हेहि उम्हासुन्तो उम्हेसुन्तो,

युष्मदो ङसा सह तुब्भ उब्भ उय्ह तुय्ह तइ तुहिं तुहं तुम्हं तुव तुमं तुमे तुमाइ तुमो दे ते दि तुइ तुए इत्यष्टादश स्युः। तुब्भोब्भयोः [1]म्हज्झादेशेषु तुम्ह तुज्झ उम्ह उज्झ इत्यप्यस्ति। द्वाविंशतिः॥

[2]उम्हाणतुब्भंतुब्भाणतुवाणतुमाणतुहाणतुब्भवो-
हे त्वामा॥ २-३-१३॥

---

(3) उज्झाहिन्तो उज्झेहिन्तो उज्झत्तो उज्झाओ उज्झाउ उज्झाहि उज्झेहि उज्झासुन्तो उज्झेसुन्तो,

(4) उय्हाहिन्तो उय्हेहिन्तो उय्हत्तो उय्हाओ उय्हाउ उय्हाहि उय्हेहि उय्हासुन्तो उय्हेसुन्तो,

(5) तुय्हाहिन्तो तुय्हेहिन्तो तुय्हत्तो तुय्हाओ तुय्हाउ तुय्हाहि तुय्हेहि तुय्हासुन्तो तुय्हेसुन्तो,

(6) तुब्भाहिन्तो तुब्भेहिन्तो तुब्भत्तो तुब्भाओ तुब्भाउ तुब्भाहि तुब्भेहि तुब्भासुन्तो तुब्भेसुन्तो,

(7) तुम्हाहिन्तो तुम्हेहिन्तो तुम्हत्तो तुम्हाओ तुम्हाउ तुम्हाहि तुम्हेहि तुम्हासुन्तो तुम्हेसुन्तो,

(8) तुज्झाहिन्तो तुज्झेहिन्तो तुज्झत्तो तुज्झाओ तुज्झाउ तुज्झाहि तुज्झेहि तुज्झासुन्तो तुज्झेसुन्तो, इति॥

[1] **म्हज्झादेशेष्विति**॥ 'वा ब्भो म्हज्झौ' (प्रा. सू. २-३-१४) इत्यनेन युष्मदादेशगतस्य ब्भस्य वैकल्पिकतया म्हज्झादेशयोर्विधानादिति भावः॥

[2] **उम्हाणेति**॥ अत्र सूत्रे चन्द्रिकात्रिविक्रमवृत्त्योः 'तुम्हाण' इत्यादि सूत्रपाठनिर्देशो मुद्रिते उपलभ्यमानलिखितपुस्तकयोरपि दृश्यते। अत्र तुब्भाणेत्यादेशविधानात् तत्रत्यब्भकारस्य 'वाब्भो म्हज्झौ' (प्रा. सू. २-३-१४) इत्यनेन ब्भस्य म्हादेशविधानेनैव तुम्हाणेत्यस्यापि सिद्ध्या पुनस्तुम्हाणग्रहणं सूत्रे किमर्थमित्याशङ्का सम्भवति। चन्द्रिकायां तु प्रकारान्तरेण तुम्हाणेतिरूपसिद्धिमाशङ्क्य सूत्रे तद्ग्रहणं वैचित्र्यार्थमिति च समाहितम्। उम्हाणेत्यादिसूत्रपाठाभ्युपगन्तुरेतद्वृत्तिकृतो मते तु पूर्वोक्तशङ्कासमाधानयोरेवानवसर इति ज्ञायते। एवमेव 'तुब्भोब्भोय्ह' (प्रा.सू. २-३-१२) इति सूत्रेऽपि (प्रा. सू. २-३-१२) एतद्वृत्तौ 'तुम्हं' इति सानुस्वारादेशग्रहणात्तत्राप्ये-

आमा सह युष्मत् उम्हाण तुब्भं तुब्भाण तुवाण तुमाण तुहाण तुब्भ वो हे तु इति दशधा स्यात् । तुब्भंतुब्भाणतुब्भेषु तुज्झं तुम्हं तुज्झाण तुम्हाण तुज्झ तुम्ह इत्यपि षट् । अत्र णकाराणां [1] सुबादेशत्वमिष्यते । तथाच बिन्दौ उम्हाणं तुम्हाणं तुज्झाणं तुब्भाणं तुवाणं तुमाणं तुहाणं एवं त्रयोविंशतिः । ङौ—'ङिटाभ्यां तुमएतुइतुएतुमाइ तुमे' (प्रा. सू. २-३-६) तुमए तुइ तुए तुमाइ तुमे इति पञ्च । 'तुतइ ङिम्ङसौ' (प्रा. सू. २-३-८) इत्युक्तया तुम्मि 'तुवतुमतुहतुब्भ' (प्रा. सू. २-३-९) ङेस्स्थर्स्सिम्मि' (प्रा. सू. २-२-६३) तुवम्मि तुवस्सि तुवत्थ, तुमम्मि तुमस्सि तुमत्थ, तुहम्मि तुहस्सि तुहत्थ, तुब्भम्मि तुब्भस्सि तुब्भत्थ, तुज्झम्मि तुज्झस्सि तुज्झत्थ, तुम्हम्मि तुम्हस्सि तुम्हत्थ, एवमष्टादश । 'अनिदमेतदः' (प्रा. सू. २-२-६४) इति हिं, षट्—तुवहिं तुमहिं तुहहिं तुब्भहिं तुम्हहिं तुज्झहिं, एवं ङौ त्रिंशत् । सुपि—'तुतइ ङिम्ङसौ' (प्रा· सू. २-३-८) [2] तूसु तुवेसु तुमेसु तुहेसु तुब्भेसु तुम्हेसु

---

तच्छङ्कासमाधानयोर्नाविर्भाव इति विभाव्यते । युक्तं चैतत् । अन्यथा चन्द्रिकात्रिविक्रम वृत्तिकृन्मतरीत्या सूत्रे 'तुम्हाण' इति पाठाभ्युपगमे बिन्द्वन्तानामबिन्द्वन्तानां च षण्णामेव रूपाणां संभवात् चन्द्रिकायां त्रिविक्रमवृत्त्योश्च तत्रैव सूत्रे 'बिन्द्वन्तास्सप्त, अबिन्द्वन्तास्सप्त' इत्युक्तिः कथं संघटेतेति ॥

[1] सुबादेशत्वमिष्यत इति ॥ यद्यपि युष्मदादेशान्ताराणामिव णकारघटितानां उम्हाणेत्यादेशानामपि प्रकृतिप्रत्ययविशिष्टादेशत्वस्यैव सूत्राल्लाभेन 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इत्यत्र सुबादेशभूतणकारादेव परत्वेन बिन्दोर्विधानात् 'उम्हाणं' इत्यादिणकारघटितादेशानां विशिष्टादेशतया तत्रत्यणकाराणां सुबादेशत्वाभावात्ततः परत्वेन बिन्दुर्न भवितुमर्हति, तथाऽपि 'युष्मदस्मदोरामि णकाराणां सुबादेशत्वमिष्यते' इति वार्तिकबलात् णकारघटितयुष्मदादेशेषु उम्हाणेत्यादिषु 'उम्हा' इत्यादेः प्रकृत्यादेशत्वं 'ण' इत्यस्य आमादेशत्वमभ्युपगम्यत इति तत्रत्यणकाराणां सुबादेशतया 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इत्यनेन तत्रत्यणकारात्परतया बिन्दोः प्रवृत्तिर्निष्प्रत्यूहेत्याशयः ॥

[2] तूस्विति ॥ युष्मच्छब्दात् सप्तमीबहुवचने सुपि परे युष्मदः 'तुतइ ङिम्ङसौ' (प्रा. सू. २-३-८) इति तु-इत्यादेशे 'इदुतोर्दिः' (प्रा. सू. २-२-२२) इत्युकारस्य दीर्घे च तूस्विति रूपमिति भावः ॥

तुज्झेसु । [1] बिन्दौ तूसुं तुवेसुं [2] इत्यादिचतुर्दशरूपाणि ॥

इति पुंलिङ्गो युष्मच्छब्दः.

---

अस्मच्छब्दे—

[3] **अस्मत्सुनाऽम्हिहमहअमहंम्यम्मि ॥ २-३-१५ ॥**

अस्मच्छब्दः सुना सह एवं षोढा स्यात् । अम्हि हं अहअं अहं मि अम्मि । जसि—

[4] **मेहेवअं जसा ॥ २-३-१६ ॥**

स्पष्टम् । मे हे वअम् ॥

[5] **अम्हेअम्होअम्ह ॥ २-३-१७ ॥**

---

[1] बिन्दाविति ॥ 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति सुपस्सुकारात्परं पाक्षिकबिन्दावित्यर्थः ॥

[2] इत्यादीति ॥ तुमेसुं तुहेसुं तुब्भेसुं तुम्हेसुं तुज्झेसुं इति रूपपञ्चकमत्रत्यादिपदग्राह्यमिति बोध्यम् ॥

इति पुंलिङ्गो युष्मच्छब्दः.

---

[3] अस्मत्सुनेत्यादि ॥ अत्र चन्द्रिकायां 'अस्मत्सुना अम्हिहमहअमहमहम्मयम्मि' इति सूत्रपाठाभ्युपगमेन 'म्मि' इत्यादेशस्थाने 'अहम्मि' इत्यादेश उररीकृतो दृश्यते । अस्यां वृत्तौ त्रैविक्रम्यां च 'म्मि' इत्यादेश एव 'अहम्मि' इत्यस्य स्थाने अभ्युपगतो दृश्यते ॥

[4] मेहेवअमित्यादि ॥ अत्र सूत्रे वृत्तिचन्द्रिकयोः 'मेभेवअं' इति पाठो दृश्यते ॥

[5] अम्हे अम्हो अम्ह इति ॥ यद्यपि एतत्सूत्रस्य पूर्वसूत्रेण सहैकीकरणेऽप्यादेशषट्कं जसि सुलभं, तथापि योगविभागाभावे 'णे च शसा' (प्रा. सू. २-३-१८) इत्युत्तरसूत्रे चकारेण एकसूत्रनिर्दिष्टानां षण्णामादेशानां समुच्चय आपद्येत, न तु त्रयाणां अम्हो-इत्यादीनामेवेति तदर्थं योगविभागः कृतः । ततश्च पूर्वसूत्रनिर्दिष्टास्त्रय एवादेशा इति तेषामेवोत्तरसूत्रगतचकारेण समुच्चयस्सिध्यतीति बोध्यम् ॥

इति त्रिधा च स्यात्। षट्। अमि—

मंणेणंमिमिमिंममममम्मयहंमम्हाम्हामा ॥ २-३-१९ ॥

इति दशधा स्यात्। मं णे णं मिं मिमं ममं अम्मि अहं मम्ह अम्ह। शसि—'अम्हे अम्हो अम्ह' (प्रा. सू. २-३-१७) इत्यधिकृत्य—

णे च शसा ॥ २-३-१८ ॥

अस्मच्छसा सह अम्हे अम्हो अम्ह णे इति [1] चत्वारः स्युः। अम्हे अम्हो अम्ह णे।

मिमइममाइमएमे ङिटा ॥ २-३-२० ॥

अस्मत् ङिटावचनाभ्यां सह पञ्चधा स्यात्। मि मइ ममाइ मए मे।

ममंणेमआइममए टा ॥ २-३-२१ ॥

टा सह इति चतुर्धा स्यात्। ममं णे मआइ ममए, [2]नव भिसि।

णेअम्हेह्यम्हाह्यम्हेअम्ह भिसा ॥ २-३-२२ ॥

अस्मत् भिसा सह एवं पञ्चधा स्यात्। णे अम्हेहि अम्हाहि अम्हे अम्ह। ङसौ—

मइमममहमज्झ ङसौ ॥ २-३-२३ ॥

अस्मद एते चत्वारः स्युः ङसौ। मईहिंतो मइत्तो मईओ मईउ, चत्वारि[3], ममाहिंतो ममत्तो ममाओ ममाउ ममा ममाहि, षट्।

---

[1] चत्वारः स्युरिति ॥ पूर्वोत्तरसूत्रवृत्त्यानुगुण्येन अत्रापि 'चतुर्धा स्यात्' इति विवरणं युक्तमिति भाति ॥

[2] नवेति ॥ अस्मच्छब्दात्तृतीयैकवचने टाप्रत्यये 'मिमइममाइमएमे' इति पूर्वसूत्रविहितादेशपञ्चकेन सह 'ममंणे' इत्याद्येतत्सूत्रविहितादेशचतुष्टये सति नव रूपाणि संपद्यन्त इति भावः ॥

[3] चत्वारीति ॥ अस्मच्छब्दात्पञ्चम्येकवचने ङसिप्रत्यये सति ङस्यादेशतया विहितेषु षट्सु हिंतो-त्तो-दो-दु-लुक्-ह्यादेशेषु मध्ये लुक्-ह्यादेशयोरदन्तादेव विहितत्वेन मइ-इतीदन्तादेशपक्षे तयोरप्रवृत्त्या चत्वारि रूपाणीति भावः ॥

एवं मह्ममज्झयोरपि, इति [1]द्वाविंशतिः ॥

अम्हमम भ्यसि ॥ २-३-२४ ॥

स्पष्टम्। अम्हासुंतो अम्हेसुंतो अम्हाहिंतो अम्हेहिंतो अम्हाहि अम्हेहि अम्हत्तो अम्हाओ अम्हाउ। [2]एवं ममेऽपि इत्यष्टादश। ङसि—

अम्हंमज्झंमज्झमइमहमहंमे च ङसा ॥२-३-२५॥

स्पष्टम्। अम्हं मज्झं मज्झ मइ मह महं मे, [3]चकारात् अम्ह मम इति च नव।

अम्हेअम्होअम्हाणममाणमहाणमज्झाणमज्झअम्हंअम्हणेणो आमा ॥
॥ २-३-२६ ॥

---

[1] द्वाविंशतिरिति ॥ अस्मच्छब्दात् ङसौ सति अस्मदो मइ—इतीवन्तादेशपक्षे ङसेः हिंतो-त्तो-दो-दु-इत्यादेशचतुष्टये सति मईहिंतो मइत्तो मईओ मईउ इति चत्वारि रूपाणि, तथा ममममहमज्झादेशेषु त्रिपु ङसेः हिंतो—इत्याद्यादेशषट्के सति ममाहिंतो ममत्तो ममाओ ममाउ ममा ममाहि, महाहिंतो महत्तो महाओ महाउ महा महाहि, मज्झाहिंतो मज्झत्तो मज्झाओ मज्झाउ मज्झा मज्झाहि, इत्यष्टादश रूपाणीत्याहत्य द्वाविंशती रूपाणीति भावः ॥

[2] एवं ममेऽपीति ॥ अस्मच्छब्दात्पञ्चमीबहुवचने भ्यसि प्रकृतेरस्मदः प्रकृत-सूत्रेण अम्ह-मम-इत्यादेशद्वयविधानाद्यथा अम्हादेशपक्षे भ्यसः सुंतो-हिंतो-ह्यादेशेषु तत्पूर्वाकारस्य एत्वतदभावपक्षयोः अम्हेसुंतो अम्हासुंतो अम्हेहिंतो अम्हाहिंतो अम्हेहि अम्हाहि इति षड्रूपाणि त्तो-दो-दु-इत्यादेशत्रये च अम्हत्तो-अम्हाओ अम्हाउ इति त्रीणि रूपाणीत्याहत्य नव रूपाणि तथा ममादेशपक्षेऽपि ममेसुंतो ममासुंतो ममेहिंतो ममाहिंतो ममेहि ममाहि ममत्तो ममाओ ममाउ इति नव रूपाणीति भावः ॥

[3] चकारादिति ॥ एतत्सूत्रगतश्चकारः 'अम्हमम भ्यसि' (प्रा. सू. २-३-२४) इति पूर्वसूत्रगतयोः अम्हममयोरादेशयोस्समुच्चायक इति भावः ॥

स्पष्टम् । अम्हे अम्हो अम्हाण ममाण महाण मज्झाण मज्झ अम्ह अम्हं णे णो, एकादश । [1] बिन्दौ—अम्हाणं ममाणं [2] इत्यादि पञ्चदश ।

## अम्हममज्झमह ङिपि ॥ २-३-२७ ॥

स्पष्टम् । अम्हत्थ अम्हस्सि अम्हम्मि अम्हहिं । एवं ममत्थ मज्झत्थ, एवं षोडश। 'मिमइममाइमएमे ङिटा'(प्रा. सू. २-३-२०) इति पञ्च मिलित्वा [3] एकविंशतिः। सुपि—अम्हेसु ममेसु मज्झेसु महेसु, चत्वारि। बिन्दौ—अम्हेसुं इत्याद्यष्ट ।

वा—अम्हादीनामत्वात्वे वाच्ये ।

---

[1] बिन्दाविति ॥ उम्हाणेत्यादियुष्मदादेशेष्विवात्राप्यस्मदादेशभूतणशब्दघटितादेशेषु णशब्दस्य सुबादेशत्वमिति वा, प्रकृतिप्रत्ययविशिष्टादेशत्वेऽपि प्रत्ययादेशत्वं न हीयत इति वाऽभिप्रेत्य 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति सूत्रेण बिन्दोर्वैकल्पिकतया प्रवृत्तिरित्याशयस्स्यादिति भाति ॥

[2] इत्यादीति ॥ आदिपदेन महाणं मज्झाणमित्यनयोस्सङ्ग्रहः ॥

[3] एकविंशतिरिति ॥ अस्मच्छब्दात् सप्तम्येकवचने ङिप्रत्यये सति 'अम्हममज्झमह ङिपि' (प्रा. सू. २-३-२७) इति प्रकृतसूत्रेण अम्हाद्यादेशचतुष्टये सत्यदन्तत्वात्सर्वनामत्वाच्च ततः परस्य ङेः 'ङेस्त्थस्सिंसिम्मि' (प्रा. सू. २-२-६३) इति 'अनिदमेतदस्तु किंयत्तदः स्त्रियामपि हिं' (प्रा. सू. २-२-६४) इति सूत्राभ्यां त्थ-स्सिं-म्मि-हिं-इत्यादेशचतुष्टये सति अम्हत्थ अम्हस्सिं अम्हम्मि अम्हहिं, ममत्थ ममस्सिं ममम्मि ममहिं, मज्झत्थ मज्झस्सिं मज्झम्मि मज्झहिं, महत्थ महस्सिं महम्मि महहिं, इति षोडशरूपाणि, तथा 'मिमइममाइ' (प्रा. सू. २-३-२०) इति सूत्रेण प्रकृतिप्रत्ययसमुदायस्य मिमइ-ममाइ-मए- मे-इत्यादेशेषु सत्सु पञ्चरूपाणीत्याहत्य एकविंशती रूपाणीति भावः। चन्द्रिकायां त्वत्र अदन्तसामान्यात्परस्य ङेरादेशविधायकस्य 'ङेर्डे' (प्रा. सू. २-२-१६) इत्यस्य ङिसामान्यादेशविधायकस्य 'ङेर्मिर्' (प्रा. सू. २-२-११) इत्यस्य च प्रवृत्तिं मत्वा तथैवोदाहृत्य त्थाद्यादेशघटितोदाहरणान्यप्रदर्श्य 'त्थाद्यादेशान्तोदाहरणप्रदर्शनाभावस्तु विचारणीयस्त्रैविक्रमे' इत्यभिहितं दृश्यते ॥

अम्हसु अम्हसुं, ममसु ममसुं, अम्हासु अम्हासुं, ममासु, ममासुं [1] इत्याद्यष्टौ । संभूय चतुर्विंशतिः । [2] गणनानभिज्ञानामत्राष्टादशत्ववचनमनादेयम् ॥

इति पुल्लिँङ्गोऽस्मच्छब्दः.

---

द्विशब्दे—

**दोण्णिदुवे[3] वेण्णि द्वेः ॥ २-३-३० ॥**

[4] **द्वेर्जश्शस्भ्यां सह एते स्युः ।**

---

[1] इत्याद्यष्टाविति ॥ अत्र 'इत्यष्टौ' इत्युक्त्वा तदनन्तरं 'एवं महमज्झयोरपि' इति ग्रन्थेन भाव्यम् । ततश्च 'संभूय चतुर्विंशतिः' इत्युत्तरग्रन्थ उपपद्यत इति बोध्यम् ॥

[2] गणनानभिज्ञानामिति ॥ त्रिविक्रमवृत्तौ हि 'अम्हेसु' इत्यारभ्य 'महासुं' इत्यन्तेन ग्रन्थेन चतुर्विंशतिरूपाण्युदाहृत्य अन्ते 'एवमष्टादशरूपाणि' इत्युक्तिदर्शनादेवमुक्तिः । सवार्तिकप्राकृतसूत्रपाठे 'अम्हादीनामत्वात्वे वाच्ये' इति वार्तिकदर्शनात् अस्मच्छब्दात् सप्तमीबहुवचने सुप्प्रत्यये सति प्रकृतेरस्मदः अम्हाद्यादेशचतुष्टये सति तदवयवस्य अकारस्य 'भिभ्भ्यस्सुपि' (प्रा. सू २-२-२१) इत्येत्ववत् अत्वात्वयोरपि विधानात् 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति तत्रत्यसुपः परं पाक्षिकबिन्दुविधानाच्च अम्हादिषु चतुर्ष्वादेशेषु प्रत्येकं षट्षड्रूपाणि संभवन्तीत्याहृत्य चतुर्विंशतिरूपाण्युपपद्यन्त इत्येतद्वृत्तिकृत आशयस्स्यादिति संभाव्यते॥

इदमत्र परिचिन्तनीयम्—

चन्द्रिकायां आत्वस्य अम्हादेशमात्रविषयकत्वाभिप्रायेण 'अम्हेत्यस्य सुपि आत्वमित्यपरे' इत्युक्तिदर्शनात् अम्हादेशे षड्रूपाणि ममाद्यादेशत्रये च प्रत्येकं चत्वारि चत्वारि रूपाणीत्याहृत्य अष्टादशरूपाणीति चन्द्रिकायामत्राष्टादशरूपाणीत्युपसंहृतमिति ॥

इति पुल्लिँङ्गोऽस्मच्छब्दः.

---

[3] वेण्णीति ॥ अत्र त्रिविक्रमवृत्तिचन्द्रिकयोस्सूत्रे 'बेण्णि' इति पाठो दृश्यते ॥

[4] द्वेर्जश्शस्भ्यामिति ॥ 'चतुरो जश्शस्भ्यां' (प्रा. सू. २-३-२८) इत्यतो जश्शस्भ्यामित्यनुवर्तते । प्राकृते द्विवचनानामभावात् अनेकवचनत्वतात्पर्येण द्विवचनस्थाने बहुवचनानामेव प्रवृत्त्या द्विशब्दात् जश्शसादीनां प्रवृत्तिरिति भावः ॥

[1] लिङ्गत्रयेऽपि । दोण्णि दुवे वेण्णि ॥

## दोवे टादौ च ॥ २-३-३१ ॥

द्विशब्दस्य [2] टादौ दो वे च स्तः । चाज्जश्शस्भ्यां सह दो वे इति स्यात् । दोण्णिवेण्योः 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे [3] दुण्णि विण्णि इत्यप्यस्ति । सप्त ।

टादौ—दोहि ३ । वेहिं ३ । [4] षट् । भ्यसि—दोसुन्तो दोहिन्तो दोत्तो दोओ दोउ, पञ्च ।

---

[1] लिङ्गत्रयेऽपेति ॥ विशेषानुपादानादिति भावः ॥

[2] टादाविति ॥ अत्र चन्द्रिकायां तृतीयैकवचनस्य टाप्रत्ययस्य विधेयान्वय परिहाराय टादावित्यत्र अतद्गुणसंविज्ञानबहुव्रीहिराश्रितो दृश्यते । द्विशब्दस्य द्वित्व-सङ्ख्यावाचकतया तद्विरुद्धैकवचनानां ततः प्रवृत्त्ययोगात् 'हस्तेनावद्यति' इत्यादाविव सामर्थ्यपर्यालोचनया ङे इत्याद्येकवचनानां विधेयान्वयो न संभवति इति चोक्तं दृश्यते । अत्रेदं प्रतिभाति-अतद्गुणसंविज्ञानेऽपि 'हस्तेनावद्यति' इति न्यायाश्रयणस्य आवश्यकतया तेनैव न्यायेन टाप्रत्ययस्यापि विधेयानन्वयस्सूपपाद इति । किं च द्विशब्दस्य गौणतायामेकवचनस्यापि प्रवृत्तिसंभवात्तत्रादेशार्थं टादावित्युक्तमित्यप्युक्तं चन्द्रिकायाम् ॥

[3] ह्रस्व इति ॥ 'अनुक्तमन्यशब्दानुशासनवत्' (प्रा. सू. १-१-२) इत्यनेनात्र प्राकृतशास्त्रे अनुक्तप्रक्रियाविषये व्याकरणान्तरक्रमस्याभ्युपगमात् द्विशब्दस्य जश्शस्विशिष्टस्य प्रकृतसूत्रेण दोण्णि वेण्णि इत्यादेशद्वये सति संयोगात्पूर्वस्य ओकारस्य एकारस्य च 'संयोगे' (प्रा. सू. १-२-४०) इति ह्रस्वे 'एच इग्घ्रस्वादेशे' (प्रा. सू. १-१-४८) इति पाणिनीयबलादोकारस्य उकाररूपे एकारस्य इकाररूपे च ह्रस्वे सति दुण्णि विण्णि इति रूपमिति भावः । केचित्त्वत्र इग्रूपं ह्रस्वं नाभिप्रयन्तीति चन्द्रिकाया-मुक्तम् । तेषां त्वयमाशयः स्यात्-प्राकृते ह्रस्वयोरेकारौकारयोस्सत्वात्तावेव ह्रस्वौ प्रवर्तेते इति । अत एव त्रिविक्रमवृत्तावत्र ह्रस्वेऽपि दोण्णि वेण्णि इत्येवोदाहृतं दृश्यत इति ॥

[4] षडिति ॥ द्विशब्दात् तृतीयाबहुवचने भिसि तस्य 'हिंहिङ्हि भिसः' (प्रा. सू. २-२-५) इत्यनेनादेशत्रये प्रकृतेश्च दोवे–इत्यादेशद्वये च दोहिं दोहिँ दोहि वेहिं वेहिँ वेहि इति षड्रूपाणीति भावः ॥

एवं वेहिन्तो वेसुन्तो इत्यादि [1] दश। दो आम् इति स्थिते—

## ण्हण्हं सङ्ख्याया आमोऽविंशतिगे ॥ २-३-३३ ॥

अविंशतीति च्छेदः। [2] शिष्टं स्पष्टम्। दोण्ह दोण्हं वेण्ह वेण्हं। एवं [3] चउण्ह चउण्हं, पञ्चण्ह पञ्चण्हं इत्यादि। अविंशतिगे किम्? [4] वीसाणं तीसाणं। [5] दोसु दोसुं वेसु वेसुम्॥

इति पुंलिङ्गो द्विशब्दः.

---

[1] दशेति ॥ द्विशब्दात्पञ्चमीबहुवचने भ्यसि पूर्ववत्प्रकृतेर्द्विशब्दस्य दोवे इत्यादेशद्वये भिसः प्रत्ययस्य च सुन्तो-हिन्तो-त्तो-दो-दु-इत्यादेशपञ्चके सति दोसुन्तो दोहिन्तो दोत्तो दोओ दोउ, वेसुन्तो वेहिन्तो वेत्तो वेओ वेउ इति दश रूपाणीति भावः ॥

[2] शिष्टं स्पष्टमिति ॥ सूत्रेऽविंशतिग इत्यत्रत्यगशब्दस्य 'गो गणपरः' (प्रा. सू. १-१-१०) इत्यनेन गणसंज्ञकत्वेन विंशत्यादिगणघटितभिन्नात्संख्यावाचकात्परस्यामो ण्हण्हं-इत्यादेशद्वयं भवतीति सूत्रार्थः फलतीति भावः ॥

[3] चउण्हेत्यादि ॥ अस्य सर्वनामप्रकरणत्वेऽप्येतत्सूत्रलक्ष्यान्तरप्रदर्शनाभिप्रायेणात्र चउण्ह इत्याद्युक्तमिति बोध्यम् ॥

[4] वीसाणां तीसाणमिति ॥ विंशतिशब्दात् त्रिंशच्छब्दाच्च षष्ठीबहुवचने आम्प्रत्यये सति तस्य प्रकृतसूत्रे 'अविंशतिगे' इति पर्युदासात् ण्हण्हमादेशयोरभावेन 'णशामः' (प्रा. सू. २-२-४) इति सूत्रेण णशादेशे 'विंशतिषु त्या श्लोपल्' (प्रा. सू. १-१-४८) इत्यनेन विंशतिशब्दे ति-इत्यवयवेन त्रिंशच्छब्दे त्-इत्यन्तावयवेन सहितस्य बिन्दोर्लोपे तस्य शित्त्वात्तत्पूर्वस्येकारस्य दीर्घे णशशित्त्वात्तत्पूर्वस्याप्यकारस्य दीर्घे 'शोस्सल्' (प्रा. सू. १-३-८७) इति शस्य सत्त्वे 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति णकारात्परं बिन्दौ च वीसाणं तीसाणमिति रूपमिति भावः। ननु त्रिंशच्छब्दे ति-इत्यवयवस्यासत्त्वात् 'विंशतिषु त्या' (प्रा. सू. १-१-४८) इत्यस्य कथं प्रवृत्तिरिति चेत्सत्यम्। त्या इत्यत्र तकारस्य प्रश्लेषेण विंशतिशब्दसाहचर्येण च विंशत्यादिगणप्रविष्टशब्दगतस्य त्-ति-इत्यन्यतरान्तावयवसहितस्य बिन्दोः अदर्शनं भवतीत्यर्थाभ्युपगमेन कथंचित्समाधेयमिति भाति ॥

[5] दोसु दोसुमित्यादि ॥ द्विशब्दात्सप्तमीबहुवचने सुपि प्रकृतेः 'दोवे टादौ च' (प्रा. सू. २-३-३१) इत्यनेन दो-वे-इत्यादेशयोः 'क्त्वासुपोस्तु सुणात्'

[1] त्रिशब्दे—

तिण्णि त्रेः ॥ २-३-२९॥

जश्शस्भ्यां सह त्रेर्लिङ्गत्रयेऽपि तिण्णि स्यात्। तिण्णि ॥

ति त्रेः ॥ २-३-३२॥

त्रेर्लिङ्गत्रयेऽपि ति [2] स्याट्टादौ। तीहिं ३। [3] हरिवत्। आमि— तिण्ह तिण्हं। सुपि— [4] तीसु तीसुं ॥

इति पुंलिङ्गस्त्रिशब्दः.

———

इति सर्वनामपुंलिङ्गविशेषशब्दाः.

———

(प्रा. सू. १-१-४३) इत्यनेन सुकारात्परं बिन्दुतदभावयोश्च दोसु दोसुं वेसु वेसुं इति चत्वारि रूपाणीति भावः ॥

इति पुंलिङ्गो द्विशब्दः.

———

[1] त्रिशब्द इति ॥ यद्यप्यस्य सर्वनामप्रकरणत्वेनात्र त्रिशब्दप्रक्रियाभिधानमननुगुणमिव भाति। तथाऽपि द्विशब्दप्रक्रियासादृश्येन लाघवादत्रैतत्प्रक्रियानिरूपणमिति बोध्यम् ॥

[2] टादाविति ॥ 'दोवे टादौ च' (प्रा. सू. २-३-३१) इत्यतः टादावित्यस्यानुवृत्तिर्बोध्या ॥

[3] हरिवदिति ॥ त्रिशब्दात् भ्यसि तस्य सुन्तो-हिन्तो-त्तो-दो-दु-इत्यादेशपञ्चके सति प्रकृतेः ति-इत्यादेशे 'इदुतोर्दिः' (प्रा. सू. २-२-२२) इतीकारस्य दीर्घे च तीसुन्तो तीहिन्तो तित्तो तीओ तीउ इति पञ्च रूपाणि बोध्यानीति भावः ॥

[4] तीसु तीसुमिति ॥ त्रिशब्दात्सप्तमीबहुवचने सुपि प्रकृतेः ति-इत्यादेशे 'क्त्वासुपोस्तु' (प्रा. सू. १-१-४३) इति सुकारात्परं बिन्दुतदभावपक्षयोः तीसु तीसुं इति रूपद्वयमिति भावः ॥

इति सर्वनामपुंलिङ्गविशेषशब्दाः.

———

# अथ सर्वनामस्त्रीलिङ्गविशेषशब्दाः.

अथ सर्वादीनां स्त्रियां विशेषः— [1] सव्वा गङ्गावत्। आमि 'आमां डेसिं' (प्रा. सू. २-२-६५) सव्वेसिं। एवं [2] विश्वादयः॥

इत्याकारान्तस्त्रीलिङ्गसर्वनामशब्दाः.

---

यत्— [3] जा। [4] जाओ जाउ जा।

## किंयत्तदोऽस्वमामि सुपि॥ २-२-४०॥

किंयत्तदां स्त्रियां [5] ङित् ई वा स्यात्, अस्वमामि सुपि।

---

## अथ सर्वनामस्त्रीलिङ्गविशेषशब्दाः.

[1] सव्वेति॥ सर्वशब्दे रेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इत्यत्र रेफस्य वकारात्परत्वेनोपादानात् 'विप्रतिषेधे परं कार्यम्' (पा. सू. २-२-१३) इति पाणिनीयन्यायाश्रयणाद्रेफस्यैव लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना वकारस्य द्वित्वे टापि सव्वेति गङ्गावद्रूपमिति भावः॥

[2] विश्वादय इति॥ आकारान्ताः स्त्रीलिङ्गा इति शेषः॥

इत्याकारान्तस्त्रीलिङ्गसर्वनामशब्दाः.

---

[3] जेति॥ यच्छब्दात् स्त्रीलिङ्गात् सौ तस्य 'सोर्लुक्' (प्रा. सू. २-२-९) इति लुकि 'आदेर्जः' (प्रा. सू. १-३-७४) इति यकारस्य जकारे सति जा इति रूपं बोध्यम्॥

[4] जाओ इत्यादि॥ स्त्रीलिङ्गात् यच्छब्दात् जसि 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इति वक्ष्यमाणसूत्रेण ङीप्रत्ययाभावपक्षेटापि याकारान्ततया 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इति जसः शो-शु-इत्यादेशयोर्यकारस्य जकारादेशे च जाओ जाउ इति, शोश्वादेशयोर्वैकल्पिकत्वात्तदुभयाभावपक्षे 'श्लुग्जश्शसोः' (प्रा सू २-२-३) इति जसः श्लुकि जा इतीत्याहत्य रूपत्रयं बोध्यमिति भावः॥

[5] ङिदिति॥ अत्र त्रिविक्रमवृत्तिचन्द्रिकयोः 'पुंसोऽजातेः' (प्रा. सू. २-२-३७) इति सूत्रे ङीबिति पाठमभिप्रेत्य तस्यात्राप्यनुवृत्त्या ङीब्वा स्यादित्येतत्सूत्रार्थो दर्शितः॥

[1] जीओ जीउ। 'आदीतस्सोश्च' (प्रा. सू. २-२-३३) इति जश्शसो-रात्वे जीआ जी। अमि [2] जं। शसि[3]—जा जाओ जाउ जी जीओ जीउ जीआ, सप्त। 'टाङिङसां' (प्रा. सू. २-२-३५) 'नातश्शा' (प्रा. सू. २-२-३६) जाअ जाइ जाए जीअ जीआ जीइ जीए, सप्त[4]। [5] जाहिं ३।

---

[1] जीओ इत्यादि ॥ स्त्रीलिङ्गाद्यच्छब्दाज्जसि परतः 'किंयत्तदो' (प्रा. सू. २-२-४०) इत्यादिना ङिति ईप्रत्यये सति तस्य ङित्त्वात् अत्-इति टेर्लोपे यकारस्य जादेशे जसश्च शोशु-इत्यादेशद्वयपक्षे जीओ जीउ इति, शोश्वादेशाभावपक्षे 'आदीतस्सोश्च' (प्रा. सू. २-२-३३) इति जस आत्वपक्षे जीआ इति, आत्वस्यापि वैकल्पिकत्वात्तद-भावपक्षे जसः श्लुकि जी इति चत्वारि रूपाणि, ङीत्वाभावपक्षे पूर्वप्रदर्शितानि जाओ जाउ जा इति त्रीणि रूपाणीत्याहत्य जसि सप्त रूपाणि निष्पद्यन्त इति भावः। अत्र चन्द्रिकायां जीआ इति सप्तमरूपस्योदाहरणं गलितमिति भाति ॥

[2] जमिति ॥ स्त्रियां यच्छब्दात् द्वितीयैकवचनेऽमि 'स्वरस्य बिन्दुमि' (प्रा. सू. १-२-३९) इत्याकारस्य ह्रस्वे 'अमः' (प्रा. सू. २-२-२) इत्यमो मत्वे यकारस्य जकारे च सति जमिति रूपमिति भावः। 'त्यदादेस्संबोधनं नास्तीत्युत्सर्गः' इत्यभि-प्रायेण आकारान्तसाधारणस्त्रीलिङ्गशब्दवद्रूपमित्यभिप्रायेण वाऽत्र सम्बोधनप्रथमाया अप्रदर्शनमिति बोध्यम् ॥

[3] जेत्यादि ॥ जस्वदेवात्र जा-इत्यादीनि सप्त रूपाणीति भावः ॥

[4] सप्तेति ॥ स्त्रीलिङ्गाद्यच्छब्दात् तृतीयैकवचने टाप्रत्यये 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इति ङीप्रत्यये ङित्त्वाट्टेर्लोपे यकारस्य 'आदेर्जः' (प्रा.सू. १-३-७४) इति जकारादेशे सति ईकारान्तत्वेन 'नातश्शा' (प्रा. सू. २-२-३६) इत्यनेन निषेधाभावात् 'टाङिङसाम्' (प्रा. सू. २-२-३५) इत्यनेन टाप्रत्ययस्य शशाशिशे—इत्यादेशचतुष्टये सति जीअ जीआ जीइ जीए इति चत्वारि रूपाणि, तथा ङी-इत्यादेशस्य वैकल्पिकत्वात्तदभावपक्षे टाप्याकारान्ततया 'नातश्शा' (प्रा. सू. २-२-३६) इति शात्वस्य निषेधाच्छिष्टेषु शशिशे-इत्यादेशेषु त्रिषु सत्सु जाअ जाइ जाए इति त्रीणि रूपाणीत्याहत्य सप्त रूपाणीति भावः ॥

[5] जाहिं ३ इति ॥ स्त्रियां यच्छब्दात्तृतीयाबहुवचने भिसि तस्य 'हिंहिँहि-भिसः' (प्रा. सू. २-२-५) इति हिमाद्यादेशत्रये जाहिं जाहिँ जाहि इति रूपत्रय-मिति भावः ॥ इदमुपलक्षणं—टाप्रत्यये परतः 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इत्यनेन यच्छब्दात्स्त्रीप्रत्ययस्य ङी-इत्यस्य प्रवृत्त्या तत्रापि पूर्ववद्भिसो हिमाद्यादेशत्रये जीहिं जीहिँ जीहि इति रूपत्रयस्यापीति बोध्यम् ॥

**ङसौ [1]टावत्, जाहिन्तो इत्यादि च। [2]भ्यसि स्पष्टम्। ङसि तु—'किंयत्तद्भ्यो ङसः' (प्रा. सू. २-२-६७) इति सश्, जास जीस जाअ जाइ इत्यादि च सप्त॥**

## ईतस्सेसार् ॥ २–२–६८ ॥

**ईकारान्तेभ्यः किंयत्तद्भ्यः परस्य ङसः से सा वा स्तः। सा इत्यस्य रित्वात् द्वित्वम्। जीसे जिस्सा, [3]एकादश। [4]आमि—जाण जाणं**

---

[1] **टावत्, जाहिंतो इत्यादि चेति॥** स्त्रियां यच्छब्दात्पञ्चम्येकवचने ङसिप्रत्यये सति स्त्रियां ङी-प्रत्ययपक्षे तस्मादीकारान्तात्परस्य ङसेः 'ङसेः शशाशिशे' (प्रा. सू. २-२-३४) इत्यनेन शशाशिशे—इत्यादेशेषु, ङीप्रत्ययाभावपक्षे 'नातश्शा' (प्रा. सू. २-२-३६) इति शात्वनिषेधात् शिष्टेषु आकारान्तात्परस्य शशिशे इत्यादेशेषु च तृतीयैकवचनवत् सप्तरूपाणि। तथा ङसेः हिंतो-त्तो-दो-दु-इति पञ्चस्वादेशेषु सत्सु जाहिंन्तो जत्तो जाओ जाउ जीहिन्तो जित्तो जीओ जीउ इत्यष्टौ रूपाणीत्याहत्य पञ्चदशरूपाणीति भावः॥

[2] **भ्यसि स्पष्टमिति॥** स्त्रियां यच्छब्दात् पञ्चमीबहुवचने भ्यसि रमाशब्दवद्गौरीशब्दवच्च जासुन्तो जाहिन्तो जित्तो जाओ जाउ जीसुन्तो जीहिन्तो जित्तो जीओ जीउ इति दशरूपाणि बोध्यानीति भावः॥

[3] **एकादशेति॥** स्त्रीलिङ्गाद्यच्छब्दात् षष्ठ्येकवचने ङस्प्रत्यये सति प्रकृतेः परतया स्त्रीप्रत्ययस्य ङीप्रत्ययस्य प्रवृत्तिपक्षे तस्य ईकारान्ततया 'ईतस्सेसार्' (प्रा॰ सू. २-२-६८) इत्यनेन ङसः से—इत्यादेशपक्षे जीसे इति, सार्-इत्यादेशपक्षेतस्य रित्वात् 'रितो द्वित्वल्' (प्रा. सू. १-४-८५) इति द्वित्वे 'संयोगे' (प्रा. सू.१-२-४०) इत्यनेन पूर्वस्य ह्रस्वे जिस्सा इति, सेसारादेशयोर्द्वयोरपि वैकल्पिकत्वात्तदुभयाभावपक्षे 'टाङिङस्साम्' (प्रा. सू. २-२-३५) इत्यनेन ङसश्शशाशिशे—इत्यादेशेषु जीअ जीआ जीइ जीए इति पञ्चरूपाणि, शशाशिशे इत्यादेशानामपि वैकल्पिकत्वात्तदभावपक्षे 'किंयत्तद्भ्यो ङसः' (प्रा. सू. २-२-६७) इति ङसस्सशादेशे जीस इतीत्याहत्य ईकारान्तात् सप्तरूपाणि, ङीप्रत्ययस्य वैकल्पिकत्वात्तदभावपक्षे टाप्याकारान्तनया 'नातश्शा' (प्रा. सू. २-२-३६) इति शादेशनिषेधात् शिष्टेषु शशिशे इति त्रिष्वादेशेषु तदभावक्षे पूर्ववत्सशादेशे च जाअ जाइ जाए जास इति चत्वारि रूपाणीत्याहत्य एकादशरूपाणीति भावः॥

[4] **आमीत्यादि॥** स्त्रीलिङ्गाद्यच्छब्दात् षष्ठीबहुवचने आमि तस्य 'आमां डेसिं'

जेसिं ३। क्वचित् जासं तासं इति लिखन्ति, तल्लेखकदोषमूलम्। [1] यद्वा यासां तासामित्यतस्सिद्धावस्थात् [2] ह्रस्वत्वे। [3] ङौ—जीअ जाअ इत्यादि सप्त। 'अनिदमेतदस्तु किंयत्तदः स्त्रियां च हिं' (प्रा. सू. २-२-६४) [4] जीहिं जाहिं।

---

(प्रा. सू. २-२-६५) इति डेसिमादेशपक्षे जेसिं इति, तस्य वैकल्पिकत्वात्तदभावपक्षे 'णशामः' (प्रा. सू. २-२-४) इति णशादेशे णात्परं बिन्दुतदभावपक्षयोश्च जाणं जाण इतीत्याहत्य त्रीणि रूपाणीति भावः। अत्र चन्द्रिकायां डेसिमादेशघटितरूपप्रदर्शनं गलितमिति भाति। अत्रोत्तरत्र 'जेसिं ३' इत्युक्तिदर्शनात् 'तदिदमेतदां' (प्रा. सू. २-२-८३) इत्यादिना आम्विशिष्टस्य से-सिं—इत्यादेशद्वयमपि भवतीति पञ्चरूपाण्यामीत्येतद्वृत्तिकृदभिमतानीति प्रतिभाति॥

[1] यद्वेति॥ सति प्रयोगे निर्वाहप्रदर्शनार्थमिदमिति मन्तव्यम्॥

[2] ह्रस्वत्व इति॥ प्रयोगानुरोधेन क्वचित् संस्कृतगतसिद्धावस्थरूपमादायापि प्राकृते प्रयोगनिर्वाहदर्शनात् यासां तासामिति संस्कृतगतं स्त्रीलिङ्गयोर्यत्तच्छब्दयोः सिद्धावस्थं रूपमादाय द्वितीयैकवचने बिन्दौ च परतः स्वरस्य ह्रस्वो भवतीत्यर्थकेन 'स्वरस्य बिन्द्वमि' (प्रा. सू. १-२-३९) इत्यनेन आकारस्य ह्रस्वे सति यासं तासं इति रूपद्वयं निर्वाह्यमिति भावः॥

[3] ङावित्यादि॥ स्त्रीलिङ्गाद्यच्छब्दात् सप्तम्येकवचने ङिप्रत्यये परे 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इति ङीप्रत्यये सति 'टाङिङसाम्' (प्रा. सू. २-३-३५) इत्यनेन ङिप्रत्ययस्य शशाशिशे—इत्यादेशचतुष्टये यस्य जादेशे च सति जीअ जीआ जीइ जीए इति, ङीप्रत्ययस्य वैकल्पिकत्वात्तदभावपक्षे आकारान्ततया 'नातश्शा' (प्रा सू. २-३-३६) इति ङेः शात्वनिषेधेन शिष्टेषु शशिशे इति त्रिष्वादेशेषु सत्सु जाअ जाइ जाए इतीत्याहत्य सप्तरूपाणीति भावः॥

[4] जीहिमिति॥ स्त्रीलिङ्गाद्यच्छब्दात् सप्तम्येकवचने ङिप्रत्यये परत एव प्रकृतेर्ङीप्रत्ययतदभावपक्षयोः 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इत्यादिना ङेर्हिमादेशे जीहिं जाहिं इत्यन्यदपि पूर्वप्रदर्शितरूपसप्तकादधिकं रूपद्वयमिति भावः। अत्र 'बाहुलकादेव किंयत्तदोऽस्वमामीति ङी न भवति' इति त्रिविक्रमदेवोक्त्या तत्पक्षे हिमादेशे 'जीहिं' इति रूपं नास्तीति ज्ञायते। चन्द्रिकाकृत्तु 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इत्यत्र अत इत्यनुवृत्त्या ङीप्रत्ययपक्षे ईकारान्ततया हिमादेशो न प्रवर्तत इत्यभ्युपैति। नन्वेवं ङीप्रत्ययाभावपक्षे आकारान्ततया तस्मिन् सूत्रे अत इत्यनुवृत्त्या कथमाकारान्तेऽप्येतन्मते हिमादेशप्रवृत्तिरिति चेत्, तस्यायमाशयः—

[1] जासु जीसु जासुं जीसुं ॥

इति स्त्रीलिङ्गो यच्छब्दः.

---

तच्छब्दे—

**तस्सौ सोऽक्लीबे तदश्च ॥ २-२-८९ ॥**

[2]सा। जसि[3]—ताओ ताउ। 'किंयत्तदोऽस्वमामि' (प्रा. सू. २-२-४०)

---

किंयत्तदां स्त्रियां नियमेनानदन्ततया तत्र ङेर्हिमादेशविधानसार्थक्याय तत्रानुवृत्तस्यात इति विशेषणस्योपपत्तये च ह्रस्वत्वसमानाधिकरणाकारार्थके अत्पदार्थे ह्रस्वत्वसमानाधिकरणरूपविशेषणांशमात्रपरित्यागेनापि तत्र हिमादेशविथानसार्थक्यसम्भवेन दीर्घाकारान्ते ङेर्हिमादेशप्रवृत्तेरविरोध इति। एतद्वृत्तिकृत्तु हिमादेशविधानसार्थक्याय 'अनिदमेतदस्तु' इत्यस्मिन् सूत्रे 'किंयत्तदः स्त्रियां च हिं' इत्युत्तरवाक्ये अत इत्यस्याननुवृत्तिमभिप्रेत्य ईकारान्तेऽपि हिमादेशमभिप्रैति ॥

[1]जास्वित्यादि ॥ स्त्रीलिङ्गाद्यच्छब्दात् सप्तमीबहुवचने सुपि 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इत्यनेन विहितस्य स्त्रीप्रत्ययस्य वैकल्पिकतया तदभावपक्षे टाबन्ततया सुपस्सुकारात्परं 'क्त्वासुपोस्तु सुणात्' (प्रा. सू. १-१-४३) इति बिन्दुतदभावपक्षयोः जासुं जासु इति, तथा ङीप्रत्ययपक्षेऽपि बिन्दुतदभावपक्षयोश्च जीसुं जीसु इतीत्याहत्य चत्वारि रूपाणीति भावः ॥

इति स्त्रीलिङ्गो यच्छब्दः.

---

[2]सेति ॥ स्त्रीलिङ्गाट्टाबन्तात्तच्छब्दात्प्रथमैकवचने सुप्रत्यये 'सोर्लुक्' (प्रा. सू. (२-२-९) इति तस्य लुकि 'सा' इति रूपमिति भावः ॥

[3]जसीत्यादि ॥ स्त्रीलिङ्गात्तच्छब्दात्प्रथमाबहुवचने जसि 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इति ईकाररूपस्त्रीप्रत्ययपक्षे जसः 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) 'आदीतस्सोश्च' (प्रा. सू. २-२-३३) इति शो-शु-ई-इत्यादेशेषु तीओ तीउ तीआ इति, ङीप्रत्ययाभावपक्षे टापि जसः शो-शु-इत्यादेशयोः ताओ ताउ इति पञ्चरूपाणीति भावः। अत्रैव शो-शु-ई-इत्यादेशत्रितयस्यापि वैकल्पिकतया तत्त्रितयाभावपक्षे 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इत्यनेन जसःश्लुको दुर्निवा-

इति ङीत्वे तीओ तीउ 'आदीतस्सोश्च' (प्रा. सू. २-२-३३) तीआ। [1]अमि—तं। शसि—जस्वत्। [2]टा—ताअ ताइ ताए तीअ तीआ तीइ तीए। [3]भिसि—ताहिं३ तेहिं३। [4]ङसौ—टावत् ताअ तीअ इत्यादि, ताहिंतो इत्यादि च। [5]भ्यसि—ताहिंतो तीहिंतो इत्यादि। ङसि—ताअ तीअ इत्यादि सप्त। सश् तास तीस। 'ईतस्सेसार्' (प्रा. सू. २-२-६८) तीसे तिस्सा से [6]द्वादश।

---

रतयाऽत्र ईदन्तटान्तपक्षयोरुभयोरपि ती ता इत्यधिकं रूपद्वयं गोरी गङ्गा इति जसन्तवत्प्रदर्शनीयमिति प्रतिभाति॥

[1]अमि तं-इति॥ स्त्रीलिङ्गात्तच्छब्दाट्टाबन्ताद्द्वितीयैकवचने अम्प्रत्यये सति तस्य 'अमः' (प्रा. सू. २-२-२) इति मकारादेशे तस्य 'बिन्दुल्' (प्रा. सू. १-१-४०) इति बिन्दौ ततः पूर्वस्याकारस्य 'स्वरस्य बिन्द्वमि' (प्रा. सू. १-२-३९) इति ह्रस्वे च तं-इति रूपमिति भावः॥

[2]टेत्यादि॥ स्त्रीलिङ्गात्तच्छब्दाङ्डीप्रत्ययतदभावपक्षयोस्तृतीयैकवचने टा-प्रत्यये तस्य टाबन्तत्वपक्षे 'नातश्शा' (प्रा. सू. २-२-३६) इति शादेशनिषेधात् 'टाङिङसाम्' (प्रा. सू. २-२-३५) इत्यनेन शशिशे—इत्यादेशेषु ईदन्तत्वपक्षे शशाशिशे-इत्यादेशेषु च सत्सु ताअ ताइ ताए तीअ तीआ तीइ तीए इति सप्तरूपाणीति भावः॥

[3]भिसीत्यादि॥ स्त्रीलिङ्गात्तच्छब्दात्तृतीयाबहुवचने भिसि आदन्तेदन्तपक्षयोः भिसः 'हिंहिङ्हि भिसः' (प्रा. सू. २-२-५) इत्यनेन हिमाद्यादेशत्रये ताहिं ताहिँ ताहि तीहिं तीहिँ तीहि इति षड्रूपाणीति भावः॥

[4]ङसौ टावदित्यादि॥ पूर्वं यच्छब्दप्रकरणे 'ङसौ टावत्' इति प्रतीकोक्तरीत्याऽत्रापि ताहिंतो तत्तो ताओ ताउ तीहिंतो तित्तो तीओ तीउ ताअ ताइ ताए तीअ तीआ तीइ तीए इति पञ्चदश रूपाणीति भावः॥

[5]भ्यसीत्यादि॥ अत्रापि यच्छब्दवदेव भ्यसि ताहिंतो तीहिंतो तासुंतो तीसुंतो तत्तो तित्तो ताओ तीओ ताउ तीउ इति दश रूपाणीति भावः॥

[6]द्वादशेति॥ स्त्रीलिङ्गात्तच्छब्दात् षष्ठ्येकवचने ङसि तृतीयैकवचनवत् ङसः 'टाङिङसाम्' (प्रा. सू. २-२-३५) इति शशिशे-इत्यादेशेषु सत्सु तीअ तीआ तीइ तीए ताअ ताइ ताए इति सप्तरूपाणि, तथा 'किंयत्तद्भ्यो ङसः' (प्रा. सू. २-२-६७) 'ईतस्सेसार्' (प्रा. सू. २-२-६८) इति सूत्राभ्यां ङसः सश्सेसार्

[1] आमि—ताण ताणं सेसिं। 'तदिदमेतदां सेसिं तु ङसामा' (प्रा. सू. २-२-८४) सिं से पञ्च। ङौ—ताअ तीअ [2] इत्यादि। ताहिं तीहिं च। [3] क्वचित्सुपि तदो णत्वे अम्टाभिस्सु—तां णं। तया[4]णाअ णाइ इत्यादि। [5] णाहि इत्यादि यथाप्रयोगं द्रष्टव्यम्।

इति स्त्रीलिङ्गस्तच्छब्दः.

---

इत्यादेशेषु तास तीस तीसे तिस्सा इति, तथा ङस्विशिष्टस्य 'तदिदमेतदां' (प्रा. सू. २-२-८४) इत्यादिना से-इत्यादेशे से इतीत्याहत्य द्वादशरूपाणीति भावः॥

[1] आमीत्यादि॥ स्त्रीलिङ्गात्तच्छब्दात् षष्ठीबहुवचने आमि तस्य णशादेशे णात्परं बिन्दुतदभावपक्षयोः ताणं ताण इति, 'आमां डेसिं' (प्रा. सू. २-२-६५) इति डेसिमादेशे तेसिं इति 'तदिदमेतदां' (प्रा. सू. २-२-८४) इत्यादिना ङस्विशिष्टस्य सूत्रे प्रयोगानुरोधेन यथासंख्यपरिभाषामनादृत्य सेसिं—इत्यादेशद्वयस्याप्येतद्वृत्तिकाराभिमतत्वेन से सिं इतीत्याहत्य पञ्चरूपाणीति भावः। अत एव त्रिविक्रमवृत्तावपि 'तदेतदोरामा सह से—आदेशं कश्चिदिच्छति' इति तस्मिन्नेव सूत्रेऽभिहितं दृश्यते॥

[2] इत्यादि ताहिं तीहिं चेति॥ स्त्रीलिङ्गात्तच्छब्दात् सप्तम्येकवचने ङिप्रत्यये टाबन्तेदन्तपक्षयोः टावत् ङेः शशाशिशे—इत्यादेशेषु, तथा 'अनिदमेतदस्तु' (प्रा. सू. २-२-६४) इत्यादिना हिमादेशे च सति ताअ ताइ ताए तीअ तीआ तीइ तीए ताहिं तीहिं इति नव रूपाणीति भावः॥

[3] क्वचित्सुपीत्यादि॥ 'क्वचित्सुपि तदो णः' (प्रा. सू. २-२-७३) इत्यनेन स्त्रीलिङ्गात्तच्छब्दात् प्रयोगानुसारेण अम्टाभिस्सु परेषु तदो णादेशाभ्यनुज्ञानात् अमि परे तदो णादेशे सति णं इत्यपि रूपं बोध्यमिति भावः। त्रिविक्रमवृत्तावप्येवमेव अम्टाभिस्स्वेव णादेशघटितोदाहरणानि प्रदर्शितानि दृश्यन्ते॥

[4] णाअ णाइ-इत्यादीति॥ स्त्रीलिङ्गात्तच्छब्दात् तृतीयैकवचने टाप्रत्यये सति 'क्वचित्सुपि तदो णः' (प्रा. सू. २-२-७३) इति सूत्रेण तदो णादेशे स्त्रियां टापि च 'टाङिङसाम्' (प्रा. सू. २-२-३५) इत्यनेन तृतीयैकवचनस्य टाप्रत्ययस्य 'नातश्शा' (प्रा. सू. २-२-३६) इत्यनेन शात्वनिषेधाच्छिष्टेषु शशिशे-इत्यादेशेषु सत्सु णाअ णाइ णाए इति पूर्वोक्तरूपेभ्योऽधिकानि त्रीणि रूपाणीति भावः॥

[5] णाहि इत्यादीति॥ स्त्रीलिङ्गात्तच्छब्दात् तृनीयाबहुवचने भिस्यपि पूर्वप्रदर्शितरीत्या णादेशस्य प्रवृत्त्या भिसो हिमाद्यादेशत्रये सति पूर्वोक्तेभ्योऽधिकानि णाहिं णाहिँ णाहि इति त्रीणि रूपाणि बोध्यानीति भावः॥

इति स्त्रीलिङ्गस्तच्छब्दः.

[1] एतच्छब्दे—

'तस्सौ सोऽक्लीबे तदश्च' (प्रा. सू. २-२-८९) [1] एसा, [2] एआओ इत्यादि गङ्गावत् । 'टो डिणा' (प्रा. सू. २-२-७३) एत्तो एत्ताहे 'त्थे डेल्' (प्रा. सू. २-२-८६) 'सुनैस इणमो इणं' 'ङेर्हिं' अदितौ च [3] स्त्रियां न स्युः। [4] ङसि—से। (प्रा. सू. २-२-८८)

---

[1] एसा-इति ॥ 'एत्तो एत्ताहे ङसिनैतदः' (प्रा. सू. २-२-८५) इति सूत्रगृहीतस्य एतच्छब्दस्य 'तस्सौ सोऽक्लीबे तदश्च' (प्रा. सू. २-२-८९) इति सूत्रगतचशब्देन समुच्चयात् एतच्छब्दगततकारस्यापि सौ परतस्सकारादेशप्रवृत्त्या स्त्रीलिङ्गादेतच्छब्दात्सौ परतोऽन्त्यहल्लोपानन्तरं तकारस्य सत्वे टापि च एसा-इति रूपमिति भावः ॥

[2] एआओ-इत्यादि ॥ स्त्रीलिङ्गादेतच्छब्दाज्जसि अन्त्यहल्लोपानन्तरमदन्तत्वाट्टापि 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यादिना तकारस्य लुकि 'शोशु स्त्रियां तु' (प्रा. सू. २-२-१) इत्यनेन जसः शोशु-इत्यादेशयोः एआओ एआउ इति रूपद्वयमिति भावः। चन्द्रिकायां तु एतच्छब्दात् 'पुंसोऽजातेर्ङीब्वा' (प्रा. सू. २-२-३७) इत्यनेन ङीप्प्रवृत्तिमभ्युपेत्य अस्य ईकारान्तरूपाण्यप्युदाहृतानि ॥

[3] स्त्रियां न स्युरिति ॥ स्त्रीलिङ्गादेतच्छब्दात्तृतीयैकवचने 'इदमेतत्किंयत्तद्भ्यष्टो डिणा' (प्रा. सू. २-२-७३) इत्यत्रात इत्यनुवृत्त्याऽस्य टाबन्ततया प्रकृतेराकारान्तत्वेन ततः परस्य टाप्रत्ययस्य डिणादेशो न प्रवर्तते। तथा ङस्यपि प्रयोगानुरोधात् 'एत्तो एत्ताहे ङसिनैतदः' (प्रा. सू. २-२-८५) इति न प्रवर्तते। एवं सप्तम्येकवचनादेशयोः त्थम्म्यादेशयोः परतः 'त्थे डेल्' (प्रा. सू. २-२-८६) 'एतो म्मावदितौ' (प्रा. सू. २-२-८७) इति सूत्राभ्यां डेलादेशः अदिदादेशौ च प्रयोगानुरोधान्न प्रवर्तन्ते। एवमेव प्रथमैकवचनविशिष्टस्य स्त्रीलिङ्गस्य एतच्छब्दस्य 'सुनैस इणमो इणं' (प्रा. सू. २-२-८८) इत्यनेन एस-इणमो-इणं, इत्यादेशा न प्रवर्तन्ते। तथैव 'अनिदमेतदस्तु किंयत्तदः स्त्रियां च हिं' (प्रा. सू. २-२-६४) इत्यत्र अनिदमेतद इत्येतदः पर्युदासेन ङेर्हिमादेशश्च न प्रवर्तत इति भावः। चन्द्रिकायां तु प्रथमैकवचने 'सुनैस' इणमो इणं' (प्रा. सू. २-२-८८) इत्यनेनादेशत्रयप्रवृत्तिमभ्युपगम्य तथैवोदाहृतं दृश्यते ॥

[4] ङसि से इति ॥ स्त्रीलिङ्गादेतच्छब्दात् ङसि 'तदिदमेतदां सेसिं तु ङसाऽऽमा (प्रा. सू. २-२-८४) इत्यनेन ङस्विशिष्टस्यापि से-इत्यादेशविधानेन ङसि से इति रूपं गङ्गाशब्दाद्विशेष इति भावः ॥

[1] एएसिं इति विशेषः ।

इति स्त्रीलिङ्ग एतच्छब्दः.

---

इदंशब्दे—

'पुंसि सुना त्वयं स्त्रियामिमिआ' (प्रा. सू. २-२-७७) इमिआ, [2]पक्षे इदम इमः, (प्रा. सू. २-२-७६) स्त्रीत्वाट्टाप्, इमा इमाओ [3]इत्यादि गङ्गावत्। [4] 'टो डिणा' (प्रा. सू. २-२-७३) 'अत्सुस्सिंसहिस्से' (प्रा. सू. २-२-७८) 'टाससि णः' (प्रा. सू. २-२-७९) 'इहेणं ङ्यमा' (प्रा सू.

---

[1] एएसिमिति ॥ स्त्रीलिङ्गादेतच्छब्दात् आमि 'आमां डेसिं' (प्रा. सू. २-२-६५) इत्यत्र आमामिति लिङ्गत्रयसम्बन्धित्वेन बहुत्वमभिप्रेत्य तत्रत्यबहुवचननिर्देशस्य सार्थक्याभ्युपगमात् आमो डेसिमादेशे सति एएसिं इति गङ्गाशब्दाद्विलक्षणं रूपमिष्टमिति भावः ॥

इति स्त्रीलिङ्ग एतच्छब्दः.

---

[2] पक्ष इत्यादि ॥ स्त्रीलिङ्गस्य इदंशब्दस्य 'पुंसि सुना त्वयं स्त्रियामिमिआ' (प्रा. सू. २-२-७७) इत्यनेन विहितस्य इमिआदेशस्य वैकल्पिकत्वात्तदभावपक्षे 'इदम इमः' (प्रा. सू. २-२-७६) इत्यनेन इमादेशे ततोऽदन्तत्वात्स्त्रियां टापि सौ तस्य 'सोर्लुक्' (प्रा. सू. २-२-९) इति लुकि इमा इति रूपमिति भावः । चन्द्रिकाकृत्तु 'पुंसोऽजातेर्ङीब्वा' (प्रा. सू. २-२-३७) इत्यनेनात्र ङीप्प्रत्ययमभिप्रेत्य इमी इत्याद्यप्युदाजहार । तथा सिद्धावस्थामपेक्ष्य इअं इत्यपि ॥

[3] इत्यादीति ॥ स्त्रीलिङ्गादिदंशब्दाज्जसि पूर्ववदिमादेशे जसः 'शोशु स्त्रियां तु' (प्रा. सू. २-२-३२) इति शो-शु-इत्यादेशयोः इमाओ इमाउ इति रूपद्वयं गङ्गाशब्दवद्बोध्यमिति भावः ॥

[4] टो डिणेत्यादि ॥ इदंशब्दात्स्त्रियां टाप्याकारान्तत्वेन अदन्तात्परत्वाभावात् ततः परस्य टाप्रत्ययस्य 'इदमेतत्किंयत्तद्भ्यष्टो डिणा' (प्रा. सू. २-२-७३) इत्यनेन न डिणादेशः, 'अनिदमेतदः' (प्रा. सू. २-२-६४) इति पर्युदासान्न ङेर्हिमादेशः 'सुप्-ङि-भिस्-ङसामादेशेषु सु-स्सिं-हि-स्से-इत्येतद्रूपेषु प्रयोगानुरोधात् 'अत्सुस्सिं हिस्से' (प्रा. सू. २-२-७८) इत्यनेन इदमोऽदादेशो न, द्वितीयातृतीयाविभक्त्योः परत इदमः 'टाससि णः' (प्रा. सू. २-२-७९) इत्यनेन न णादेशः,

२-२-८०) 'ङेर्हिं' इति च न स्युः, [1] ङसि—से। आमि सिं इमेसिं इति विशेषः ॥

इति स्त्रीलिङ्ग इदंशब्दः.

---

अदश्शब्दे—

'सुप्यदसोऽमु' (प्रा. सू. २-२-९०) अमू[2], धेनुवत्। 'अहह्वा सुना' (प्रा. सू. २-२-९१) [3]अह महिळा। आमि—अमेसिं [4]इति विशेषः ॥

इति स्त्रीलिङ्गोऽदश्शब्दः.

---

द्वितीयासप्तम्येकवचनविशिष्टस्येदमः 'इहेणं ङ्यमा' (प्रा. सू. २-२-८०) इत्यनेन इणादेशेहादेशौ च प्रयोगानुरोधान्न प्रवर्तन्त इति भावः। चन्द्रिकायां तु—'अत्सुस्सिंहिस्से' (प्रा. सू. २-२-७८) 'इहेणं ङ्यमा' (प्रा. सू. २-२-८०) इति सूत्रयोरत्र प्रवृत्तिमभिप्रेत्य अदिहेणादेशघटितरूपाण्युदाहृतानि दृश्यन्ते ॥

[1] ङसि से, आमि सिं इमेसिमिति विशेष इति ॥ स्त्रीलिङ्गादिदंशब्दात् षष्ठ्येकवचने ङसि 'तदिदमेतदां' (प्रा. सू २-२-८४) इत्यनेन प्रकृतिप्रत्ययोभयविशिष्टस्य से-इत्यादेशेन से इति गङ्गाशब्दापेक्षयाऽधिकमेकं रूपम्, आमि तथैव सिं इति, 'आमां डेसिं' (प्रा. सू. २-२-६५) इत्यनेन डेर्डेसिमादेशे 'इदम इमः' (प्रा. सू. २-२-७६) इतीदम इमादेशे च इमेसिं इतीत्याहत्य गङ्गाशब्दापेक्षयाऽधिकं रूपद्वयमिति भावः ॥

इति स्त्रीलिङ्ग इदंशब्दः.

---

[2] अमू इति ॥ स्त्रीलिङ्गाददश्शब्दात् प्रथमैकवचने सुप्रत्यये सति 'सुप्यदसोऽमु' (प्रा. सू. २-२-९०) इत्यदसः अमु-इत्यादेशे सोश्च 'श्लुगनपि सोः' (प्रा. सू. २-२-२९) इत्यनेन श्लुकि तस्य शित्त्वात्पूर्वस्य 'शिति दीर्घः' (प्रा. सू. १-१-१५) इति दीर्घे च अमू इति धेनुशब्दवद्रूपमिति भावः ॥

[3] अहेति ॥ स्त्रीलिङ्गाददश्शब्दात्सावेव 'अहह्वा सुना' (प्रा. सू. २-२-९१) इत्यनेन सुविशिष्टस्यादसः 'अह' इत्यादेशे सति अह इत्यन्यदपि रूपमिति भावः ॥

[4] इति विशेष इति ॥ स्त्रीलिङ्गाददश्शब्दात् षष्ठीबहुवचने आमि सति 'सुप्यदसोऽमु' (प्रा. सू. २-२-९०) इत्यदसोऽमु—इत्यादेशे आमश्च 'आमां डेसिं'

किंशब्दे—

'त्रे तसि च किमो क्कः' (प्रा. सू. २-२-७५) स्त्रियां टापि [1] का। जसादौ [2] ङीत्वे कीओ। [3] पक्षे—काओ, [4] इत्यादि गङ्गावत् गौरीवच्च। [5] स्वमामि गङ्गावदेव। स्त्रियां 'किंतद्भ्यां सश्' (प्रा. सू. २-२-६६) 'म्हा ङसेः' (प्रा. सू. २-२-७०) 'किमो डीसडिणौ' (प्रा. सू. २-२-७१)

---

(प्रा. सू. २-२-६५) इति डेसिमादेशे तस्य डित्वात्तत्पूर्वस्य टेरुकारस्य लोपे सति अमेसिं इति धेनुशब्दतो विशेष इति भावः। चन्द्रिकाकृत्तु 'आमां डेसिम्' (प्रा. सू. २-२-६५) इत्यत्र अत इत्यनुवृत्त्याऽत्र डेसिमादेशाप्रवृत्त्या 'अमूण अमूणं' इति रूपद्वयमभिप्रैति। एवं त्रिविक्रमवृत्तावपि। अत्रापि वृत्तौ तत्र सूत्रेऽत इत्यनुवृत्त्यभिप्रायेणार्थस्य वर्णितत्वेन अत्र डेसिमादेशः कथमिति परिचिन्तनीयम्॥

इति स्त्रीलिङ्गोऽदश्शब्दः.

---

[1] केति॥ स्त्रीलिङ्गात् किंशब्दात्सौ 'त्रे तसि च किमो क्कः' (प्रा. सू. २-२-७५) इत्यनेन किमः कादेशे टापि सोर्लुकि च का-इति रूपमिति भावः॥

[2] ङीत्व इति॥ 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इत्यनेन सु-अम्-आम्भिन्ने जसादौ टाब्बाधको ङीप्रत्ययो विकल्पेन प्रवर्तत इत्यर्थः। पूर्वोक्तसूत्रेण ङीप्रत्ययो विधीयत इति चन्द्रिकात्रिविक्रमवृत्त्योर्दृश्यते॥

[3] पक्ष इति॥ 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इत्यनेन विधीयमानङीत्वस्य वैकल्पिकत्वात्तदभावपक्ष इत्यर्थः॥

[4] इत्यादि गङ्गावद्गौरीवच्चेति॥ 'किंयत्तदोऽस्वमामि सुपि' (प्रा.सू. २-२-४०) इत्यनेन विधीयमानस्य ङीत्वस्य वैकल्पिकतया तदभावपक्षे अस्वमामि सुपि टाप्याकारान्ततया गङ्गाशब्दवत्, ङीत्वपक्षे गौरीशब्दवच्च रूपाणीति भावः। ततश्च स्त्रीलिङ्गात्किंशब्दात्प्रथमाबहुवचने जसि किमः कादेशे ङीप्रत्ययपक्षे जसः 'शोशु स्त्रियां तु' (प्रा. सू. २-२-२२) 'श्लुग्जश्शसोः' (प्रा. सू. २-२-३) इति सूत्राभ्यां जसः शोशुश्लुगादेशेषु सत्सु कीओ कीउ की इति, ङीत्वाभावपक्षे टाप्याकारान्ततया पूर्ववत् जसः शोशुश्लुगादेशेषु सत्सु काओ काउ का इतीत्याहत्य षड्रूपाणीति भावः॥

[5] स्वमामि गङ्गावदेवेति॥ स्त्रीलिङ्गात्किंशब्दात् प्रथमैकवचनद्वितीयैकवचनषष्ठीबहुवचनेषु 'किंयत्तदो' (प्रा. सू. २-२-४०) इति सूत्रे अस्वमामीति

**'किंयत्तद्भ्यष्टो ङिणा'** (प्रा. सू. २-२-७२) इति च [1]न स्युः। ङसि— **'किंयत्तद्भ्यो ङसः'** (प्रा. सू. २-२-६७) इति [2]सश्वा। कास कीस, पक्षे काए कीए इत्यादि। **'ईतस्सेसार्'** (प्रा. सू. २-२-६८) कीसे किस्सा [3]आमि—काणं काण केसिं,

---

पर्युदासाङ्गीप्रत्ययाप्रवृत्त्या टाप्याकारान्तत्वेन गङ्गाशब्दवदेव रूपाणि बोध्यानीति भावः॥

[1]**न स्युरिति**॥ 'किंतद्भ्यां सश्' (प्रा. सू. २-२-६६) 'म्हा ङसेः' (प्रा. सू. २-२-७०) 'किमो डीसडिणौ' (प्रा. सू. २-२-७१) 'किंयत्तद्भ्यष्टो ङिणा' (प्रा. सू. २-२-७२) इति सूत्रेषु 'सर्वादिर्जसोऽतो डे' (प्रा. सू. २-२-६२) इत्यतोऽत इत्यनुवृत्त्या स्त्रियां किंशब्दस्यानदन्तत्वात्ततः परेषां टादीनां विभक्तीनां न ङिणाद्यादेशाः प्रवर्तन्त इति भावः॥

[2]**सश्वेत्यादि**॥ प्रयोगानुरोधेन बहुलग्रहणेन च 'किंयत्तद्भ्यो ङसः' (प्रा. सू. २-२-६७) इत्यत्र अत इत्यस्याननुवृत्त्या किंशब्दात्स्त्रियां टाबन्तात्परस्य ङसस्सशादेशपक्षे कास इति, 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इति डीत्वपक्षे ईकारान्तात्परस्य ङसस्सशादेशपक्षे कीस इति, सशादेशाभावपक्षे च आकारान्तत्वपक्षे ङसः स्थाने 'टाङिङसाम्' (प्रा. सू. २-२-३५) इति सूत्रविहितानां 'नातः शा' (प्रा. सू. २-२-३६) इति शाभावनिषेधाच्छिष्टानां शशिशे—इत्यादेशानां प्रवृत्तौ काअ काइ काए इति, ईकारान्तत्वपक्षे शशाशिशे—इति चतुर्णामप्यादेशानां प्रवृत्तौ कीअ कीआ कीइ कीए इति, ईकारान्तत्वपक्ष एव ङसः 'ईतस्सेसार्' (प्रा. सू. २-२-६८) इति ङसः सेसार्—इत्यादेशद्वयस्य विधानेन से-इत्यादेशपक्षे कीसे इति, सारादेशपक्षे तस्य रित्वाद्दित्वे तत्पूर्वस्य दीर्घेकारस्य 'संयोगे' (प्रा. सू. १-२-४०) इत्यनेन ह्रस्वे किस्सा इतीत्याहत्य एकादशरूपाणीति भावः॥

[3]**आमीत्यादि**॥ स्त्रीलिङ्गात्किंशब्दात् षष्ठीबहुवचने आमि 'किंयत्तदोऽस्वमामि सुपि' (प्रा. सू. २-२-४०) इत्यत्र अस्वमामीति पर्युदासाङ्गीप्रत्ययाप्रवृत्त्या टाप्यामो णशादेशे णात्परं बिन्दुतदभावपक्षयोः काणं काण इति, 'आमां डेसिम्' (प्रा. सू. २-२-६५) इत्यत्रत्यबहुवचनस्य लिङ्गत्रयाभिप्रायकत्वेन स्त्रियामप्यामो डेसिमादेशस्येष्टतया डेसिमादेशे केसिं इतीत्याहत्य रूपत्रयमिति भावः॥ चन्द्रिकायां तु केसिं इति रूपं नोदाहृतं दृश्यते॥

[1] इत्यादि। ङौ—काहिं कीहिं इति [2] विशेषः॥

इति स्त्रीलिङ्गः किंशब्दः.

इति स्त्रीलिङ्गाः सर्वनामविशेषशब्दाः.

---

# अथ नपुंसकलिङ्गाः सर्वनामविशेषशब्दाः.

नपुंसकविषये— सव्वं। जसि—[3] अदन्तत्वाङ्ङ सव्वे धणाइं। शसि—

---

[1] इत्यादीति॥ आमि पूर्वप्रदर्शितरूपत्रितयातिरिक्तरूपान्तरसाधकानुशासनानुपलम्भात् 'किंतद्भ्यां सश्' (प्रा. सू. २-२-६६) इत्यस्य पूर्वमत्रैव वृत्तौ स्त्रियामप्रवृत्त्यभिधानाच्चेदं वचनान्तररूपप्रदर्शनाभिप्रायकं स्यादिति भाति॥

[2] विशेष इति॥ स्त्रीलिङ्गात्किंशब्दात् सप्तम्येकवचने ङिप्रत्यये आकारान्तेकारान्तपक्षयोः तृतीयैकवचनवत् काअ काइ काए कीअ कीआ कीइ कीए इति रूपसप्तकस्य गङ्गागौरीशब्दवत्सिद्धतया ततो विलक्षणं 'अनिदमेतदस्तु किंयत्तदः' (प्रा. सू. २-२-६४) इत्यत्र स्त्रियामपीत्युक्त्याऽत इत्यस्य तत्राननुवृत्तेरीकारान्तपक्षेऽपि ङेर्हिमादेशप्रवृत्त्या काहिं कीहिं इत्यधिकं रूपद्वयमत्र बोध्यमिति भावः। चन्द्रिकायां तु हिमोऽकारान्तविषयत्वान्नेकारान्तत्वपक्षे हिमादेश इत्युक्तं दृश्यते। तदिदं यच्छब्दप्रक्रियानिरूपणे पूर्वं सविस्तरमभिहितं द्रष्टव्यम्॥

इति स्त्रीलिङ्गः किंशब्दः.

इति स्त्रीलिङ्गसर्वनामविशेषशब्दाः.

---

## अथ सर्वनामनपुंसकलिङ्गविशेषशब्दाः.

[3] अदन्तत्वादित्यादि॥ क्लीबात्सर्वनामसंज्ञकसर्वशब्दात्प्रथमाबहुवचने जसि तस्य 'सर्वादेर्जसोऽतो डे' (प्रा. सू. २-२-६२) इत्यनेन डे—इत्यादेशे तस्य डित्त्वात्तत्पूर्वस्याकारस्य लोपे रेफस्य 'लवरामधश्च' (प्रा. सू. १-४-७८) इति परविप्रतिषेधाल्लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना शिष्टस्य वकारस्य द्वित्वे च सव्वे इति रूपमिति भावः। चन्द्रिकायां तु लक्ष्मीधरः 'सर्वादेर्जसोऽतो डे'

[1] 'श्निंशिशिङ्' सव्वाइं । शेषं [2] पुंवत् । एवं विश्वादयः ॥

इत्यकारान्तनपंसुकलिङ्गसर्वनाम[3]शब्दाः.

---

यच्छब्दे—

[4] जं जे । शसि—जाणि जाइं जाइँ । शेषं पुंवत् ।

इति नपुंसकलिङ्गो यच्छब्दः.

---

(प्रा. सू. २-२-६२) इत्यस्य पुल्लिङ्गविषयत्वमभिप्रयन् जसः 'श्निंशिशिङ्' (प्रा. सू. २-२-३१) इत्यादिना श्नयाद्यादेशत्रयेण सव्वाणि सव्वाइं सव्वाइँ इति रूपत्रयमाह । 'पुंस्याणो' (प्रा सू. २-२-६०) इति पूर्वसूत्रात्तत्र पुंसीत्यनुवृत्तिरिति तदाशयस्स्यादिति भाति । ततश्च तन्मते जसि सव्वे इति रूपमनिष्टमिति प्रतीयते । एतद्ग्रन्थकृन्मते तु जसि सव्वाणीत्यादिरूपत्रयमनिष्टमिति प्रतीयते । प्रयोगानुरोधादिदं निर्णयमिति भाति ॥

[1] श्निंशिशिङिति ॥ नपुंसकलिङ्गात्सर्वशब्दात् द्वितीयाबहुवचने शसि तस्य 'श्निंशिशिङ् जश्शसोः' (प्रा. सू. २ २-३१) इत्यनेन नि-इं-इँ-इत्यादेशेषु सत्सु तेषां शित्त्वात्तत्पूर्वस्याकारस्य दीर्घे च सव्वाणि सव्वाइं सव्वाइँ इति त्रीणि रूपाणीति भावः ॥

[2] पुंवदिति ॥ पुंलिङ्गसर्वशब्दवदित्यर्थः ॥

[3] शब्दा इति ॥ इकारान्तस्य सर्वनाम्नो द्विशब्दस्य सत्त्वेऽपि तस्य लिङ्गत्रयेऽप्यैकरूप्यमिति (२१३ पृष्ठे) पूर्वमुक्तमिति तस्यात्रानुक्तिरिति बोध्यम् ॥

इत्यकारान्तनपुंसकलिङ्गसर्वनामशब्दाः.

---

[4] जमिति ॥ क्लीबाद्यच्छब्दात्सौ सति 'आदेर्जः' (प्रा. सू. १-३-७४) इत्यनेन यच्छब्दस्यादेर्यकारस्य जकारे अन्त्यस्य दकारस्य 'अन्त्यहलोऽश्रुदि' (प्रा. सू. १ १-२५) इति लोपे 'मङ्लुक्' (प्रा. सू. २-२-३०) इत्यादिना सोर्मकारादेशे बिन्दौ च जं इति रूपं बोध्यम् । शसन्तं सर्वशब्दवद्रूपाणि बोध्यानि । शेषं पुंलिङ्गयच्छब्दवत् ॥

इति नपुंसकलिङ्गो यच्छब्दः.

---

तच्छब्दे—

तं । [1] अक्लीब इत्युक्तेर्न तस्सौ सः । ते धणाइं । शसि—ताणीत्यादि । शेषं पुंवत् । [2] क्लीबे 'वैतत्तदः' (प्रा. सू. २-२-१४) इति न प्रवर्तते ॥

इति नपुंसकलिङ्गस्तच्छब्दः.

---

एतच्छब्दे—

[3] प्राग्वत्सत्वडोत्वाभावः । एअं । एए । शसि—[4]एआणि इत्यादि । [5] शेषं पुंवत् ॥

इति नपुंसकलिङ्ग एतच्छब्दः.

---

[1] अक्लीब इत्युक्तेरिति ॥ क्लीबात्तच्छब्दात्सौ परे 'तस्सौ सोऽक्लीबे तदश्च' (प्रा. सू. २-२-८९) इत्यत्र अक्लीब इति पर्युदासान्नात्रत्यतकारस्य सकारादेश इत्यर्थः ॥

[2] क्लीबे वैतत्तद इति न प्रवर्तत इति ॥ तच्छब्दात्परस्य सोः 'वैतत्तदः' (प्रा. सू. २-२-१४) इति सूत्रेण विधीयमानो डो—इत्यादेशः 'डो पुंस्येवेति वाच्यम्' इति वार्तिकबलात्क्लीबे न प्रवर्तत इत्यर्थः ॥

इति नपुंसकलिङ्गस्तच्छब्दः.

---

[3] प्राग्वदिति ॥ क्लीबादेतच्छब्दात्प्रथमैकवचने सुप्रत्यये सति 'तस्सौ सोऽक्लीबे तदश्च' (प्रा. सू. २-२-८९) इत्यनेन विधीयमानस्तकारस्य सकारादेशः 'अक्लीबे' इति तत्र पर्युदस्तत्वात्तच्छब्दवदत्रापि न प्रवर्तते । एवं 'वैतत्तदः' (प्रा. सू. २-२-१४) इत्यनेन सोर्विधीयमानो डो इत्यादेशश्च 'डो पुंस्येवेति' इति वार्तिकात्तच्छब्द इवात्रापि न प्रवर्तत इति भावः ॥

[4] एआणि-इत्यादीति ॥ 'शिनशिंशिङ् जश्शसोः' (प्रा. सू. २-२-३१) इत्यनेन क्लीबादेतच्छब्दात्परस्य शसः शकारेत्केषु नि-इं-इँ-इत्यादेशेषु सत्सु अन्त्यहलो दकारस्य लोपानन्तरं शिदादेशपूर्ववर्तिन अकारस्य दीर्घे च एआणि एआइं एआइँ इति त्रीणि रूपाणीति भावः ॥

[5] शेषं पुंवदिति ॥ तृतीयैकवचनप्रभृति पुंलिङ्गैतच्छब्दवद्रूपाणि ज्ञेयानीत्यर्थः ॥

इति नपुंसकलिङ्ग एतच्छब्दः.

---

इदंशब्दे—

## क्लीबे स्वमेदमिणमिणमो ॥ २-२-८२ ॥

क्लीबे इदमः स्वमा सह त्रय एते स्युः । इदं इणं इणमो । [1] जसि--इमे । [2] शसि-इमाणि इत्यादि । [3] शेषं पुंवत् ॥

इति नपुंसकलिङ्ग इदंशब्दः.

---

किंशब्दे—

## किं किमः ॥ २-२-८३ ॥

किमः स्वमा सह [4] किमेव स्यात् । किं । [5] जसि—के । [6] शसि-

---

[1] जसि इमे इति ॥ क्लीबादिदंशब्दात् प्रथमाबहुवचने जस्प्रत्यये 'इदम इमः' (प्रा. सू. २-२-७६) इतीदम इमादेशे 'सर्वादेर्जसोऽतो डे' (प्रा. सू. २-२-६३) इति जसो डे-इत्यादेशे डित्त्वाट्टिलोपे च इमे इति रूपमिति भावः ॥

[2] शसीत्यादि ॥ क्लीबादिदंशब्दात् द्वितीयाबहुवचने शसि इदम इमादेशे 'श्निशिंशिङ् जश्शसोः' (प्रा. सू. २-२-३१) इत्यनेन श्नि-इत्याद्यादेशत्रये सति इमाणि इमाइं इमाइँ इति त्रीणि रूपाणीति भावः ॥

[3] शेषं पुंवदिति ॥ अवशिष्टं सर्वमपि रूपं पुंलिङ्गेदंशब्दवदित्यर्थः ॥

इति नपुंसकलिङ्ग इदंशब्दः.

---

[4] किमेव स्यादिति ॥ प्रकृतसूत्रेण किमः किमादेशविधानं 'त्रे तसि च किमो ल्कः' (प्रा. सू. २-२-७५) इति लितः कादेशस्य बाधनायेति भावः । तथाच क्लीबात्किंशब्दात् सौ तस्य लुकि च किं इति रूपं सिद्धम् । चन्द्रिकात्रिविक्रमवृत्त्योस्तु 'किं किं' इत्येतत्सूत्रपाठो दृश्यते ॥

[5] जसि के इति ॥ 'सर्वादेर्जसोऽतो डे' (प्रा. सू. २-२-६३) इति जसो डे-इत्यादेशप्रवृत्त्या के इति रूपमिति भावः ॥

[6] शसि काइ इत्यादि ॥ क्लीबात्किंशब्दाच्छसि किमः कादेशे 'श्निशिंशिङ् जश्शसोः' (प्रा. सू. २-२-३१) इत्यनेन शसः श्निमाद्यादेशत्रये च सति काणि काइं काइँ इति रूपत्रयमिति भावः ॥

काइ, इत्यादि । [1]शेषं पुंवत् ॥

इति नपुंसकलिङ्गः किंशब्दः.

इति नपुंसकलिङ्गसर्वनामविशेषशब्दाः.

---

## अथ स्त्रीप्रत्ययविधिः

### पुंसोऽजातेर्ङी वा ॥ २-२-३७॥

[2]पुंलिङ्गात् स्त्रियां ङिदी वा स्यात् । णीळी । णीळा । सहमाणी [3]सहन्ती । सव्वी सव्वा । अजातेः किम्? अजा-अआ । एडका-एडआ । [4]अत इत्यनुवृत्तेः कुमारी गौरीत्यादौ न ङीविकल्प इति संस्कृतवदेव ॥

---

[1]शेषं पुंवदिति ॥ तृतीयाविभक्तिमारभ्य सर्वाणि रूपाणि पुंलिङ्गकिंशब्दवदित्यर्थः ॥

इति नपुंसकलिङ्गः किंशब्दः.

इति नपुंसकलिङ्गसर्वनामविशेषशब्दाः.

---

## अथ स्त्रीप्रत्ययप्रकरणम्

[2]पुलिँङ्गादित्यादि ॥ 'शेषु स्त्रियां तु' (प्रा. सू. २-२-३२) इति सूत्रात् स्त्रियामित्यनुवर्तते । सूत्रस्थस्य अजातेरित्यस्य जातिप्रवृत्तिनिमित्तकभिन्नादित्यर्थः । स्त्रियामित्युक्त्याऽत्र पुंस इति भाषितपुंस्कादित्यर्थपर्यवसन्नम् । ततश्च भाषितपुंस्कात् जातिप्रवृत्तिनिमित्तकभिन्नात् स्त्रियां ङीप्रत्ययो वा भवतीति सूत्रार्थः । नियतस्त्रीलिङ्गकेभ्यो गङ्गादिशब्देभ्यो विकल्पेन ङीप्रत्ययाभावार्थं सूत्रेऽस्मिन् भाषितपुंस्कादित्यर्थकं पुंस इति पदं बोध्यम् । सूत्रेऽस्मिन् 'ङीव्वा' इति पाठस्त्रिविक्रमवृत्तिचन्द्रिकयोर्दृश्यते ॥

[3]सहन्तीति ॥ अत्र 'णीळा' इति पूर्वप्रदर्शितरीत्या 'सहमाणा' इति शुद्धपाठेन भाव्यमिति भाति ॥

[4]अत इत्यनुवृत्तेरित्यादि ॥ यद्यप्यनेकपूर्वसूत्रेष्वत इत्यनुवृत्तेर्विच्छेदः, तदनुवृत्तावपि कुमारगौरादिशब्दानामदन्तत्वाव्यभिचाराभ्यावृत्त्युपपादनमपि दुर्निर्वहम् ,

## ङीप् प्रत्यये ॥ २-२-३८ ॥

**संस्कृते 'टिड्ढाणञ्' इति सूत्रेण प्रत्ययनिमित्तो यो [1]ङीबुक्तस्तस्य ङी वा स्यात्। विकल्पसामर्थ्यात्पक्षे[2] टाप्। [3]साहणी साहणा कुरुअरी कुरुअरा इत्यादि।**

---

तथाऽपि शब्दाधिकारमाश्रित्य अत इत्यस्य तसिलन्तत्वाभ्युपगमेन मण्डूकप्लुत्याश्रयेण च संस्कृतसिद्धटाबन्तप्रकृतिमाश्रित्यैव अनेन ङीप्रत्ययस्य विधानमिति कथंचिदभ्युपेत्य कुमारादिशब्देभ्यः संस्कृते स्त्रियां टापोऽप्रवृत्त्या 'वयसि प्रथमे' (पा. सू. ४-१-४०) 'षिद्गौरादिभ्यश्च' (पा. सू. ४-१-४१) इत्यादिभिरीकारान्तत्वेन अत्र अत इत्यनुवृत्त्या अनकारान्ततया न तेभ्यः प्रकृतसूत्रेण वैकल्पिकतया ङीप्रत्ययः प्रवर्तेत इति तेषां संस्कृतवदेवात्र प्राकृतेऽपि नित्येकारान्तत्वमेवेत्याशयोऽत्र कथं चित्परिकल्पनीयः। अत्र चन्द्रिकात्रिविक्रमवृत्त्योस्तु — 'पुंसोऽजातेर्ङीब्वा' इत्यस्याप्राप्तविभाषात्वमभ्युपगम्य कुमारीगौर्यादिषु 'वयसि प्रथमे' (पा. सू. ४-२-६४) इत्यादिभिः ङीबादीकारप्रत्ययस्य प्राप्ततया तेषामेतत्सूत्रविषयत्वाभावान्न तेभ्यः प्रकृतसूत्रेण वैकल्पिकेकारः प्रवर्तते। किं तु येभ्यः सर्वादिशब्देभ्यः संस्कृते ङीपोऽप्राप्तिः तेभ्य एवानेन सूत्रेण विकल्पतया ङीब्विधिरिति न कुमारीगौर्यादिशब्दानां वैकल्पिकमीकारान्तत्वमित्यभिहितं दृश्यते॥

[1] **ङीबुक्तस्तस्य ङी वा स्यादिति** ॥ पूर्वसूत्रात् ङी वेत्यस्यानुवृत्तिरिति भावः। अत्र वृत्तौ 'प्रत्ययनिमित्तो ङीबुक्तस्तस्य ङी वा' इत्युक्त्या सूत्रस्थं प्रत्ययपदं निमित्तसप्तम्यन्तं, ङीप्पदं च लुप्तषष्ठीकमिति प्रतीयते। चन्द्रिकात्रिविक्रमवृत्तिग्रन्थपरिशीलनायां तु ङीबिति प्रथमान्तं विधेयपरमिति प्रतीयते। तन्मते पूर्वसूत्राद्वापदमात्रानुवृत्तिरिति ज्ञायते। तत्र चासंदेहार्थमत्रत्यं ङीब्ग्रहणमित्याशयस्स्यादिति भाति॥

[2] **पक्ष इति** ॥ ङीत्वाभावपक्ष इत्यर्थः ॥

[3] **साहणीत्यादि** ॥ करणाद्यर्थकल्युडन्तात्साधनशब्दात्स्त्रियां 'टिड्ढाणञ्' (पा. सू. ४-२-६६) इत्यादिना टित्त्वात् ङीपः प्रवृत्त्या तस्य प्रकृतसूत्रेण विकल्पेन ङीभावे 'खघथधभाम्' (प्रा. सू. १-१-१५) इत्यनेन धस्य हत्वे साहणी साहणा इति रूपद्वयं बोध्यमिति भावः। कुरुअरी कुरुअरा इत्यत्र 'प्रायो लुक्कगचज' (प्रा. सू. २-२-१०) इत्यादिना तकारस्य लुग्बोध्यः ॥

[1]हरिद्राच्छाये ॥ २-२-३९ ॥

**अनयोर्ङी वा स्यात् । [2]हळद्दी हळद्दा । छाही छाहा । 'छायायां होऽकान्तौ' (प्रा. सू. १-३-७०) इति [3]हत्वम् ।**

इति स्त्रीप्रत्ययप्रकरणम्.

## अथाव्ययप्रकरणम्.

अव्ययम् ॥ २-१-३१ ॥

[4] **इत्यधिकृत्य ।**

आम [5]अभ्युपगमे ॥ २-१-३२ ॥

[6]णइ चेअ चिअ च्च एवार्थे ॥ २-१-३४ ॥

---

[1] **हरिद्रेत्यादि ॥** त्रिविक्रमवृत्तिचन्द्रिकयोस्तु 'हरिद्राच्छाया' इति सूत्रपाठो दृश्यते ॥

[2]**हळद्दीत्यादि ॥** हरिद्राशब्दात् स्त्रियां प्रकृतसूत्रेण ङीभावे सति 'हरिद्रादौ' (प्रा. सू. १-३-७८) इत्यनेन रेफस्य लत्वे 'लवरामधश्च' (प्रा. सू. १-४-७८) इति रेफस्य लुकि 'शेषादेशस्य' (प्रा. सू. १-४-८६) इत्यादिना शिष्टस्य दकारस्य द्वित्वे च हलद्दी इति रूपम् । ङीभावस्य वैकल्पिकत्वादेतदभावपक्षे टापि हलद्दा इति रूपमिति भावः ॥

[3] **हत्वमिति ॥** यकारस्येति शेषः ॥

इति स्त्रीप्रत्ययप्रकरणम्.

## अथाव्ययप्रकरणम्.

[4]**इत्याधिकृत्येति ॥** अव्ययं इत्येतदित ऊर्ध्वमेतत्पादसमाप्तिपर्यन्तमधिक्रियत इति त्रिविक्रमचन्द्रिकयोरप्युक्तम् ॥

[5] **अभ्युपगम इति ॥** अङ्गीकाररूपार्थे आम इत्यव्ययं ज्ञेयमित्यर्थः । इदं संस्कृतेऽपि दृश्यत इति चन्द्रिकायामुक्तम् ॥

[6] **णइ चेअ इत्यादि ॥** चन्द्रिकात्रिविक्रमवृत्त्योस्तु 'णइ चेअ चिअ व्व एवार्थे' इति सूत्रपाठो दृश्यते । तन्मते 'सो व्व इति एवार्थकतुरीयाव्ययघटितमुदाहरणं बोध्यम् । कात्यायनसूत्ररीत्या तु चिअ चेअ इति निपातद्वयमेवेति ज्ञायते ॥

स एव—सो णइ सो च्चेअ, [1] दैवादित्वात् द्वित्वम्। एवं सो च्चिअ सो च्च। अत्र [2] द्विरुक्त एव चकार आदेशः॥

## हद्धि निर्वेदे ॥ २-१-३५ ॥

## मिव पिव विव विअ व व्व इवार्थे ॥ २-१-३८ ॥

षडेते स्युः। मिव पिव विव विअ व [3] व्व॥

## अम्हो आश्चर्ये ॥ २-१-४० ॥

## [4] हु खु निश्चयविस्मयावितर्के ॥ २-१-५४ ॥

हु खु इत्येतौ एषु स्तः। वितर्कः संशय ऊहश्च॥

---

[1] दैवादित्वादित्यादि॥ प्रकृतसूत्रसिद्धस्य एवार्थकाव्ययस्य संबन्धिनश्चकारस्य 'दैवगेऽखौ' (प्रा. सू. १-४-९२) इत्यनेन द्वित्वे सो च्चे अ इति रूपमित्यर्थः। दैवादिगणे हि 'स एवेत्यत्र चस्य हि द्वित्वम्' इति गणकारिका दृश्यते। तत्र एवशब्दः 'चस्य' इत्युक्तिबलात् एवार्थकाव्ययपर इति भावः। द्वित्वस्यास्य वैकल्पिकत्वादेतदभावपक्षे सो चेअ इति रूपान्तरमपि बोध्यम्। एवं चिअ-इत्यादेशेऽपि॥

[2] द्विरुक्त एवेति॥ 'च्च' इति चतुर्थोऽयमेवार्थकनिपात एतन्मते नित्यतया द्वित्वघटित इति 'सो च्च' इत्येकमेव रूपमित्याशयः प्रतिभाति। त्रिविक्रमलक्ष्मीधरौ तु 'व्व' इति सूत्रे तुरीयमव्ययं मन्वाते। तन्मते च सो व्व इत्युदाहरणं बोध्यम्॥

[3] व्वेति॥ एतद्वृत्तिकृन्मतरीत्या 'व्व' इतीवार्थकमेवाव्ययमिति भाति। त्रिविक्रमवृत्तिचन्द्रिकाकृन्मते तु 'णइचेअ' (प्रा. सू. २-१-३४) इति सूत्रेऽप्येवार्थकस्य 'व्व' इति निपातस्याभ्यनुज्ञानात् 'व्व' इति एवार्थकमिवार्थकं चाव्ययमिति बोध्यम्॥

[4] हु खु निश्चयेत्यादि॥ अत्र त्रिविक्रमवृत्तौ 'बहुलाधिकारादनुस्वारात्परो हुर्न प्रयोज्य' इत्युक्तिदर्शनात् एअं खु हसइ (एवं खलु हसति) इत्यादौ 'खु' इतिवत् हु इति न प्रयोक्तव्य इति बोध्यम्॥ निश्चये—हु पढिअं, खु पढिअं—असंशयं

[1] त्वो अवापोत ॥ २-१-६७ ॥

अव अप उत एषां स्थाने ओ वा स्यात् । अवगतः— ओगओ अवगओ ॥

[2] उ ओ तूप ॥ २-९-६८ ॥

उप इत्यस्य उ ओ वा स्तः । उआरो ओआरो [3] उवआरो— उपकारः ॥

उप पश्य ॥ २-१-७५ ॥

[4] स्पष्टम् ॥

---

पठितम् । विस्मये—को हु एसो सहस्ससिरो, को खु एसो सहस्ससिरो— कः खल्वेष सहस्रशिराः । ऊहे— हु पिओ आअमिस्सदि, खु पिओ आअमिस्सदि—प्रिय आगमिष्यति । संशये—हरी हु हरोहु, हरी खु । हरो खु —हरिर्वा हरो वा इत्युदाहरणानि बोध्यानि ॥

[1] त्वो अवापोतेति ॥ तु ओ अवापोत इति च्छेदः । अवापोत इति लुप्तषष्ठ्यन्तं पदम् । तु शब्दो वार्थकः । अव अप उत इत्येषां स्थाने ओ इत्यव्ययं वा स्यादिति सूत्रार्थः । त्रिविक्रमवृत्तिचन्द्रिकयोस्तु 'त्वोदवापोताः' इति सूत्रपाठो दृश्यते ॥

[2] उओ तूपेति ॥ पूर्वसूत्राद्वार्थकतुशब्दानुवृत्तेरत्रत्यं तुग्रहणं स्पष्टार्थमिति परिकल्पनीयम् । त्रिविक्रमवृत्तिचन्द्रिकयोस्तु 'उओ उपे' इति तुग्रहणरहित एव पाठ उपलभ्यते ॥

[3] उवआरो इति ॥ प्रकृतसूत्रविहितयोः उभावौभावयोरुभयोरपि वैकल्पिकत्वात्तदुभयाभावपक्षे उपकार इत्यत्र पकारस्य 'पो वः' (प्रा. सू. २-२-७८) इति वकारादेशे ककारस्य 'प्रायो लुक्कगचज' (प्रा. सू. १-३-८) इत्यादिना लुकि च उवआरो इति रूपं बोध्यमिति भावः ॥

[4] स्पष्टमिति ॥ पश्येत्यर्थे उवेत्यव्ययं स्यादित्यर्थः स्पष्टं प्रतीयत इत्यर्थः । अत्रापि वार्थकतुशब्दस्य अनुवृत्तिर्बोध्या । अत एव च पश्येत्यर्थे ओअक्ख इत्यादयोऽपि प्रयोगा उपपद्यन्त इति बोध्यम् ॥ पश्यतेत्यर्थे 'उवह' इत्यपि प्रयोगो दृश्यत इति त्रिविक्रमवृत्तिचन्द्रिकयोरुक्तम् । एतत्सूत्रपर्यालोचनायां 'उअ णिच्चल' इति काव्यप्रकाशादिपूपात्ते गाथासप्तशतीगते तुरीये श्लोके 'उव' इत्येव पाठस्साधुरिति भाति ॥

[1] प्याद्याः ॥

पि [2] वि इत्याद्या [3] अप्यर्थाः ॥

इति श्रीमद्दक्षिणसमुद्राधीश्वरचोक्कनाथभूपप्रियसचिव-सज्जनावलम्ब ब्रह्मण्यबिरुदाङ्क-चिनबोम्मभूपालहृदयकमलकुहरविहर-माण श्रीसाम्बशिवप्रेरितेनाप्पयदीक्षितेन कृते प्राकृतमणिदीपे सुबन्तप्रकरणम्

---

[1] **प्याद्या इति** ॥ इदं सूत्रं चन्द्रिकायां नोपात्तम् । 'किं पि' 'किं वि' इत्यादिप्रयोगाणां च 'अपेः पदात्' (प्रा. सू. १-२-५) इत्यनेन आदेरचो लुकि सिद्धत्वादिति तदाशयः स्यात्। ननु पदात्परत्वाभावेऽपि 'पि' इति प्रयोगसिद्ध्यर्थं 'प्याद्याः' इति सूत्रं स्यादिति चेन्न । तथा सति 'अपेः पदात्' इति सूत्रस्यैव (प्रा. सू. १-२-५) वैयर्थ्यापातादिति ॥

[2] **वि इत्याद्या इति** ॥ प्रकृतसूत्रस्थादिशब्देन 'वि' इत्यादीनामप्यर्थकानां ग्रहणमिति भावः । ननु अपिशब्दे पकारस्य 'पो वः' (प्रा. सू. १-३-५५) इति सूत्रेण वकारादेशे 'अपेः पदात्' (प्रा. सू. १-२-५) इत्यनेनादेरकारस्य लुकि च 'वि' इत्यस्य, वकारादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'पि' इत्यस्य च रूपस्य सिद्धतया यत्किञ्चित्पदात्परकत्वाभावे च 'पि' 'वि' इति प्रयोगस्य 'अपेः पदात्' (प्रा. सू. १-२-५) इति सूत्रवैयर्थ्यापातभिया अनङ्गीकार्यतया च 'प्याद्याः' इति सूत्रं किमर्थम् ? अत एव चन्द्रिकाकृताऽपीदं नोपात्तमिति चेत्सत्यम् । 'पो वः' (प्रा. सू. १-३-५५) इत्यत्र 'प्रायो लुक्' (प्रा. सू. १-३-८) इत्यतः प्रायग्रहणानुवृत्त्या कपिशब्दादाविव वकारादेशस्य नियमेनाप्राप्तौ 'किं वि' इत्यादिरूपसिद्ध्यर्थमेतत्सूत्रम्, तथा अपिशब्दे पकारस्य वकारादेशलुकोः प्रायग्रहणान्नियमेनाप्राप्तौ 'किं पि' 'अपि णाम' इत्यत्र अकारलोपतदभावयोस्सिद्ध्यर्थं 'अपेः पदात्' (प्रा. सू. १-२-५) इति सूत्रं चारब्धमिति संतोष्टव्यमिति ॥

[3] **अप्यर्था इति** ॥ अत्र वृत्तावनुपात्तान्यन्यान्यप्यव्ययप्रकरणस्थानि सूत्राणि सोदाहरणप्रदर्शनं वृत्तिचन्द्रिकयोरुपादाय व्याकृतानि दृश्यन्ते । तानि यथा—

**तं वाक्योपन्यासे ॥ २-१-३३ ॥**

तमित्यव्ययं वाक्योपन्यासे प्रयोज्यम् । तं ति अ सवन्ति मोक्खं—तमिति च शपन्ति मोक्षम् ॥

## दर अर्धेऽल्पे वा ॥ २-१-२६ ॥

दरेत्यव्ययं अर्धार्थे अल्पार्थे च वा प्रयोक्तव्यम्। दरविअसिअं—अर्धविकसितम्, ईषद्विकसितम्॥

## किणो प्रश्ने ॥ २-१-३७ ॥

किणो इति प्रश्ने वा प्रयोज्यम्। किणो चिट्ठसि—किमिति तिष्ठसि॥

## किरइरहिर किलार्थे ॥ २-१-३९ ॥

किर-इर-हिर-इति किलार्थे वा प्रयोक्तव्याः। कअं किर-कृतं किल। तस्स इर पिअवअंसो—तस्य किल प्रियवयस्यः। वाहित्ता हिर—व्याहृता किल। पक्षे कअं किल—कृतं किल। तस्स किल पिअवअंसो—तस्य किल प्रियवयस्यः। वाहित्ता किल-व्याहृता किल॥

## अब्भो पश्चात्तापसूचनादुःखसंभाषणापराधानन्दादरखेद-विस्मयविषादभये ॥ २-१-४१ ॥

अब्भो इति पश्चात्तापादिष्वेकादशसु प्रयोज्यम्। पश्चात्तापे—अब्भो महं खु पावं आअरिअं—महत्खलु पापमाचरितम्। सूचनायां—अब्भो दुक्करो आरद्धो—दुष्कर आरब्धः। दुःखे—अब्भो सव्वं गअं—सर्वं गतम्। संभाषणे—अब्भो किमिणं—किमिदम्। अपराधे—अब्भो परधणं हरन्ति खला—परधनं हरन्ति खलाः। आनन्दे—अब्भो सुप्पहाअमिणं—सुप्रभातमिदम्। आदरे—अब्भो अह अम्हाणं जम्मं सफलं जीविअं—अथास्माकं जन्म सफलं जीवितम्। खेदे—अब्भो ण जाणामि चित्तं—न जानामि चित्तम्। विस्मये—अब्भो किं वि रहस्सं जाणन्ति धुत्ता जणाब्भहिआ—किमपि रहस्यं जानन्ति धूर्ता जनाभ्यधिकाः। विषादे—अब्भो णासन्ति धिअं, पुलअं वड्ढेन्ति, देन्ति रणरणअं—नाशयन्ति धियं, पुलकं वर्तयन्ते, ददति रणरणकम्। भये—अब्भो गहअम्हि तुम्हि ण वा रज्जइ सा ण जोरिहिइ—गदिताऽस्मि त्वया न वा रज्यति मा न खेदिष्यते॥

## हुं पृच्छादाननिवारणे ॥ २-१-४२ ॥

हुमित्यव्ययं पृच्छायां दाने निवारणे च प्रयोज्यम्। पृच्छायां—हुं कहअ सब्भावं—कथय सद्भावम्। दाने—हुं गेण्हिअ मह धणं—गृहाण मम धनम्। निवारणे—हुं णिल्लज्ज समोसर—निर्लज्ज समपसर॥

### वणे निश्चयानुकम्प्यविकल्पे ॥ २-१-४३ ॥

वणे इत्यव्ययं निश्चयादौ प्रयोज्यम्। निश्चये—वणे होइ—निश्चयो भवति। अनुकम्प्ये—दासो वणे ण मुच्चइ—दासोऽनुकम्प्यो न मुच्यते। विकल्पे—होइ ण होइ वणे – भवति न भवति वा ॥

### सम्भावने अइ च ॥ २-१-४४ ॥

सम्भावने अइ इति चकाराद्वणे इति चाव्ययं प्रयोज्यम्। अइ दिअर किं ण पेच्छसि—वणे दिअर किं ण पेच्छसि, इति वा—अयि देवर किं न पश्यसि ॥

### आनन्तर्ये णवरिअ ॥ २-१-४५ ॥

आनन्तर्यार्थे णवरिअ इत्यव्ययं प्रयोज्यम। णवरिअ से रहुवइणो—आनन्तर्यं (अनन्तरं) अस्य रघुपतेः ॥

### केवले णवर ॥ २-१-४६ ॥

केवलेऽर्थे णवर इत्यव्ययं प्रयोज्यम्। णवर दोज्जण्णं पअडिअं—केवलं दौर्जन्यं प्रकटितम्। * केचित्तु 'केवलानन्तर्ययोर्णवरिअणवर' इत्येकमेव सूत्रमाहुः। तन्मते णवरिअणवरेत्युभयमपि केवलानन्तर्योभयार्थकं बोध्यम् ॥

### भंद गृहाणार्थे ॥ २-१-४७ ॥

भंदेत्यव्ययं गृहाणेत्यर्थे प्रयोज्यम्। भंद पोप्फं—गृहाण पुष्पम् ॥

### भंदि विकल्पविषादसत्यनिश्चयपश्चात्तापेषु च ॥ २-१-४८ ॥

भंदीत्येतदव्ययं विकल्पादिषु पञ्चस्वर्थेषु चकाराद् गृहाणेत्यर्थे च प्रयोज्यम्। विकल्पे—भंदि होज्ज एत्ताहे—वा भवेदिदानीम्। विषादे भंदि चळणाणओ सो ण माणिओ—हन्त चरणानतस्स न मानितः। सत्ये—भंदि तुह फणामो—सत्यं तव फणामः। निश्चये—साहिज्जइ भंदि तुह कज्जं—साध्यते निश्चयेन तव कार्यम्। पश्चात्तापे—भंदि न दिट्ठो पिओ—हन्त न दृष्टः प्रियः। गृहाणार्थे—भंदि धणं—गृहाण धनम् ॥

### संभाषणे रतिकलहे रे अरे ॥ २-१-४९ ॥

संभाषणे रतिकलहे च रे अरे इत्यव्ययद्वयं प्रयोज्यम्। संभाषणे—रे धुत्त, अरे धुत्त—रे धूर्त। रतिकलहे—रे किअअ, अरे किअअ—रे कितव ॥

---

* केचित्त्विति। त्रिविक्रमवृत्तिगतैतद्ग्रन्थपरिशीलनेन सूत्रपाठः त्रिविक्रमप्रणीतो नेत्यवगम्यते। एतेन सूत्रपाठस्त्रैविक्रमीय इति केषांचिदभ्यूहनं परास्तं वेदितव्यम् ॥

## हरे क्षेपे च ॥ २-१-५० ॥

हरे इत्यव्ययं क्षेपे (निन्दायां) चकारात्सम्भाषणरतिकलहयोश्च प्रयोज्यम् । क्षेपे—हरे णिळ्ळज्ज—निर्लज्ज । सम्भाषणे—हरे पुरिसा—पुरुषाः । रतिकलहे—हरे बहुवळ्ळह—बहुवल्लभ ।

## थू कुत्सायाम् ॥ २-१-५१ ॥

थू इत्यव्ययं कुत्सायां प्रयोज्यम् । थू णिलज्जो ळोओ—निर्लज्जो लोकः ।

## ऊ गर्हाविस्मयसूचनाक्षेपे ॥ २-१-५२ ॥

ऊ इत्यव्ययं गर्हायां विस्मये सूचनायां प्रक्रान्तवाक्यस्य विपर्यासशङ्कया विनिवर्तनरूपे आक्षेपे च प्रयोज्यम् । गर्हायां—ऊ णिलज्जो—निर्लज्जः । विस्मये—ऊ कहं भणिअं—कथं भणितं । सूचनायां—ऊ केण वि ण विण्णाअं—केनापि न विज्ञातम् । आक्षेपे—ऊ किं मए भणिअं—किं मया भणितम् ॥

## पुणरुत्तं कृतकरणे ॥ २-१-५३ ॥

पुणरुत्तमित्यव्ययं कृतकरणे प्रयोज्यम् । अइ सहसु पुणरुत्तं—अयि सहस्व कृतकरणम् ॥

## णवि वैपरीत्ये ॥ २-१-५५ ॥

णवीत्यव्ययं वैपरीत्ये प्रयोज्यम् । णवि विहिविपरिणामो-विपरीतो विधिविपरिणामः ॥

## वेव्वे विषादभयवारणे ॥ २-१-५६ ॥

वेव्वे इत्यव्ययं विषादे भये वारणे च प्रयोज्यम् । विषादे—वेव्वे फणिअं ण विम्हरामो—विषादफणितं न विस्मरामः । भये—वेव्वे पलाइअं तेण—भयेन पलायितं तेन । वारणे—वेव्वे चापलं—मा चापलम् ॥

## * आमन्त्रणे पेव्वे च ॥ २-१-५७ ॥

आमन्त्रणे पेव्वे इति, चकारात् वेव्वे इति चाव्ययं प्रयोज्यम् । पेव्वे पिअ, वेव्वे पिअ—भो प्रिय ॥

## वा सख्या मामिहळाहळे ॥ २-१-५८ ॥

सख्या आमन्त्रणे मामि हळा हळे इत्यव्ययत्रयं वा प्रयोज्यम् । सख्या आमन्त्रणे—मामि हळा हळे । पक्षे-सहि-सखि ॥

---

* इदं सूत्रं १४३ पुटे एतद्वार्त्तिककृता 'आमन्त्रणे बब्ब' इति पठित्वोपात्तं दृश्यते.

## ओ पश्चात्तापसूचने ॥ २-१-६० ॥

पश्चात्तापे सूचने च ओ इत्यव्ययं प्रयोज्यम् ॥ पश्चात्तापे-ओ कअं पावम्-ओ कृतं पापम् ॥ सूचने-ओ तुह चरिअं सव्वं विण्णाअं-ओ तव चरितं सर्वं विज्ञातम् ॥

## अणणाइं नञर्थे ॥ २-१-६१ ॥

नञर्थे अण णाइं इत्यव्यद्वयं प्रयोज्यम् ॥ अण चिंतिअं मुणंति-न चिंतितं जानंति ॥

## निश्चयनिर्धारणे वले ॥ २-१-६२ ॥

निश्चये निर्धारणे चार्थे वले इत्यव्ययं बोध्यम् ॥ निश्चये-सीहो वले—सिंह एव। निर्धारणे- खित्तिआणं धणंजयो वले पुरिसो-क्षत्त्रियाणां धनंजय एव पुरुषः ॥

## मणे विमर्शे ॥ २-१-६३ ॥

विमर्शे मणे इत्यव्ययं प्रयोज्यम्। मणे सूरो—किंस्विच्छूरः ॥

## माइ मार्थे ॥ २-१-६४ ॥

माइ इति माशब्दार्थे अव्ययं प्रयोज्यम् ॥ माइ होदु रोसो—मा भवतु रोषः।

## अलाहि निवारणे ॥ २-१-६५ ॥

निवारणे अलाहीत्यव्ययं प्रयोज्यम् ॥ अलाहि विसादेण—अलं विषादेन।

## लक्षणे जेण तेण ॥ २-१-६६ ॥

लक्षणे जेण तेण इत्यव्यद्वयं प्रयोज्यम् ॥ भमररुअं जेण (तेण) कमलवणं—भ्रमररुतं कमलवनम् ॥

## प्रत्येकमः पाडिएक्कं पाडिक्कं ॥ २-१-६९ ॥

प्रत्येकमित्यत्रार्थे पाडिएक्कं पाडिक्कमित्यव्ययद्वयं वा प्रयोज्यम् ॥ पाडिएक्कं पाडिक्कं। पक्षे—पच्चेअं—प्रत्येकम् ॥

## स्वयमो अप्पणा ॥ २-१-७० ॥

स्वयमित्यस्यार्थे अप्पणेति वा प्रयोज्यम् ॥ अप्पणा पाओ। पक्षे—सअं पाओ-स्वयं पाकः ॥

**एक्कसरिअं झडितिसंप्रति ॥ २-१-७१ ॥**

झडित्यर्थे संप्रत्यर्थे च एक्कसरिअमित्यव्ययं वा प्रयोज्यम्॥ एक्कसरिअं, पक्षे झत्ति संपइ—झडिति संप्रति ॥

**इहरा इतरथा ॥२-१-७२ ॥**

इतरथेत्यर्थे इहरा इत्यव्ययं वा प्रयोज्यम्। इहरा। पक्षे—इअरहा—इतरथा ॥

**मुधा मोरउल्ला ॥२-१-७३ ॥**

मुधेत्यर्थे मोरउल्लेत्यव्ययं वा प्रयोज्यम्। मोरउल्ला, पक्षे—मुहा मुधा ॥

**अयि ऐ ॥ २-१-७४ ॥**

अयीत्यर्थे ऐ--इत्यव्ययं वा प्रयोज्यम्। अतएव वचनादैकारस्यापि क्वचित्प्राकृते प्रयोग इति ज्ञायते। ऐ सहि, पक्षे अइ सहि—अयि सखि ॥

**इजेराः पादपूरणे ॥ २-१-७६ ॥**

इ-जे-रा-इत्यव्ययत्रयं पादपूरणे प्रयोक्तव्यम्। रामो इ। एवं जेरयोरपि पादपूरणे प्रयोगः॥ अहो अंहो हा नाम हे अहह हि इत्यादयोऽपि संस्कृतवदेव सिद्धाः ॥

इत्यव्ययप्रकरणम्.

इति श्रीमहीशूरराजकीयप्राच्यकोशालयविदुषः तिरु-तिरु-श्रीनिवासगोपालाचार्यस्य कृतौ

प्राकृतमणिदीपटिप्पण्यां दीधित्यभिख्यायां

सुबन्तप्रकरणम्.

———

*

# श्रीमद्वाल्मीकिप्रणीतप्राकृतव्याकरणसूत्रपाठः सवार्तिकः

---

१ सिद्धिर्लोकाच्च

२ अनुक्तमन्यशब्दानुशासनवत्

३ संज्ञा प्रत्याहारमयी वा

४ सुप्स्वादिरन्त्यहला

५ ह्रो ह्रस्वः

६ दिर्दीर्घः

७ शषसाश्शु

८ सः समासः

९ आदिः स्तुः

१० गो गणपरः

११ द्वितीयः फुः

१२ संयुक्तः स्तुः

१३ तु विकल्पे

१४ प्रायो लिति न विकल्पः

१५ शिति दीर्घः

१६ सानुनासिकोच्चारं ङित्

१७ बहुलम्

१८ दिह्नौ मिथः से

१९ सन्धिस्त्वपदे

२० न यण्

२१ एङः

२२ शेषेऽच्यचः

वा—चक्रवाकशातवाहनयोः सन्धिर्वाच्यः

वा—सुपुरुषकुम्भकारद्वितीयादीनां वावचनम्

२३ तिङः

२४ लोपः

२५ अन्त्यहलोऽश्रदुदि

२६ निर्दुरि वा

२७ अन्तरि च नाचि

वा—अन्तरउपरौ डात्वं वाच्यम्

२८ शिश्लुङ् नपुनरि तु

वा—पुनरि शिर्वाच्यः

२९ अविद्युति स्त्रियामाल्

३० रो रा

३१ हः क्षुत्ककुभि

३२ धनुषि वा

३३ सशाशिषि

३४ स आयुरप्सरसोः

३५ दिक्प्रावृषि

३६ शरदा[1]मत्

३७ तु सक्खिणभवन्तजम्मणमहन्ताः

३८ यत्तत्सम्यग्विष्वक्पृथक्को मल्

३९ मोचि वा

४० बिन्दुल्

४१ हलि ङञणनानाम्

४२ स्वरेभ्यो वक्रादौ

वा—गृष्टिमार्जारमनश्शिलानां वावचनम्

४३ क्तासुपोस्तु सुणात्

४४ लुङ् मांसादौ

---

[1] मल्.

४५ संस्कृतसंस्कारे
४६ डे तु किंशुके
४७ वर्ग्येऽन्त्यः
४८ विंशतिषु त्या श्लोपल्
वा—दंष्ट्रायां वाच्यः। सिंहे वावचनम्। विंशतेः स्त्रियामेवेति वाच्यम्।
४९ स्नमदामशिरोनभो नरि
वा—चर्मशर्मसुमनस्सदोवयसां नेति वाच्यम्। धनुषस्तु हे सति नेति वाच्यम्। से सत्यसति चाप्सरसो नेति वाच्यम्।
५० शरत्प्रावृट्
५१ अक्ष्यर्थकुलाद्या वा
५२ क्लीबे गुणगाः
५३ स्त्रियामिमाञ्जलिगाः
वा—पृथ्वादित्वादेशेमनिचोस्तन्त्रेण ग्रहणं वक्तव्यं, त्वादेशस्य वा पुंस्त्वं वाच्यम्।

इति प्राकृतव्याकरणसूत्रपाठे सवार्तिके प्रथमस्याध्यायस्य प्रथमः पादः

---

१ निर्प्रतिरोत्परि माल्यस्थोर्वा
२ आदेः
३ लुगव्ययत्यदाद्यात्तदचः
४ वाऽलाब्वरण्ये
५ अपेः पादात्
६ इतेः
७ तोऽचः
८ शोर्लुप्तयवरशोर्दिः
वा—जिह्वाया वलोपे दीर्घो वाच्यः
९ हे दक्षिणेऽस्य
१० तु समृद्ध्यादौ
११ स्वप्नादाविल्
१२ पक्वाङ्गारललाटे तु
१३ सप्तपर्णे फोः
१४ मध्यमकतमे च
१५ हरे त्वी
१६ उल् ध्वनिगवयविष्वचि वः
१७ ज्ञो णोऽभिज्ञादौ
वा—अभिज्ञादौ अकारस्य लोपो वाच्यः
१८ स्तावकसास्ने
१९ चण्डखण्डिते णा वा
२० प्रथमे प्थोः
२१ आर्यायां र्यश्वश्र्वामूल्
२२ आसारे तु
२३ तोऽन्तर्येल्
वा—अन्तरङ्गादौ नेति वाच्यम्
२४ पारावते तु फोः
२५ उत्करवल्लीद्वारमात्रवि
वा—मात्रशब्दे वाच्यः
२६ शय्यादौ
२७ [1]वाऽर्द्रे उदोत्
२८ स्वपि
२९ ओदाल्यां पङ्क्तौ
३० फोः परस्परनमस्कारे

[1] त्वार्द्र.

३१ पद्मे मि

३२ स्वपौं

३३ [1] ईत्खल्वाटस्त्यान आतः

३४ इत्तु सदादौ

३५ आचार्ये चो ह्रश्च

३६ श्यामाके मः

३७ नवाऽव्ययोत्खातादौ

३८ घञि वा

वा—रागभागादौ नेति वाच्यम्

३९ स्वरस्य बिन्दुमि

४० संयोगे

४१ त्वेदितः

४२ मिरायां लित्

४३ मूषिकविभीतकहरिद्रापथिपृथिवीप्रति-
श्रुत्यत्.

४४ रस्तित्तिरौ

४५ इतौ तो वाक्यादौ

४६ वेङ्गुदशिथिलयोः

४७ णिम्माणं णिम्मिअम्

४८ उ युधिष्ठिरे

४९ द्विनीक्षुप्रवासिषु

वा—द्विगुणद्वितीययोर्वावचनम्।
द्विजद्विरदद्विधागतनिपतितानां
प्रतिषेधो वाच्यः।
द्विवचने ओत्वं वेति वाच्यम्।

५० तु निर्झरद्विधाकृञोरोत्ना

५१ ईतः काश्मीरहरीतक्योर्लालौ

५२ गभीरग इत्

५३ वा पानीयगे

५४ उल् जीर्णे

५५ तीर्थे ह्रूल्

५६ विहीनहीने वा

५७ एल्पीडनीडकीदृशपीयूषविभीतके-
दृशापीडे.

वा—पीडनीडयोर्वावचनम्

५८ त्वदुत उपरिगुरुके

५९ मुकुळादौ

६० रोभ्रुकुटीपुरुषयोरित्

६१ क्षुत ईत्

६२ दोदोऽनुत्साहोत्सन्न ऊच्छासि

६३ दुरो रलुकि तु

६४ सुभगमुसले

६५ हश्चौत्कुतूहले

६६ स्तौ

६७ सूक्ष्मेऽद्वोतः

६८ अल् दुकूले

६९ ईदुद्व्यूढे

७० उल्कण्डूयतिहनूमद्वातूले

७१ वा मधूके

७२ इदेन्नूपुरे

७३ ओल् स्थूणातूणमूल्यतूणीरकूर्परगुळू-
चीकूश्माण्डीताम्बूलीषु.

वा— स्थूणातूणयोस्तु वेति वाच्यम्

७४ ऋतोऽत्

७५ आद्वा मृदुत्वमृदुककृशासु

७६ इत्कृपगे

७७ शृङ्गमृगाङ्कमृत्यु [2]दृष्टमसृणेषु वा

७८ पृष्ठेऽनुत्तरपदे

[1] ईल्ख. [2] धृष्ट.

७९ उद्वृषभे वुः
८० बृन्दारकनिवृत्तयोः
८१ ऋतुगे
८२ गौणान्त्यस्य
वा—भर्तृदारिकादाविल्वं वाच्यम्
८३ इदुन्मातुः
८४ वृष्टिपृथङ्मृदङ्गनप्तृकवृष्टे
८५ तु बृहस्पतौ
८६ उदूदोन्मृषे
८७ वृन्त इदेङ्
८८ [1] ठिराद्दते
८९ दृसेरि सा
९० केवलस्य रिः
९१ दृश्यक्सक्विनि
९२ ऋतुऋजुऋणऋषिऋषभे वा
९३ क्लृप्त इलिः
९४ चपेटाकेसरदेवरसैन्यवेदनास्वे-चस्त्विवत्.
वा—एदोतोः क्वचित्स्वरूपेण ह्रस्वो वाच्यः
९५ सैन्धवशनैश्चरे
९६ त्वत्सरोरुहमनोहरप्रकोष्ठातोद्यान्योन्ये वश्च क्तोः.
९७ कौक्षेयक उत्
९८ शौण्डगे
९९ गव्यउदा इत्
१०० ऊ स्तेने वा
१०१ सोच्छ्वासे
१०२ ऐच एङ्
१०३ अइ तु वैरादौ
१०४ दैत्यादौ
१०५ नाव्यावः
१०६ गौरव आत्
१०७ पौरगे चाउत्
१०८ उच्चैर्नीचैसोरअः
१०९ ई धैर्ये
११० वा पुआय्याद्याः

इति प्राकृतव्याकरणसूत्रपाठे सवार्तिके प्रथमस्याध्यायस्य द्वितीयः पादः ।

---

१ एत्साज्झला त्रयोदशगेऽचः
२ कदले तु
३ कर्णिकारे फोः
४ नवमालिकाबदरनवफलिकापूगफल - पूतर ओल्.
५ तु मयूरचतुर्थ[2]चतुर्द्वारचतुर्दशच - तुर्गुणमयूखोलूखलसुकुमारोदूख-ललवणकुतूहले.
६ निषण्ण उमः
७ अस्तोरखोरचः
८ प्रायो लुक्कगचजतदपयवाम्
वा—समासेऽन्तर्वर्तिविभक्तिनिमित्त-कं पदत्वं वेति वाच्यम्
पिशाच्यां चस्य जत्वं वाच्यम्
चिह्नादावादेरपीति वाच्यम्
९ नात्पः
१० यश्रुतिरः

---

1 ढि, 2 चतुर्वार.

११ कामुकयमुनाचामुण्डातिमुक्तके मो-
ङ्लुक्.
१२ खोऽपुष्पकुब्जकर्पर[1]किले कोः
१३ छागशृङ्खलकिराते लकचाः
१४ वैकादौ गः
१५ खोः कन्दुकमरकतमदकले
१६ पुन्नागभागिनीचन्द्रिकासु मः
१७ शीकरे तु हभौ [2]
१८ ऊत्वे सुभगदुर्भगे वः
१९ निकषस्फटिकचिकुरे हः
२० खघथधभाम्
२१ ढः पृथकि तु
२२ चोः खचितपिशाचयोस्सल्लौ
२३ झो जटिले
२४ टोर्बडिशादौ लः
२५ स्फटिके
२६ रलंकोडे [3]
२७ ढः कैटभशकटसटे
२८ ठः
२९ पिठरे हस्तु रश्च ढः
३० लल्डोऽनुडुगे
३१ टो डः
वा—अटतेर्नेति वाच्यम् ।
३२ वेतस इति तोः
३३ प्रतिगेऽप्रतीपगे
३४ दंशदहोः
३५ दम्भदरदर्भगर्दभदष्टदशनदग्धदाह -
दोहददोलादण्डकदने तु.
३६ तुच्छे चच्छौ
३७ टल् त्रसरवृन्ततूबरतगरे
३८ हः कातरककुदवितरितमातुलुङ्गेषु
३९ तु वसतिभरते
४० लः पलितनितम्बकदम्बे
४१ दोहदप्रदीपशातवाहनातस्याम्
४२ रल् सप्तत्यादौ
४३ अद्रमे कदल्याम्
४४ कदर्थिते खोर्वः
४५ पीते ले वा
४६ डो र्दापि
४७ ढः पृथिव्यौषधनिशीथे
४८ प्रथमशिथिलमेधिशिधिरनिषधेषु
४९ [4]णर्दिना रुदिते
५० णो वाऽतिमुक्तके
५१ गर्भिते
५२ नः
५३ आदेस्तु
५४ नापिते हः
५५ पो वः
वा—पत्ववत्वयोः श्रुतिसुखाद्व्यवस्था
५६ फः पाटिपरिघपरिखापरुषपनसपारि-
भद्रेषु
५७ नीपापीडे मो वा
५८ रल्पापधौ
५९ प्रभूते वः
६० फस्य भहौ वा
वा—रेफे भ एव वाच्यः । मुक्ता
फलादौ ह एव वाच्यः ।
६१ बो वः

---

[1] कीले. [2] भहौ [3] कोटे. [4] णों दिना.

६२ ङ्यौ कबन्धे
६३ बिसिन्यां भः
६४ बो भस्य कैटभे
६५ स्वभिमन्यौ मः
६६ मन्मथे
६७ तु डो विषमे
६८ यो जर्तीयानीयोत्तरीयकृत्येषु
६९ इन्मयटि
७० छायायां होऽकान्तौ
७१ यष्ट्यां लल्
७२ कतिपये वहशौ
७३ अर्थपरे तो युष्मदि
७४ आदेर्जः
७५ भ्यौ बृहस्पतौ तु बहोः
७६ रो डा पर्याणे
७७ लो जठरवठरनिष्ठुरे
७८ हरिद्रादौ
७९ किरिबेरे डः
८० खोः करवीरे णः
८१ लो ललाटे च
८२ लोहललाङ्गललाङ्गूले वा
८३ स्थूले रलृतश्चौत्
८४ बो मः शबरे
८५ नीवीस्वप्ने वा
८६ हस्य घो बिन्दोः
८७ शोस्सल्
८८ प्रत्यूषदिवसदशपाषाणे तु हः
८९ स्नुषायां ण्हः फोः
९० छल् षट्शमीसुधाशावससपर्णे
९१ सिरायां वा
९२ लुक्पादपीठपादपतनदुर्गादेव्युदुम्बरेऽचान्तर्दः
९३ व्याकरणप्राकारागते कगोः
९४ एवमेव देवकुलप्रावारकयावज्जीविताबटावर्तमानतावति वः.
९५ ज्योर्धनुजवधराजकुलभोजनकालायसकिसलयहृदयेषु.
९६ अपतौ घरो गृहस्य
९७ स्त्रीभगिनीदुहितृवनितानामित्थीबहिणीदूआविलआः[1].
९८ उभयाधसोरवहहेट्ठौ
९९ मलिनधृतिपूर्ववैडूर्याणां मइलदिहिपुरिमवेरुलिआः.
१०० स्मरकट्वोरीसरकारौ
१०१ बाहिंबाहिरौ बहिसः
१०२ कुरो गौणेषतः
१०३ एण्हिं एत्ताहे इदानीमः
१०४ तिर्यक्पदातिशुक्तेस्तिरिच्छिपायिक्कसिप्पि.
१०५ गोणाद्याः

इति प्राकृतव्याकरणसूत्रपाठे सवार्तिके प्रथमस्याध्यायस्य तृतीयः पादः.

---

१ स्तोः
२ वा रक्ते गः
३ शुल्के ङ्गः
४ कश्शक्तमुक्तदष्टमृदुत्वरुग्णेषु

---

1 ळआ वा.

५ क्ष्वेडकगे खल्
६ ष्कस्कोर्नाम्नि
७ वुश्च रुवृक्षे
८ क्षः
९ स्थाणावहरे
१० स्कन्दतीक्ष्णशुष्के तु खोः
११ स्तम्भे
१२ स्थोऽस्पन्दे
१३ स्त्यानचतुर्थे च तु ठः
१४ ष्टः
१५ विसंस्थुलास्थ्यधनार्थे
१६ चः कृत्तिचत्वरे
१७ त्योऽचैत्ये
१८ श्चेवृश्चिके ञ्चुर्वा
१९ उत्सवऋक्षोत्सुकसामर्थ्ये छो वा
२० क्षमायां कौ
२१ क्षण उत्सवे
२२ स्पृहादौ
२३ थ्यश्चत्सप्सामनिश्चले
२४ द्यय्यर्यां जः
२५ त्वमिमन्यौ जजौं
२६ ध्यह्योर्झल्
२७ साध्वसे
२८ ध्वजे वा
२९ इन्धौ
३० र्तस्याधूर्तादौ टः
३१ प्रवृत्तसन्दष्टमृत्तिवृत्तेष्टापत्तनकदर्थि-
तोष्ट्रे.
३२ वा न्तन्धौ मन्युचिह्नयोः
३३ डल् फोर्मर्दितविच्छर्दच्छर्दिकपदवि-
तर्दिगर्तसंमर्दे.
३४ ढोधर्द्धिश्रद्धामूर्ध्नि तु
३५ दग्धविदग्धवृद्धिदंष्ट्रावृद्धे
वा—वृद्धकवेर्नेति वाच्यम्
३६ पञ्चदशदत्तपञ्चाशति णः
३७ ज्ञम्नोः
३८ स्तवे थो वा
३९ रो हश्चोत्साहे
४० स्तः
४१ पर्यस्ते टश्च
४२ वाऽऽत्मभस्मनि पः
४३ ग्मक्मोः
४४ ष्पस्पोः फः
४५ भीष्मे
४६ श्लेष्मबृहस्पतौ तु फोः
४७ ग्मो मः
४८ न्मः
४९ ताम्राम्रयोर्म्बः
५० ऊर्ध्वे भो वा
५१ ह्वः
५२ वश्च विह्वले
५३ काश्मीरे म्भः
५४ लो वाऽऽर्द्रे
५५ र्यः सौकुमार्यपर्यङ्कपर्यस्तपर्याणे
५६ श्चररि अरिज्जमाश्चर्ये
वा—र्यसंबन्धयवर्णस्य लोपो वाच्यः
५७ डेरो ब्रह्मचर्यसौन्दर्ये च
५८ वा पर्यन्ते
५९ धैर्ये रः
६० तूर्यदशार्हशौण्डीर्ये
६१ बाष्पे होऽश्रुणि
६२ कार्षापणे

६३ न वा तीर्थदुःखदक्षिणदीर्घे
६४ कूश्माण्ड्यां ष्मश्च तु लः
६५ त्वथ्वद्वध्वां क्वचिच्चछजझाः
६६ ह्लो ल्हः
६७ श्मष्मस्मह्मामस्मररश्मौ म्हः
६८ पक्ष्मणि
६९ श्नष्णस्नत्स्नह्नह्णक्ष्णां ण्हः
७० सूक्ष्मे
७१ आश्लिष्टे लधौ
७२ टठौ स्तब्धे
७३ तो ढो रश्चारब्धे तु
७४ सो बृहस्पतिवनस्पत्योः
७५ शोर्लुक्खोः स्तम्बसमस्तनिस्पृहपरस्परश्मशानश्मश्रुणि.
७६ श्चस्य हरिश्चन्द्रे
७७ क ग ट ड त द प ᳲक ᳲपशोरुपर्यद्रे
वा-श्च्योततिस्नेहादौ लुग्वाच्यः. ज्योत्स्नादौ ण्ह एव न च्छ इति वाच्यम्. अगस्त्यादौ थ एव न च्छ इति वाच्यम्. लक्ष्मणादौ ख एव न म्ह इति वाच्यम्. मर्त्यादौ ट एव न च इति वाच्यम्. स्त्यक्ष्मकात्स्न्यादीनामनभिधानमिष्यते.
७८ लवरामधश्च
७९ मनयाम्
वा-णस्योपसंख्यानम्
द्वादशादौ दस्य लुग्वाच्यः, द्वितीयादौ पर्यायेणोभयलोपो वाच्यः.

परलोपविषयेऽपि रेफ एव लुप्यते पूर्वविप्रतिषेधेन.
लवयोरपि क्वचित्पूर्वविप्रतिषेधेन लोपो वाच्यः.
८० धात्रीद्रे रस्तु
वा-लुकि शेषद्वित्वं वेष्यते
८१ ह्रस्य मध्याह्ने
८२ ज्ञो ञोऽविज्ञाने
८३ द्वोद्वरि
८४ रात्रौ
८५ रितो द्वित्वल्
८६ शेषादेशस्याह्रोऽचोऽस्वोः
८७ दीर्घान्न
वा-अमात्यादिषु प्रायो ह्रस्वो वाच्यः.
८८ कर्णिकारे णो वा
८९ धृष्टद्युम्ने
९० वा से
९१ प्रमुक्तगे
९२ दैवगेऽखौ
९३ तैलादौ
९४ पूर्वमुपरि वर्ग्यस्य युजः
९५ प्राक्शाखाप्लक्षशार्ङ्गे ङ्गलोऽत्
९६ क्ष्मारत्नेऽन्त्यहलः
९७ स्नेहाग्न्योर्वा
९८ शर्षवज्रतप्तेष्वित्
९९ हर्षामर्षश्रीह्रीक्रियापरामर्शकृत्स्नदिष्टयार्हे.
वा-कृत्स्ने तलोप एव न च्छ इति वाच्यम्.
१०० स्याद्भव्यचैत्यचौर्यसमे यात्

१०१ लादक्लीबेषु
१०२ नात्स्वप्ने
१०३ स्निग्धे त्वदितौ
१०४ कृष्णे वर्णे
१०५ अर्हत्यु च
१०६ तन्व्याभे
१०७ सुघ्ने रात्
१०८ एकाचि श्वस्स्वे
१०९ वा च्छद्मपद्ममूर्खद्वारे
११० ईल्ज्यायाम्
१११ हश्च महाराष्ट्रे ह्रोर्व्यत्ययः
११२ लनोरालाने
११३ वाराणसीकरेण्वां रणोः
११४ ललाटे डलोः
११५ ह्रदे दहयोः
११६ चलयोरचलपुरे
११७ ह्यो ह्योर्वा
११८ लघुके लहोः
११९ रलोर्हरिताले
१२० दर्वीकरनिवहौ दव्वीरअणिहवौ तु
१२१ गहिआद्याः

इति प्राकृतव्याकरणसूत्रपाठे सवार्तिके प्रथमस्याध्यायस्य चतुर्थः पादः.

इति प्रथमोऽध्यायः

——

## अथ द्वितीयोऽध्यायः

१ मन्तमणवन्तमाआलुआलइरइल्लउल्ल-इन्ता मतुपः

वा-आल्वालादौ सन्धिर्नित्यो वाच्यः.
इन्तेः सन्ध्यभाव एव वाच्यः

२ वतुपो डित्तिअमिदमेतलुक्चैतद्यत्तदः
३ किमिदमश्च डेत्तिअडित्तिलडेद्दहम्
४ इकः पथो णस्य
५ खस्य सर्वाङ्गात्
६ छस्यात्मनो णअः
७ हित्थहास्त्रलः
८ केर इदमर्थे
९ राजपराड्डिक्कडक्कौ च
१० डेच्चओ युष्मदस्मदो णः
११ वर्वतेः
१२ तैलस्यानंकोलाड्डेल्लः
१३ त्वस्य तु डिमात्तणौ
१४ दोत्तो तसः
१५ एकाद्दस्सिसिअइआ
१६ ल्हुत्तः कृत्वसुचः
१७ भवे डिल्लोल्लडौ
१८ स्वार्थे तु कश्च
वा-क्वचिद्द्विरपि को वाच्यः
१९ उपरेः संव्याने ल्लल्
२० नवैकाद्वा
२१ मिश्रालिअश्
२२ शनैसो ल्डिअम्
२३ मनाको डअं च वा
२४ रो दीर्घात्
२५ [1] ल्हुमअडमयौ भ्रुवः
२६ लो वा विद्युत्पत्रपीतान्धात्
२७ त्वादेः सः

[1] ह्रुमथडमयौल्.

२८ इरश्शीलाद्यर्थस्य
२९ तुमत्तुआणतूणाः क्त्वः
३० वरइत्तगास्तृनाद्यैः
३१ अव्ययम्
३२ आम अभ्युपगमे
३३ तं वाक्योपन्यासे
३४ णइ चेअ [1] चिअ च्च एवार्थे
३५ हद्धि निर्वेदे
३६ दर अर्धेऽल्पे वा
३७ किणो प्रश्ने
३८ मिवपिवविवविअवव्व [1] इवार्थे
३९ किरइराहिर किलार्थे
४० अम्हो आश्चर्ये
४१ अब्भो पश्चात्तापसूचनादुःखसम्भाषणापराधानन्दादरखेदविस्मयविषादभये.
४२ हुं पृच्छादाननिवारणे
४३ वणे निश्चयानुकम्प्यविकल्पे
४४ सम्भावने अइ च
४५ आनन्तर्ये णवरिअ
४६ [2] केवले णवर
४७ [3] भन्द गृहणार्थे
४८ [4] भन्दि विकल्पविषादसत्यनिश्चयपश्चात्तापेषु च.
४९ संभाषणरतिकलहे रे अरे
५० हरे क्षेपे च
५१ थू कुत्सायाम्
५२ ऊ गर्हाविस्मयसूचनाक्षेपे
५३ पुणरुत्तं कृतकरणे
५४ हु खु निश्चयविस्मयवितर्के
५५ णवि वैपरीत्ये
५६ वेव्वे विषादभयवारणे
५७ आमन्त्रणे पेव्वे च
५८ वा सख्या मामि हळा हळे
५९ दे संमुखीकरणे
६० ओ पश्चात्तापसूचने
६१ अण णाइं नञर्थे
६२ निश्चयनिर्धारणे वले
६३ मणे विमर्शे
६४ माइ मार्थे
६५ अलाहि निवारणे
६६ लक्षणे जेण तेण
६७ ख्वोद्वापोताः
३८ उ ओ उपे
६९ प्रत्येकमः पाडिएक्कं पाडिक्कम्
७० स्वयमो अप्पणा
७१ एक्कसरिअं झडिति सम्प्रति
७२ इहरा इतरथा
७३ मुधा मोरउल्ला
७४ अइ ऐ
७५ उव पश्य
७६ इजेराः पादपूरणे
७७ प्याद्याः

इति प्राकृतव्याकरणसूत्रपाठे सवार्तिके
द्वितीयस्याध्यायस्य प्रथमः पादः.

---

1 चिअच्च ए 2 केवलानन्तर्ययोर्णवरणवरि 3 हन्द 4 हन्दि

१ वीप्सार्थात्तदचि सुपो मस्तु
वा-मः सर्वादेश इति वाच्यम्
२ अमः
३ श्लुग्जश्शसोः
४ णशामः
५ हिंहिङ्हि मिसः
६ हिन्तोत्तोदोदु ङसिस्
७ सुन्तो भ्यसः
८ दिर्दोत्तोदु ङसौ
वा-णवि दीर्घो नेति वाच्यम्
९ सोर्लुक्
१० ङसोऽस्त्रियां सर्
११ ङेर्मिर्
१२ अतो डो विसर्गः
१३ सोः
वा-डो पुंस्येवेति वाच्यम्
१४ वैतत्तदः
१५ ङसेः श्लुक्
१६ ङेर्डे
१७ ङसिगो हि
१८ टो डेणल्
१९ दिर्वा भ्यसि
२० शस्येत्
२१ भिस्भ्यस्सुपि
२२ इदुतोर्दिः
२३ चतुरो वा
२४ पुंसो जसो डउ डओ
२५ डवो उतः
२६ णो शसश्च
२७ नृनपि ङसिङसोः
वा-दिर्दोत्तोदुङसाविति दीर्घो नेति वाच्यम्.
२८ टो णा
२९ श्लुगनपि सोः
३० मङ्लुगसम्बुद्धेर्नपः
वा-अदन्ताल्लुङ्नेति वाच्यम्
३१ श्रिर्शिशिङ् जश्शसोः
३२ शो शु स्त्रियां तु
वा-यथासंख्यं नेति वाच्यम्.
संज्ञायामरोऽन्त्यादेशो वाच्यः.
३३ आदीतस्सोश्च
३४ ङसेः शशाशिशे
३५ टाङिङसाम्
३६ नातः शा
३७ पुंसो जातेर्ङीब्वा
३८ ङीप्प्रत्यये
३९ हरिद्राच्छाया
४० किंयत्तदोऽस्वमामि सुपि
४१ स्वसृगाङ्डाल्
वा-सम्बुद्धौ डेत्वप्रतिषेधो वाच्यः
४२ डोश्लुकौ तु सम्बुद्धेः
४३ ऋदन्ताङ्डुः
४४ नाम्नि डरम्
४५ टापो डे
४६ ह्रस्वलीदूतः
४७ क्विपः
वा—सोमपा इत्यादीनां ह्रस्वो वाच्यः
४८ उद्दतां स्वस्वमामि
४९ आरस्सुपि

५० मातुरा अरा

वा–सम्बुद्धौ आअराअरयाणां प्रतिषेधो वाच्यः.

अदादन्तौ जननीदेवतावाचिनाविति व्यवस्था वाच्या.

आमीत्वोत्वे वाच्ये

इत्वोत्वविषयेप्याअरादेशौ न स्तः

५१ संज्ञायामरः

५२ आ सौ वा

आरः सुपि संज्ञायामर इत्यनयोः प्रवृत्तौ नायं प्रवर्तत इति वाच्यम्.

५३ राज्ञः

वा–सावाकारोऽन्तादेश एवेष्यते

५४ टो णा

५५ जश्शस्ङसिङसां णोश्

५६ णोणाङिष्विदना जः

५७ इणममामा

५८ मिस्भ्यसां सुप्स्त्रीत्

५९ ङस्ङसिटां णोणोर्ङण्

६० पुंस्याणो राजवच्चानः

वा—आणादेशे राज्ञ इत्यादिप्रतिषेधं केचिदिच्छन्ति,

६१ टो वाऽऽत्मनो णिआणइआ

वा—आणादेशे णिआणइआदेशौ केचिन्नेच्छन्ति.

६२ सर्वादेर्जस्मोऽतो डे

६३ ङेर्थस्सिंम्मि

६४ अनिदमेतदस्तु किंयत्तदः स्त्रियां च हिम्.

६५ आमां डेसिम्

६६ किंतद्भ्यां सश्

६७ किंयत्तद्भ्यो ङस्

६८ ईतः से सार्

६९ ङिरिआडाहेडाला काले

७० म्हा ङसेः

७१ किमो डीसङिणो

७२ डो तदस्तु

७३ इदमेतत्किंयत्तद्भ्यष्टो ङिणा

७४ क्वचित्सुपि तदो णः

७५ त्रतसि च किमो ल्कः

७६ इदम इमः

७७ पुंसि सुना त्वयं स्त्रियामिमिआ

७८ अत्सुस्सिंहिस्से

वा—इदमः सर्वादेशो वाच्यः

७९ टासंसि णः

८० इहेणं ङ्यमा

८१ न त्थः

८२ क्लीबे स्वमेदमिणमिणमो

८३ किं किम्

८४ तदिदमेतदां सेसिं तु ङसाऽऽमा

८५ एत्तो एत्ताहे ङसिनैतदः

८६ थे डेल्

८७ एतो म्मावदितौ वा

८८ सुनैस इणमो इणम्

८९ तस्सौ सोऽक्लीबे तदश्च

९० सुप्यदसोऽमुः

९१ अहद्वा सुना

९२ इआओ म्मौ

इति प्राकृतव्याकरणसूत्रपाठे सवार्तिके द्वितीयस्याध्यायस्य द्वितीयः पादः.

---

१ युष्मत्सुना तुवं तुं तुमं तुह
वा—स्वम्भ्यां सह युष्मदस्तं वाच्यम्.
२ अमा तुमे तुए च
३ जसा भेतुब्भेतुय्हेउय्हेतुब्भ
४ शसा वो च
५ टा भेतेदेदितुमंतुमइ
६ ङिटाभ्यां तुमए तुइ तुए तुमाइ तुमे
७ तुब्भ[1]तुहित्तोतुय्ह ङसिना
८ तुतइ ङिम्ङसौ
९ तुवतुमतुहतुब्भ
१० भिसा भेतुब्भेह्युब्भेहि उय्हेहि तुय्हेहि
११ उम्होय्हतुय्हतुब्भ भ्यसि
१२ तुब्भोब्भोय्हतुय्हतइतुहंतुहतुम्हतुव-- तुमतुमेतुमाइतुमोदेतेदितुइए ङसा.
१३ तुम्हाण तुब्भं तुब्भाण तुमाण तुवाण तुहाण तुब्भ वो भे त्वामा.
वा—युष्मदस्मदोरामि णकाराणां सुबादेशत्वमिष्यते.
१४ वा ब्भो म्हज्झौ
१५ अस्मत्सुनाम्हिहमहअमहमहम्मि- अम्मि.
१६ मो भे वअं जसा
१७ अम्हे अम्हो अम्ह
१८ णे च शसा
१९ मंणेणंमिमिमंममममम्यहंमम्हअम्ह अमा.
२० मि मइ ममाइ मए मे ङिटा
२१ ममं णे मआइ ममए टा
२२ णे अम्हेह्यम्हाह्यम्हेअम्ह भिसा
२३ मइ मम मह मज्झ ङसौ
२४ अम्ह मम भ्यसि
२५ अम्हं मंज्झं मज्झ मः मह महं मे च ङसा.
२६ अम्हे अम्हो अम्हाण ममाण महाण मज्झाण मज्झाम्हाम्हं णे णो आमा.
२७ अम्ह मम मह मज्झ ङिपि
वा—अम्हादीनामत्वात्वे वाच्ये
२८ चतुरो जश्शस्भ्यां चउरो चत्तारो चत्तारि.
२९ तिण्णि त्रेः
३० दोण्णि दुवे वेण्णि द्वेः
३१ दो वे टादौ च
३२ ति त्रेः
३३ ण्हण्हं संख्याया आमोऽविंशतिगे
३४ द्विवचनस्य बहुवचनम्
३५ ङेसो ङम्
३६ तादर्थ्ये ङेस्तु
३७ वधाड्डाइ च
३८ क्वचिदसादेः
३९ अस्टासोर्ङिप्
४० ङसिसष्टास् च
४१ ङिपोऽस्
४२ लुक्क्यङो[2]र्यस्य तु

इति प्राकृतव्याकरणसूत्रपाठे सवार्तिके द्वितीयस्याध्यायस्य तृतीयः पादः.

——

१ लटस्तिप्ताविजेच्
२ सिप्स्थास्सेसि

1 तुहिंतो. 2 र्यस्य.

३ मिर्मिबिटौ

वा—क्वचिदस्येकारलोपो वाच्यः

४ झिझ्झौ न्तिन्तेइरे

वा—इरे क्वचिदेकत्वेऽपि वाच्यः

५ थध्वमित्थाहचौ

वा—क्वचिदेकत्वेऽपीत्था वाच्यः

६ मोममुमस्महिङ्

७ अत एवैच्से

८ स्वस्तेम्हेम्होम्हि ममोमिना

९ सिना त्सि

१० तिङात्थि

११ णिजदेदावावे

(इष्टिः) धावयतेरावे नेष्यते

१२ गुर्वादेरविर्वा

१३ भ्रमेराडः

१४ लुगाविल् भावकर्मक्ते

१५ अदेल्लुक्यात्खोरतः

१६ तु मौ

१७ मोममुष्विच्च

१८ क्ते

१९ एच्च क्त्वातुम्तव्यभविष्यति

२० वा लड्लोट्छतृषु

वा—जयतेरत्वं नेति वाच्यम्, क्वचिदात्वं वाच्यम्

२१ ज्जा ज्जे

२२ भूतार्थस्य सिहिअहि

२३ हल ईअ

२४ अहेस्स्यासी तेनास्तेः

२५ भविष्यति हिरादिः

२६ हस्सा मिमोमुमे वा

वा—हसतेर्हा नेति वाच्यम्

२७ हिस्साहित्था मुमोमस्य

२८ डच्छदशिगमइजादौ हिलुक्च वा

२९ भिदिविदिच्छिदो डेच्छ

३० डोच्छ वचिमुचिरुदिश्रुभुजः

३१ डं मेश्छात्ततः

३२ कृदो हम्

३३ [1] सर्

३४ त्विज्जाल्लिङः

३५ एकस्मिन्प्रथमादेर्विध्यादिषु दुसुमु

३६ बहौ न्तुहमो

३७ सोस्तु हि

३८ लुगिज्जहीज्जस्विज्जेतः

३९ लङ्लृटोश्च जर्जारौ

वा—सर्वलकाराणामेतौ वाच्यौ

(इष्टिः) द्वित्वं सर्वत्र हल एवेष्यते

४० मध्ये चाजन्तात्

४१ माणन्तौल्च लृङः

४२ शतृशानचोः

४३ स्त्रियामी च

४४ घेत्तुंतव्यक्त्वासु ग्रहेः

४५ अन्त्यस्य वचिमुचिरुदिश्रुभुजां डोल्

४६ ता ठो दृशः

४७ आ भूतभविष्यति च कृञः

(इष्टिः) अति नेष्यते

४८ नमोद्विजरुदां वः

४९ चर्नृतिमदिव्रजाम्

५० छर्गमिष्यमासाम्

---

[1] सं.

५१ रुधेः न्धम्भौ
५२ युधबुधगृधक्रुधसिधमुहां च ज्झर्
५३ जर् स्विदाम्
५४ छिदिभिदोर्न्दः
५५ ढः कथिवर्धाम्
५६ वेष्टेः
५७ समुदो लर्
५८ स्वादधावि लुक्
५९ रस्सृजि
६० डस्पीदपति
६१ मीलेः प्रादेर्द्वे तु
६२ चलस्फुटे
६३ शकगे
६४ उवर्णस्यावः
(इष्टिः) अनेकाल्प्ययमन्त्यादेश एवे-ष्यते.
६५ योरेङ्
६६ अर उः
६७ अरिर्वृषाम्
६८ रुषगेऽचो दिः
६९ हलोऽक्
७० त्वनतः
७१ अचोऽचाम्
७२ णो हश्च चिजिपूश्रुधूस्तुहुलूभ्यः
७३ वभाविकर्मणि तु यग्लुक्
७४ मर्चेः
७५ अन्त्यस्य हनखनोः
७६ दुहलिहवहरुहां भरत उच्च
७७ दहेर्झर
७८ बन्धो न्धः
७९ रुध उपसमनोः
८० द्वे गमिगे
(इष्टिः) रुदः कृतवत्वस्यैवेष्यते
८१ ईर हृकृतृज्राम्
८२ [1] अर्जेर्विढप्पः
८३ आरभ आढप्पः
८४ णप्पणज्जौ ज्ञः
८५ सिप्पस्सिचस्निहोः
८६ वाहिप्पो व्याहृः
८७ ग्रहेर्घेप्पः
८८ छिप्पः स्पृशनेः
८९ दीसल् दृशेः
९० वचेरुच्चः
९१ ईअइज्जौ [2] यक्
९२ स्पृहदूओस्सिहदूमौ णिचोः
९३ निवृपतोर्णिहोडो वा [3]
९४ धवलोद्धटोर्दुमोग्गौ
९५ भ्रमवेष्टयोस्तालिअंट[4]वरिआलौ
९६ रावो रञ्जयतेः
९७ तुलिडोल्योराहामरंखोलौ
९८ आसंवस्संभावेः
९९ अर्पेरल्लिव[5]पवणामचच्चुप्पाः
१०० गुलु[6]गुच्छोत्थङ्घोव्वेल्लोलाला उन्नमेः
१०१ प्रकाशेर्णुव्वः
१०२ णिहुवः कमेः
१०३ नशेर्विप्पगालनासवपलावहारव-विउडाः.
१०४ वल आरोपेः

[1] अर्जेर्वि. [2] यकः. [3] णिह्रोडो वा. [4] परि. [5] पणाम. [6] गुञ्छो.

१०५ विरेचेरोलुड्डोलुड्डपलत्थाः
१०६ कम्पेर्विच्छोलः
१०७ रोमन्थे रोग्गालवग्गालौ
१०८ प्लावेरोव्वालपव्वालौ
१०९ मिश्रेर्मीसालमेळवौ
११० छादेर्नूमनुमोव्वालढक्कपव्वालसन्नुमाः
१११ [1] अच्चुक्कवोक्कौ विज्ञापेः
११२ परिवाडो घटेः
११३ दृशेर्दावदक्खवदंसाः
११४ प्रस्थापेः [2] पेट्टवपेण्डवौ
११५ यापेर्जवः [3]
११६ [4] विकोशेः पक्खोडः
११७ गुण्ठ उद्धूलेः
११८ ताडेराहोडविहोडौ
११९ ह्लादेरवअच्छोऽणिचश्च
१२० निमेर्निम्मवणिम्माणौ
१२१ आलीङो अल्लिः
१२२ क्रियः कीणः
१२३ केर्चे वेः
१२४ स्स्यस्समः ग्वा
१२५ ध्मो धुमोद
१२६ स्थष्ठकुक्कुरौ
१२७ निरप्पठक्काचिट्ठाः
१२८ विस्मरः पम्हस[5]विसरौ
१२९ कृपो णिजवहः
१३० जाणमुणौ ज्ञः
१३१ धो दहश्रदः
१३२ स्पृशिच्छिवालुक्खपरिसफासफंसालि-
हच्छिहान्
१३३ फक्कस्थक्कः
१३४ श्लाघः सलाहः
१३५ दिप्पस्तृपः
१३६ मियो भाभिहौ
१३७ भुजेरण्णभुञ्जकम्मसमाणचमडचड्डु-
जेमजिमान्.
१३८ जृम्भेरवेर्जम्भा
१३९ जुञ्जजुज्जजुप्पा युजः
१४० जनो जाजम्मौ
१४१ [6] उद्धल्ल उच्छलेः
१४२ घूर्णेर्घुम्मपहल्लघोलघुलाः
१४३ लिंपो लिपः
१४४ शदेर्झडपक्खोडौ
१४५ नेस्सदेर्मज्जः
१४६ पुच्छः पृच्छः
१४७ गण्ठो ग्रन्थेः
१४८ तुवरजअडौ त्वरेः
१४९ अतिङि तुरः
१५० तूरः शतृनिङोः [7]
१५१ पर्यसेः पलट्टपलोट्टपलहत्थान्
१५२ मृष्ठातेर्मलपरिहट्टखुड्डुपन्नाडचड्डमड्डु-
मडाः.
१५३ दृशिरो अक्खणिअच्छअवअच्छचज्जाव-
अज्झपुलअपुलोअदेक्खावअक्ख-
पेच्छावआसपासणिअसच्चवाव---
क्खान्.
१५४ क्षरपज्झरपच्चड्डुखरणिहुलणिब्बलाः
क्षरेः.
१५५ कासेरवाद्धासः.

---

1 आमोक्कपोक्कौ. 2 पट्टव. 3 जपः. 4 विकासेः. 5 वीसरौ. 6 उत्थल्ल. 7 तिङि.

